# शिक्षासन्देशः
# SHIKSHA SANDESHAH

संयुक्ताङ्कः – 5-6

## शिक्षासङ्कायस्य वार्षिकी पत्रिका
Annual Magazine of Faculty of Education

सत्रम् – 2017-18, 2018-19 च




**राष्ट्रियसंस्कृतसंस्थानम्**
जयपुरपरिसरः
त्रिवेणीनगरम्, गोपालपुरा-बाईपास, जयपुरम्-302 018
दूरभाषः 2761115 (का.)
ई-मेल : principaljp.in@gmail.com
वेबसाइट : www.rsksjaipur.ac.in

# शिक्षासन्देशः

(शिक्षासङ्कायस्य वार्षिकी पत्रिका)
(UGC Approved Journal No. 40973)

ISSN : 2393-8935

संयुक्ताङ्कः – 5–6

सत्रम् – 2017–18 एवं 2018–19

प्रो. पी.एन्. शास्त्री
कुलपति
राष्ट्रिय संस्कृत सस्थान
मानित विश्वविद्यालय
(मानव संसाधन विकास मंत्रालय, भारत सरकार के अधीन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं
प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)



Prof. P.N. Shastry
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)



## * कुलपतिवाक् *

**नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमाद्**
**व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत्।**
**शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतं**
**तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः।।**

शारदातिलकम् 1/1

पद्मासनापादपद्मपरागपतङ्गमाः प्रत्यग्रव्यग्रमनस्कप्रखरमेधाधराः पदार्थपीयूषपानाप्यायितपण्डिताः प्रसादवागधिष्ठानपुष्कलपरायणाः भारतीपदभृतस्वान्तःकरणाः वागनुप्राणिताः अयि संस्कृतानुरागिणः विद्वांसः विद्यार्थिनश्च! परमप्रमोदास्पदमिदं यत्परुत्परारीव नवविचारोन्मेषविमर्शगर्भः 'शिक्षासन्देशः' प्रकाशमाप्नोति पुनरपि। संस्कृतशिक्षायाः विविधायामेषु विद्वद्गवेषकैः विहितविचाराः विमर्शाश्च पत्रिकायाः संयुक्ताङ्केऽस्मिन् साकारीजायन्त इति विज्ञायामन्दमानन्दमनुभवामि। विशेषतः व्यावसायिकदृष्ट्या संस्कृतशिक्षकाणां विकाससम्भावनाः द्रष्टुं गवेषकाणां विचारान् व्यावहारिकपरामर्शांश्च विज्ञाय संस्कृतस्याभिनवविकासार्थं बलवत्तरामाशां जाग्रहीति मे मानसपटलम् । संस्कृतक्षेत्रे कार्यं कुर्वतां पक्षतो नूनमेवापेक्ष्यन्ते ईदृशाः आनुष्ठानिकायासाः। सन्त्यत्रानेके लेखाः गवेषणगर्भाः यैः विधेयदिशाप्रतीक्षकाः पाथेयकणानादातुमर्हिष्यन्ति।

साम्प्रतिककालस्याकाङ्क्षारूपेणैतादृशाः सारस्वतोद्यमाः सुतरामुपकारकाः सन्तीत्यानुशांसिकवचसावसरेऽस्मिन् परिसरप्राचार्येण सह सम्पादन–पुनर्वीक्षणादिकर्मसु प्रत्यक्षाप्रत्यक्षसहायकान् भूरिशोऽभिनन्द्य साधुवादं प्रदाय सर्वकल्याणं कामये।

इत्थं विदां वचनकरः

प.ना.शास्त्री

**प्रो. परमेश्वरनारायणशास्त्री**
कुलपतिः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः), नवदेहली।

**प्रो. अर्कनाथ चौधरी**
प्राचार्यः
**राष्ट्रिय संस्कृत संस्थान**
मानित विश्वविद्यालय
(मानव संसाधन विकास मंत्रालय, भारत सरकार के अधीन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं
प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)
**जयपुर परिसर, जयपुर**



**Prof. Arknath Chaudhary**
Principal
**RASHTRIYA SANSKRIT SANSTHAN**
Deemed to be University
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)
**Jaipur Campus, Jaipur**



# ❋ प्राचार्यसन्देशः ❋

**शिलष्टा क्रिया कस्यचिदात्मसंस्था**
**संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां,**
**धुरि प्रतिष्ठापयितव्य एव॥**

मालविकाग्निमित्रम् 1/16

संस्कृतकाव्यनाटकादिषु प्रसङ्गवशात् शिक्षकशिक्षायाः तत्त्वानि शिक्षकस्य शिष्यस्य वा विशेषताः प्रदर्शिताः सन्ति। प्राचीनशिक्षाप्रणाली विशिष्टा आसीत्। इदानीमपि अस्याः आवश्यकता समाजे अनुभूयते। संस्कृतशिक्षायां प्राचीनशिक्षायाः स्वरूपं सर्वदा परिलक्षितं भवति। वर्तमानकालेऽपि परम्परागतशिक्षाप्रणाल्याः प्रासङ्गिकता वर्तते। परम्परागतशिक्षायां संस्काराणाम्, आध्यात्मिकभावनानां चारित्रिकगुणानाञ्च समावेशो वर्तते। एतेषामाधारेण मानवो न केवलं सन्तोषमनुभवति अपितु व्यावसायिककौशलं दक्षतां च प्राप्नोति।

जयपुरपरिसरस्य शिक्षाविभागपक्षतः 'शिक्षासन्देशः' इत्याख्यायाः वार्षिकपत्रिकायाः संयुक्ताङ्कः प्रकाश्यत इति भाविसंस्कृतशिक्षकाणामभिप्रेरकोऽयं विषयः। पत्रिकायां प्राचीनार्वाचीनशोधपत्राणां समावेशो नूनमेव लाभाय भविष्यति। शिक्षासन्देशः समेषां विद्वज्जनानां शुभाय प्रवर्धतामिति कामये। सर्वेभ्यः लेखकेभ्यः आचार्येभ्यः शोधच्छात्रेभ्यः सम्पादकेभ्यः, भाविसंस्कृतशिक्षकेभ्यश्च शुभाशिषः लसन्तु।

**प्राचार्य**

# * सम्पादकीयम् *

एतर्हि खलु प्रफुल्लमल्लिकामुक्तावलीं दरीधरीति मे चेतो यत् विद्याधिष्ठावाग्देवीपदपुण्डरीकसन्निधिकृपापीयूषमहापारावारबोभूष्यमाणे जयपुरस्थे राष्ट्रियसंस्कृतसंस्थानमित्यस्मिन् परिसरे सौभाग्येन मम विभागाध्यक्षत्वे शिक्षाशास्त्रविभागे ''शिक्षासन्देशः'' इत्यस्याः पत्रिकायाः संयुक्ताङ्कस्य (2017-18, 2018-19 च) सम्पादनं प्रकाशनञ्च जायते।

वस्तुतः विभागीयपत्रिकायाः प्रकाशनं विभागीयगतिविधीनाम् अविभाज्यमङ्गं भवति। यतोहि अधिस्नातकस्तरीय-विद्यावारिधिस्तरीय-छात्राणामधिक्ये [illegible] ोऽयं विशिष्टं स्थानं धरति संस्थानस्यान्येषु परिसरेषु। तथैव वरिष्ठाणामाचार्याणां विद्यमानताकारणे [illegible] ं विभिन्नशोधसंगोष्ठीनामायोजनं प्रचलत्येव। शिक्षाशास्त्रं विस्तृतं शास्त्रम्। अयं च मनोविज्ञानदर्शनइतिहासादिभिः सम्बन्धितः विषयः।

विगतसत्रे अपरिहार्यकारणात् शिक्षासन्देशस्य प्रकाशनं नाभवत्, एतदर्थम् अस्मिन् सत्रे अस्याः शोधपत्रिकायाः संयुक्ताङ्कः संस्कृतानुरागिणां शिक्षकाणां पाठकानाञ्च पुरतः प्रस्तुमः। अङ्केस्मिन् संस्कृत-हिन्दी-आङ्गलभाषासु च निबद्धाः शोधच्छात्राणां शिक्षकप्रशिक्षकाणाञ्च शोधलेखाः समाहिताः सन्ति। शोधलेखाः परम्परागतशिक्षाप्रणाल्याधारिताः संस्कृतशिक्षा व्यावसायिकदक्षताधारिताश्च सन्ति।

अस्माकं परं सौभाग्यमस्ति यद् राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिमहोदयानां मान्यमान्यानां प्रो. पी.एन. शास्त्रिमहोदयानाम् आशीर्वादात्मिकया मङ्गलवाचा इयं शोधपत्रिका समलङ्कृता वर्तते, एतदर्थं वयममीषामाधमर्ण्यं बिभृमः। परिसरप्राचार्याणां प्रो. अर्कनाथचौधरीमहोदयानां सदिच्छया अस्य संयुक्ताङ्कस्य प्रकाशनं पूर्णतां याति, एतदर्थं प्राचार्याणां कार्तज्ञ्यं व्याहरामः।

अस्याः शोधपत्रिकायाः प्रकाशनादिकार्ये विभागस्य सर्वेषामचार्याणां, सहायकाचार्याणां, शोधच्छात्राणां, परिसरस्य कार्यालयीयकर्मचारिणाञ्च महद्‌योगदानं वर्तते, एतदर्थं ते सर्वेप्यत्र समभिनन्दनीयाः सन्ति।

अस्मच्छिक्षाविभागीयाः सर्वेऽपि सहायकाचार्याः धन्यवादार्हाः सन्ति, येषां कुशलसम्पादने अस्याः शोधपत्रिकायाः प्रकाशनं जातम्। लेखेषु प्रकटिताः विचाराः लेखकानां स्वकीया एव, तत्र सम्पादकानां सम्मतिः अनिवार्या नास्ति। पाठकानां विचाराः समीक्षाश्च सदैव सादरमामन्त्र्यन्ते।

पुनः प्रकाशनकार्यस्यास्य सम्पादने प्रत्यक्षाप्रत्यक्षरूपेण सर्वेषां सहयोगिनाङ्कृते धन्यवादं वितरन्तः विद्वच्चरणान् प्रार्थयामहे यद् यदि मतिविभ्रमात् क्वचित् त्रुटयः स्युः तर्हि ताः परिहृत्य सारमेव गृह्णन्तु श्रीमन्त इति। गोविन्ददेवस्यानुकम्पया 'शिक्षासन्देशो'ऽयम् उत्तरोत्तरं साफल्यमवाप्स्यतीत्याशास्महे।

**सम्पादकः**

# ✻ अनुक्रमणिका ✻

***

# परम्परागतशिक्षाप्रणाल्याः दशा दिशा च

## ( वर्तमानकाले तासां प्रासङ्गिकतायाः सन्दर्भे )

प्रो. सन्तोषमित्तल

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**[1]

उक्तमनुवचनं देववाण्यां प्रमाणभूतं विद्यते। कस्यापि देशस्य राष्ट्रस्य समाजस्य वा सांस्कृतिकबौद्धिकवैज्ञानिकप्रगतिः तस्य देशस्य राष्ट्रस्य समाजस्य वा शैक्षिकस्थिते उपरि आधारिता भवति। शिक्षया समाजस्य निर्माणं भवति। समाजस्य विकासाय एतदावश्यकं भवति यत् प्रत्येकं व्यक्तेः सुगठितविकासः स्यात्। एतदर्थमावश्यकं वर्तते यत् तस्मिन् देशे शिक्षायाः सम्यक् प्रबन्धो भवेत्।

परम्परागतशिक्षाप्रणाली गुरुशिष्यसम्बन्धयोः आधारिता आसीत्। पितरौ स्व पुत्रं पुत्रीं च शिक्षायाः कृते गुरुकुलेषु प्रेषयतः स्म। तत्र आवास-भोजन-शिक्षादीनां व्यवस्था आचार्येण क्रियते स्म। शिक्षा निःशुल्कम् आसीत्। छात्राः श्रद्धया अनुशासनेन सह शिक्षां प्राप्नुवन्ति स्म। अभिभावकाः गुरुं प्रार्थयन्ते स्म–

**शिक्षा विभिन्दो अस्मै चत्वार्ययुता ददत्।**
**अष्टा परः सहस्त्रा।।**[2]

अर्थात् हे अज्ञाननाशक गुरु! अस्य छात्रस्य कृते चत्वारिंशतलक्ष अष्टसहस्त्राधिकशिक्षाणीयवस्तुनां ज्ञानं ददतु।

जना अपि प्रार्थनां कुर्वन्ति स्म–

**इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।**
**शिक्षाणो अस्मिन् पुरुहुत यामनि, जीवाः ज्योतिरशीमहि।।**[3]

हे अज्ञानविनाशकपरमैश्वर्यसम्पन्न-इन्द्र! यथा पितापुत्रेभ्यः बुद्धिं प्रददाति, कर्मणः शिक्षां ददाति तथैव भवन्तः अस्माकं बुद्धिविकासं कुर्वन्तु, शुभकर्मणां प्रेरणां ददतु, शिक्षया अस्माकम् अज्ञानं निवारयन्तु। तस्मिन् काले गुरुं प्रति विशिष्टादरभावोऽऽसीत्।

**शतपथब्राह्मणे उक्तम्–** 'मातृमान् पितृमानाचार्यमान् पुरुषोवेदः' तैत्तिरीयोपनिषदि उल्लिखितं वर्तते– 'मातृदेवोभव, पितृदेवो भव, आचार्य देवो भव।' चरकसंहितायामपि आचार्यस्य गुणानां वर्णनमस्ति–

**पर्यवदातश्रुतं पारिदृष्टकर्माणं दक्षं दक्षिणं शुचिं,**
**जितहस्तमुपकरणवन्तं, सर्वेन्द्रियोपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनु-**

**परस्कृतविद्यमनहंकृतमनसूयकमकोपनं क्लेशक्षमं**

**शिष्यवत्सलमध्यापकं ज्ञापनसमर्थं च इत्येवगुणोह्याचार्यः।**

वर्तमानकाले गुरुशिष्यसम्बन्धः विच्छिद्यते। गुरुशिष्ययोः व्यक्तिगतसम्बन्धं विना शिष्याः तस्य व्यक्तित्वेन शिक्षा कथं ग्रहीतुं शक्नुवन्ति। अद्य वरतन्तुकौत्स इव, कृष्ण-अर्जुनवत् गुरुशिष्यौ न दरीदृश्येते। सर्वत्र अगाधभ्रष्टाचारस्य स्वार्थपरतायाश्च वातावरणं दृग्गोचरी भवति आसु परिवर्तितपरिस्थितिषु शिक्षाप्रणाल्यापि परिवर्तिता।

भारतदेशः तु विश्वे परम्परागतशिक्षाप्रणाल्याः कृते सुविख्यातोऽस्ति। वैदिकसाहित्यस्यावलोकनेन ज्ञायते यत् 'Education for all' सर्वेषां कृते शिक्षा प्रदेया इयं भावना वेदेष्वपि दृश्यते-

**यथेमां वाचं कल्याणीमावदानी जनेभ्यः।**

**ब्रह्मराजत्याभ्यां शूद्राय चार्याय च स्वाय चारणाय।**

**प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे**

**कामः समृद्धयतामुप मादो नमतु।।**[४]

अर्थात् यथा अहं इयं कल्याणी वेदवाणी ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-स्त्री-समाजस्य समेषां वर्गाणाङ्कृते ददामि। तेऽपि मां वाञ्छन्ति, स्नेहम् अपि कुर्वन्ति तदवत् भवन्तः अपि सर्वेषां कृते वेदानां शिक्षां ददतु। सर्वेभ्यः प्रियाः भवन्तु। मम इयं कामना पूर्णा भवेत्, भवन्तः सिद्धयः प्राप्नुवन्तु।

येषां कृते मध्यकाले शिक्षायाः निषेधः सञ्जातः, वेदाः तु विशेषतः तेषां कृते कथयन्ति-

**इडे रन्ते हव्ये काव्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति।**

**एता ते अघन्ये नामानि देवेभ्योमा सुकृतं ब्रूतात्।।**[५]

उक्तमन्त्रेण ज्योते-सरस्वति-विश्रुति-आदिभिः शब्दैः ज्ञायते यत् वैदिककाले नारीणां शिक्षायाम् अधिकं बलमासीत्। ताः शिक्षां प्राप्य परिवारे समाजे च अधिकाधिकशिक्षायाः प्रसारः कुर्युः। इदमुद्देश्यं प्रमुखमासीत्। वर्तमानकाले सर्वशिक्षा अभियानेन उक्तशिक्षाप्रक्रिया प्रचलति। कतिपयवर्गविशेषस्य कृते आरक्षणमपि प्रदीयते, तेषां कृते शिक्षा निःशुल्कम् अपि वर्तते। खेदस्य विषयोऽयं वर्तते यत् केचन जनाः अस्य दुरुपयोगमपि कुर्वन्ति भगवद्गीतायामुल्लिखितमस्ति-

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।**

**तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्।।**[६]

आपस्तम्बसूत्रेणपि एतेषां विचाराणां पुष्टिर्भवति-

**धर्मचर्य्यया जघन्यो वर्णो पूर्वं पूर्वं वर्णमापद्यते जाति परिवृत्तौ।**

**अधर्मचर्य्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ।।**[७]

इत्थं नार्याः शूद्राश्च सर्वे वैदिकशिक्षायाः अधिकारिणः आसन्।

जीवनस्य परमलक्ष्यं योगाभ्यासस्य अष्टाङ्गानां पालनं कृत्वा आत्मतत्त्वमवगम्य परमानन्दपरमात्मनः प्राप्तिवकरणमासीत् यथोक्तम्–

**तस्मिन् हिरण्यमयकोशे त्र्यरे त्रिप्रतिष्ठिते।**

**तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः।।**[८]

अर्थात् उत्तमशक्तिभिः सम्पन्न ज्ञानकर्मोपासनदिभिः प्रतिष्ठितशरीरे यत्पूजनीयात्मतत्त्वमस्ति तदेव ब्रह्मवेत्ता, तं प्राप्य आनन्दस्यप्राप्तिरेव शिक्षायाः परमुद्देश्यमासीत्। वर्तमानकालेऽपि २०१५तः सम्पूर्णविश्वे जूनमासस्य एकविंशति दिनाङ्के विश्वयोगदिवसः समायोजाते। अनेन सम्पूर्णविश्वे योगं प्रति सकारात्मकचिन्तनं प्रचलति, जनाः स्व दिनचर्यायाम् योगस्य अभ्यासमपि कुर्वन्ति।

'बालकानां सर्वाङ्गीणविकासकरणं' इदं वर्तमानशिक्षायाः प्रमुखम् उद्देश्यमस्ति। ईदृशमेव वर्णनं वेदेष्वपि अस्ति यथा–

**वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि,**

**श्रोतं ते शुन्धामि नाभिं ते शुन्धामि मेढ्रं ते शुन्धामि,**

**पायं ते शुन्धामि चरित्राँस्ते शुन्धामि।।**[९]

अर्थात् भो शिष्य! अहं भवते ईदृशीं शिक्षां दास्यामि यया भवतां वाणी-प्राणशक्ति-चक्षु-कर्ण-नाभि-जनेन्द्रिय-व्यवहारादयः शुद्धाः भविष्यन्ति।

शिष्यस्य सर्वाणि अङ्गानि पुष्टानि स्युः एते विचारा अपि वैदिककाले आसन् यथा–

**मनस्त आप्यायताम्, वाक्त आप्यायताम्, प्राणस्त आप्यायताम्।**
**चक्षुस्त आप्यायताम्, श्रोतन्त आप्यायताम्। यत्ते क्रूरं यदास्थितम् तत्त आप्यायताम्, निष्ट्यायताम् तत्ते शुध्यतु शमहोभ्यः। ओषधे त्रायस्व! स्वधिते मैनं हिंसीः।।**[१०]

अर्थात् भो शिष्य! शिक्षया भवतां मानसिकविकासो भवेत्, प्राणशक्तिः सुदृढा भवेत्, भाषणे समर्थः स्यात्, उत्तमदृश्यानां दर्शने सबलो स्यात्, श्रवणे कुशलो भवेत्, व्यवहारे याः दुष्टताः दुर्बलताश्च सन्ति तासां परिहारो भवेत्। शिक्षया भवतां प्रतिदिनं शुभं भवेत्। हे प्रवराध्यापक! शिष्यस्य रक्षां कुरु, अनावश्यकरूपेण मा ताडयन्तु। हे प्रशस्ताध्यापिके! शिष्यायाः रक्षां कुरु, अनावश्यकरूपेण मा ताडयन्तु। आङ्ग्लभाषायामपि सुप्रसिद्धं वर्तते– 'Healthy Mind in a healthy body.'

आधुनिककालेऽपि बालकेन्द्रितशिक्षा वर्तते। मुक्त्यात्मकानुशासनस्य व्यवस्था शिक्षासंस्थानेषु वर्तते। किन्तु अस्य दुरुपयोगः विद्यालयेषु, महाविद्यालयेषु विश्वविद्यालयेषु च प्रचलति एतादृशी स्थितिः परम्परागतशिक्षाप्रणाल्यां न आसीत्।

शिष्यत्व-अधिकारी कः? अस्याः शंकायाः समाधानाय मन्त्रः अस्ति–

**व्रतेन दीक्षामाप्नोति, दीक्षयाप्नोति दक्षिणाम्।**

**दक्षिणा श्रद्धामाप्नोति, श्रद्धया सत्यमाप्यते।।**[११]

अर्थात् ये बालक-बालकाः, नर-नार्यश्च शिक्षां प्राप्तुमिच्छन्ति ते ब्रह्मचर्यपालनं कुर्युः विनम्रशीलाः श्रद्धावन्तश्च स्युः। तदैव ते शिष्यत्वस्य अधिकारिणः भविष्यन्ति। अन्ते विवेकशीलाः भूत्वा सत्यं प्राप्नुवन्तु।

धर्मानुगुणं जीवनस्य निर्माणमेव शिक्षायाः उद्देश्यम् आसीत् महर्षिकणादमहाभागेन धर्मस्य लक्षणं दत्तम्-

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।।**[१२]

येन जगति सर्वथा उन्नतिर्भवेत् अन्ते च मोक्षस्य अपि सिद्धिर्भवेत् सैव धर्मः। यया मोक्षाधिगमः सैव विद्या। उपनिषत्सु शिक्षायाः अर्थो वर्तते ज्ञानं विद्या वा। सा विद्या द्विधा परा अपरा चेति। उभयोः प्राप्तिरेव शिक्षा। भौतिकज्ञानं लोकव्यवहारज्ञानञ्च अपराविद्यया सम्पद्यते। आत्मज्ञानप्राप्तिरेव पराविद्यायाः उद्देश्यम्। उक्तम् च-

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।।**[१३]
**प्रतिबोधविदितं मतममृतत्वं हि विन्दते।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्।।**[१४]

विद्यया 'श्रेयस्' 'प्रेयस्' च उभयोः प्राप्तिर्भवति। अतएव भूयो भूयो निर्दिश्यते- 'सा विद्या या विमुक्तये' विद्यैव ज्ञानावप्ति साधनम्। ज्ञानेनैव ब्रह्मपथस्य साधुदर्शनात् तदभिमुखत्वम्, तेन च मोक्षाधिगमः। एतदेवाभिप्रेत्य प्रोच्यते 'ऋते ज्ञानान्न मुक्तिः' अपि च 'ज्ञात्वा देवं मुच्यते सर्वपाशैः'। इत्थं यदाज्योतेः प्राप्तिर्भवति तदा मोक्षस्य मार्गं स्वयमेव प्रशस्तं भवति। बृहदारण्यकोपनिषदि प्रार्थना वर्तते- असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मामृत गमय[१५]।

लॉर्ड मैकाले महोदयस्य चिन्तनेन वर्तमानकाले अपराविद्यायाः, प्रेयस् इत्यस्य च प्राधान्यं वर्तते। केवलं जीविकोपार्जनाय क्षमतोत्पादनमिति शिक्षायाः मुख्यमुद्देश्यं वर्तते। जीविकोपार्जनस्य अनुपलब्धता सर्वत्र भ्रष्टाचरणं स्वार्थाचरणञ्च छात्रान् अनुशासनोल्लङ्घनार्थं प्रेरयति। अनुशासनहीनतायाः कारणानि अनेकानि सन्ति यथा-दोषपूर्णा शिक्षाप्रणाली, दोषपूर्णापरीक्षा प्रणाली, शिक्षकछात्रयोः मध्ये पवित्र-सम्बन्धाभावः, शिक्षणसंस्थासु राजनीतेः प्रवेशः, संरक्षकाणाम् औदासीन्यं परिवारस्य समाजस्य च दूषितं वातावरणमादयः। अद्यतनः छात्रः त्रिंशद्वर्षीयेभ्यः छात्रेभ्यः तुलनायां बहुतरः सूचनाधारकोऽस्ति, तथापि अनुशासनहीनता निराशा विफलता, भग्नाशा, श्रमं प्रति अनास्था इत्यादयः छात्रेषु अधिकमात्रायाम् अवलोक्यते। एतेषां निवारणाय संस्कारक्षमशिक्षायाः महती आवश्यकता वर्तते। यथोक्तम्-

**युवा स्यात् साधुयुवाध्यापकः आशिष्ठो द्रढिष्ठो बलिष्ठो।**[१६]

एतस्मात् कारणात् आधुनिकपरिस्थित्याम् अध्यापके विद्वत्ता-नीतिमत्ता-शासनक्षमतेत्यादीनां गुणानां सन्निवेशः स्यात्।

बालकः कदा पुरुषो भवति? अस्य प्रश्नस्य उत्तरमस्ति- यदा अनेन शरीरेण पूर्णतः सर्वेषां पापानां निवारणं भवति तदा बालकः वास्तविकरूपेण पुरुषत्वं प्राप्नोति। उक्तञ्च-

**यत पुरः सर्वान् पाप्मनः ओषति तस्मात् पुरुषः।**[१७]

इत्थमेव यदा त्रिविधदुःखेभ्यः बालकस्य मुक्तिः भवति तदा सः पुरुषो भवति यथा-

**अथ त्रिविध दुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।**[१८]

वर्तमानकाले शिक्षणे दृश्यश्रव्योपकरणानां बहुमहत्त्वमस्त। तत्रापि सङ्गणकस्य मूलाधारः संख्या गणना विद्यते। संख्या गणना सर्वप्रथमं वेदेषु दृश्यते। शून्यस्याविष्कारमपि भारते एवाऽभवत्। सङ्गणकयन्त्रं सर्वाधिकं संस्कृतभाषायामेव आत्मसातं करोति, इदं वैज्ञानिकाः कथयन्ति स्वीकुर्वन्ति च, किन्तु परम्परागतशिक्षाकाले एतेषामुपकारणानाम् अभावोऽऽसीत्।

वस्तुतः कालदेशपरिस्थितिवशात् शिक्षायाः उद्देश्यानि परिवर्तमानानि सन्ति। तदनुसारेण शिक्षाव्यवस्थायामपि परिवर्तनं भवति। यस्य प्रभावः वयं वैदिककालिकशिक्षातः आधुनिकशिक्षापर्यन्तं जायमानानां परिवर्तनानां रूपेण पश्यामः। परिवर्तमानासु परिस्थितिषु नवचिन्तनस्यावश्यकता अस्ति। यथोक्तम्-

**पुराणमित्येव न साधु सर्वं, ना चापि सर्वं नवमित्यवन्द्यम्।**
**सन्तः समीक्ष्यान्तरद्भजन्ते, मूढः पर प्रत्ययनेय बुद्धिः।।**

वस्तुतः क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः भवति। अतः पुरातनेऽपि किञ्चिद् ग्राह्यं, नूतनेऽपि च तथैव किञ्चिद् ग्राह्यम् उभयत्रापि किञ्चित् श्रेयस्करं सुखावहं लोकोपकारि च। बुद्धिमन्तः जनाः स्वयमेवास्य ज्ञानस्य विवेचनेन सदसदात्मिकया बुद्ध्या स्वीयं निर्णयं कुर्वन्ति।

पुनः परम्परागतशिक्षाप्रणालीवत् राष्ट्रनिष्ठाजागरणाय जीवनमूल्यानां संरक्षणाय संस्कारक्षमशिक्षा एकं प्रमुखं साधनमस्ति। अतः संस्कारवतीं शिक्षां प्रोद्वलयन्तो शिक्षका एव शिक्षामाध्यमेन स्वाचरणेन त्यागेन आदर्शेन च छात्रेषु सद्गुणानां विकासयितुं समर्थाः भवितुं शक्नुवन्ति। अनेकेषु राष्ट्रेषु सौहार्दस्य विश्वबन्धुतायाश्च स्थापनाय आत्मनः संस्कृतिं धार्मिकं भावनां च प्रचारयन् भारत अग्रजन्मः अग्रदूतः अग्रणी वा आसीत्।

**सन्दर्भाः**


१. मनुस्मृतिः २/२०
२. ऋग्वेदः ८/२/९१
३. अथर्ववेदः १८/३/६८, ऋग्वेदः ७/३२/३१
४. यजुर्वेदः २६/२

५. तत्रैव ८/४३
६. भगतद्गीता ४/१३
७. आपस्तम्बसूत्रम्
८. अथर्ववेदः १०/२/३२
९. यजुर्वेदः ६/१४
१०. तत्रैव ६/१५
११. यजुर्वेदः २९/३०
१२. वैशेषिकदर्शनम् १/२
१३. ईशावास्योपनिषद् ११
१४. मुण्डकोपनिषद्-द्वितीयखण्डः, सप्तमः श्लोकः
१५. बृहदाराण्यकोपनिषद् ब्राह्मणः ३/२८ प्रथमोऽध्यायः
१६. तैतिरियोपनिषद्-अष्टम अनुवाक
१७. बृहदराण्येकोपनिषद् ब्राह्मणः ४ प्रथमोऽध्यायः
१८. सांख्यकारिका-१

शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृत संस्थानम्, जयपुरम्

# परम्परागतशिक्षाप्रणाल्याः वैशिष्ट्यम्

**प्रो. सोहनलालपाण्डेयः**



सर्वविदितमस्ति यत् परम्परागतशिक्षाप्रणाल्या उद्देश्यं मोक्षप्राप्तिरासीत्। अनेन ज्ञायते यत् प्राप्तज्ञानस्योपयोगं कृत्वा जीवने सत्कार्याणि च कृत्वा अन्तिमकाले परमानन्दस्य, परमसुखस्य (यस्यसुखस्य कारणेन आन्दमनुभूयते) प्राप्ति शिक्षाया परमलक्ष्यमासीत् अननैव "सा विद्याया विमुक्तये" अनेन प्रकारेण शिक्षाया महत्वं प्रकटीकरणं भवति।

परम्परागतशिक्षाप्रणाल्याः यत् चित्रमस्माकं समक्षे आयति तत्चित्रं भवति कस्यचित् आश्रमस्य चित्रम्, सुरम्यवातावरणस्यचित्रम्, उपनीतस्य बटुकस्य चित्रम्, कस्यचित्ऋषेः चित्रम्, अथवा वेदाभ्यासे संलग्नानां विद्यार्थीणां चित्रम्, सामवेदस्य गायने संलग्नानां बालकानां चित्रम्, दर्शनस्य गूढरहस्यानामुद्घाटने प्रवचने च रतानामाचार्याणां चित्रम्, अस्यापरम्परायाः परिपोषणे रतस्य कस्यचिदाचार्यस्य चित्रम्, ध्वनिसम्प्रदायस्य खण्डने-मण्डने संलग्नानां ब्रह्मचारीणां चित्रम्, "**ॐ भवति भिक्षां देहि**" इत्युच्चार्य कस्यचित् गृहस्थस्य द्वारे उपस्थितानां बह्मचारीबालकानां चित्रम्। अनेनप्रकोरण अनेकानि चित्राणि अस्माकं स्मृतिपथे अथवा कल्पनापथे आगच्छन्ति। तदा किं इमानि चित्राणि एव अस्माकं पारम्परिकशिक्षाप्रणाल्याः वास्तविक परिचयं ददति? किं पारम्परिकशिक्षाप्रणालीसनातनीया? इयं अपरिवर्तनलीला किम्?

वयं इदमपि जानीमः यत् परिवर्वशीलेऽस्मिन् जगतितले सर्वपमि यथाकालं परिवर्तन भजते, देशकालानुरूपमेव परिवर्तनेनैव स्वकीयमस्तित्वं रक्षितुं प्रभवन्ति प्रायः सर्वेऽपि भावाः अन्यथातु स्थातुमपि नार्हन्ति ते क्षणमपि संसारचक्रेऽस्मिन्। परम्परागतप्रणाल्यामपि देशकालपरिस्थित्यामनुरूपं परिवर्तनं मिलति, दृश्यते च। वैदिककालीनशिक्षाप्रणाल्यामनेकानि परिवर्तनानि अनन्तरं अवलोक्यन्ते तत्र नूतनविषयाणां समावेशः अभवत्। केवल यज्ञयागादि शिक्षायाः मुख्यकार्यं नासीत् कालान्तरे नूतन-नूतन विषयाणां अध्यापनं अस्यां प्रणाल्यां समायोजनमभवत्। शिक्षणपद्धतषु अपि परिवर्तनानि अभवन्। केवलं मोक्षप्राप्ति अधुनाशिक्षाया उद्देश्यं नासीत्। चरित्रनिर्माणं, गृहस्थजीवनस्य, समाजस्य कृते तत्परता अपि शिक्षाया उद्देश्ये समावेशिता अभवन्। अनेन ज्ञायते यत् परम्परागतशिक्षा प्रणाली न केवलं परिवर्तशला अपितु अस्यां नूतनविषयाणां समावेशस्य क्षमता अस्ति अनेन सहैव अस्यां नूतनशिक्षणपद्धतीनां समावेशोऽपि दृश्यते। परम्परागतशिक्षाप्रणाल्यां नमनशीलता अस्य प्रथमः गुणः अनेन इयं प्रणली येन केन प्रकारेण अधुनापर्यन्तं शिक्षणस्य कृते प्रयुक्ता भवति। परम्परागतशिक्षाप्रणाल्या अधोलिखिताः विशेषताः सन्ति-

**१. परम्परागतप्रणाल्याः वैविध्यम्ः**

परम्परागतशिक्षाप्रणाल्यां केवलम् उपदेश व्याख्यानमाध्यमेन शिक्षणं नैव प्रचलति। अस्यां विविधपद्धतीनां लक्षणविधीनां प्रयोगो भवति। एकतः अस्यां प्रश्नोत्तर प्रविधेः प्रयोगं भवति अपरतः सामूहिकपरिचर्चायाः आयोजनं भवति। कुत्रचित् वेदपाठस्य जटापाठघनपाठादीनां प्रयोगो प्रचलति कुत्रचिच्चउपनिषदत्सु गूढरहस्यानां परिचर्चा दृश्यते। कुत्रचित् जिनागमानां व्याख्यानं चलति कुत्रचित् च बौद्धमठेषु ध्यानादीनां क्रियाणामायोजनं चलति स्म। कुत्रचित् ग्रंथविधिमाध्यमेनाध्यापनं चलति, कुत्रचित् च प्रयोगाभ्यासानाम् आधारेण खगोलशास्त्रीय ज्योतिषादीनां विविधशास्त्राणम् अध्यापनं प्रचलति स्म। शास्त्रार्थ-वादविवाद-चिन्तनमननादीनां प्रयोगस्य आधारेण ज्ञायते यत् परम्परागतशिक्षाप्रणाली केवलं शिक्षणस्य एकस्या प्रणल्याः नाम नास्ति अपितु विविधप्रणालीनां समवायः अस्ति यस्यां नूतनस्य समावेश्स्य क्षमता अस्ति। विविधशास्त्राणम् अध्यापनस्य कृते विविधप्रणालीनां प्रयोगेः भवति स्म। अस्यां सूत्रवार्तिकप्रणाली अपि अस्ति, कथाकथनप्रणाली अपि अस्ति। अस्याम् उपदेशव्याख्यानप्रणाली अपि अस्ति चिन्तनमनन समस्यासमाधानस्य समावेशोऽपि अस्ति। अस्यां व्याख्याप्रणाली अपि अस्ति आगमननिगमनप्रणाली अपि अस्ति। एकतः अस्यां प्रणल्यां संश्लेषणत् विश्लेषणं प्रति गमनं भवति। अपरतः अस्यां विश्लेषणात् संश्लेषणं प्रति गमनं भवति।

**२. अर्थग्रणस्य महत्त्वम्ः-**

अस्याः प्रणल्याः इयं अपरा विशेषता। नैकाः जनाः चिन्तयन्ति यत् परम्परागतप्रणाल्यां केवलं रटनं भवति। किन्तु तथा नास्ति निरूक्तकारस्य कथनअस्ति

**यदधीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नविवशुष्कैधो न तजज्वलतिकर्हिचित्॥**

अर्थात् अर्थग्रहणं, भावग्रहणं यावत् नैव भवति तावत् पठनस्य, अध्ययनस्य किम् तात्पर्यम्। आस्मिन् सन्दर्भे महाभाष्यकारस्य कथनम् अस्ति "**एकः शब्दः सुप्रयुक्तः स्वर्गे लोकेच कामधुक् भवति**"। अत्रापि महाभाष्यकारः अर्थग्रहणस्य महत्त्वं प्रकटयति। पाणिनीयशिक्षायां वयं पठामः यत्-

**दुष्टः शब्दः स्वरतोवर्णतो वा**
**मिथ्याप्रयुक्तो न तमर्थमाह**
**स वाग्वज्रो यजमानं हिनस्ती**
**यथेन्द्रशत्रुस्वरतोपराधात्॥**

अनेन ज्ञायते यत् परम्परागतशिक्षाप्रणल्यां शुद्धोच्चारणस्य उपरि यथा बलं दीयते स्म तथैव अर्थग्रहणस्य उपरि समग्रम् अवधानमपि। अनवधानेन हानेः सम्भावना अधिका आसीत्। उच्चारण दोषाः नैव क्षन्तव्याः आसन्।

**३. आचार्यस्य महत्त्वम्ः -**

परम्परागतशिक्षाप्रणाल्यां शिक्षकस्य अत्यधिकं महत्त्वमासीत्। शिक्षको आचार्यो वा विद्यालयस्य

प्रमुखः ज्ञानस्य दिशानिर्धारिकः, विचाराणां समालोचकः, प्रश्नानां समाधानकर्ता, विषयस्य व्याख्याता, सूत्राणां विश्लेषकः, स्थूलात् सूक्ष्मज्ञानं प्राप्ति गमनाय प्रशस्तकः, ज्ञातात् अज्ञातं प्रति प्रेरकः, मार्गदर्शकः, मित्रम्, अभिभावकः, कुलस्यपति अथवा कुलस्य पालकः, बालकेषु परब्रह्म इत्यस्य दर्शकः, सच्चिदानन्दप्रदायकः भवति स्म। दौविध्यकाले संशयस्य च समये सः ''अहम् त्वां सर्वपापेभ्यो मोक्षयिष्यामि माशुचः'' इत्यादिविश्वासेन युक्तः भवति स्मः।

**४. छात्रस्य महत्त्वम्ः–**

परम्परागतशिक्षाप्रणल्यां केवलं आचार्यस्य महत्वं नासीत् अपितु छात्राणामपि तथैव महत्त्वम् आसीत्। यस्या बालकेन्द्रितशिक्षाप्रणल्याः वर्णनं वयमाधुनिकमनोविज्ञाने पश्यामः, सा प्रणाली भारतीय परम्परायामासीत्। बालकः केवलम् अस्थिमज्जायुक्तम् शरीरं नासीत् अपितु सः दिव्यज्योतियुक्तश्च जीवः भवति तस्मिन् आत्मप्रकाशः भवति। आत्मप्रकाशेन प्रकाशितः सः अलौकिकानि कार्याणि कर्तुं समर्थः भवति। अतः बालकस्य आत्मप्रकाशनस्यावश्यकता अस्ति। अनेनैव पुरातनकालीनाः आचार्यः कथयन्ति स्मः – **'त्वमेव प्रत्यक्षब्रह्मासि'**

**५. प्रत्येकं विद्यालयः विशिष्टशिक्षायाः केन्द्रम्–**

यद्यपि सामान्या अनिवार्य शिक्षा सर्वेषु शिक्षाकेन्द्रेषु उपलब्धा आसीत् किन्तु इतोप्यधिकं प्रत्येकं विद्यालयः विशिष्टशिक्षायाः केन्द्रमासीत्। कश्चित् च मीमांसा वेदविद्यायाः केन्द्रं भवति स्म कश्चित् व्याकरण शिक्षाया केन्द्रं भवति स्म, कश्चित् च साहित्यस्य केन्द्रमासीत्। आचार्यः यस्यां शिक्षायां विशेषज्ञः आसीत् तस्यां शिक्षायां तस्य शिक्षाकेन्द्रस्य वैशिष्ट्यं भवति स्म।

**६. अन्येस्मिन् शास्त्रेऽपि प्रवेश :**

परम्परागतशिक्षाया इयमपि अपराविशेषता आसीत् यत् एकास्मिन् शास्त्रे विशेषज्ञताया अवस्थायामपि अन्येऽस्मिन् शास्त्रे तस्य गति भवति स्म। यथा साहित्यशास्त्रस्याचार्यः वैयाकरणस्य अपि विद्वान् भवति स्म तथैव सांख्यन्यायवैशिषिकदर्शनानामाचार्यः, न्याय वेदान्तादीनां दर्शनेन सह वेदविद्याया अधिकारी विद्वान् भवति स्म।

**७. परम्परायाः विस्तार :**

परम्परागतशिक्षा प्रणाल्याः अयं महनीयगुणः अस्ति यत् परम्परागतविद्यालयाः स्थापनाकालात् येषां विषयाणां शिक्षाया केन्द्राणि आसन् तेषां तेषां शास्त्राणां शिक्षायाः विस्तरणं हस्तान्तरंण कुर्वान्ति स्म। तस्याः परम्पराया कारणेन निरन्तरं विस्तरणमभवत् अधुनाऽपि इदं विस्तरणं परम्परायां प्रचलति।

**सन्दर्भः**

१. पाणिनीय-शिक्षा २. निरूक्तम् ३. व्याकरणमहाभाष्यम्
४. बलदेव उपाध्याय, संस्कृत साहित्य का इतिहास, मोतीलाल बनारसीदास, नई दिल्ली १९६८।

शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृत संस्थानम् जयपुरम्

# आधुनिकशिक्षायां परम्परागतप्रणालीनां प्रासङ्गिकता

डॉ. लीना सक्करवालः

सारांशः-

( मनुष्यस्य जीवने गुणवत्तामानेतुं, नूतनचिन्तनं संवर्धयितुञ्च शिक्षायाः महती भूमिका वर्तते। शिक्षा मानवे न केवलं मनुष्यतां जनयति, अपि च उत्तमोत्तमं मानवं भवितुमपि प्रेरयति। कस्यापि मनुष्यस्य शिक्षा तदैव पूर्णा मन्यते यदा सः शिक्षायाः सैद्धान्तिकपक्षान् स्वजीवने चरितार्थकर्तुमुत्सुको प्रेरितश्च भवति। आचरणे शिक्षायाः स्वरुपं मूल्यसंस्कारात् विना द्रष्टुं न शक्यते। प्रस्तुतशोधपत्रे आधुनिक शिक्षायाः स्वरुपं संदश्र्य परम्परागतप्रणालीनां के के बिन्दवः प्रासङ्गिकाः भवितुमर्हन्ति इति तेषां समेषां वर्णनमत्र विधीयते।)

आधुनिकशिक्षायाः या सङ्कल्पना अस्माकं समक्षे अधुना वरीवर्तते, सा सङ्कल्पना विद्यालयस्य प्राङ्गणे कासुचित् होरासु सीमिता इति दरीदृश्यते। अस्मिन् सीमितकाले छात्राणां सर्वाङ्गीणविकासस्य या सङ्कल्पना क्रियते तां सङ्कल्पनां क्रियान्वयितुं महान् परिश्रमः, उत्कृष्टचिन्तनं, सतत्-प्रयासाश्च अपेक्षिताः। भारतस्य स्वातन्त्र्यादनन्तरम् आधुनिकशिक्षायाः स्वरूपे केवलम् आंग्लभाषायाः वर्चस्वं विद्यालयेषु महाविद्यालयेषु उच्चसंस्थानेषु वा दृश्यते। प्रायशः सर्वे जनाः अभिभावकाः अधिगन्तारश्च स्वकीयान् बालकान उतः स्वयं-आंग्लाधारित विद्यालयेषु महाविद्यालयेषु वा पाठयितुं उतः पठितुं विशिष्टेच्छुकाः भवन्ति। यतोहि उच्च स्तरीय शिक्षायै आंग्लभाषायाः ज्ञानं महदावश्यकं वर्तते इति मानसिकतया अद्यतन भारतीयाः अप्रत्यक्षत्वेन सर्वान् बालकान् आंग्लविद्यालये एवं प्रेषितुमिच्छन्ति। वस्तुतः आंग्लभाषापठने नापि कश्चन दोषः। नैव आंग्लमाध्यमपठने काऽऽपि हानिः। समयानुगुणं पाठ्यक्रमे विषयपठने परिवर्तनमपि आवश्यकम्। परं हानिः तदा भवति यदा कश्चन् देशः समाजः वा स्वीयं मूलं विहाय, स्वकीयसंस्कारान्, मूल्यानि च परित्यज्य केवलम् अंधानुकरणेन शिक्षायां परिवर्तनं विचारं विना करोति। कश्चन् देशः वृक्षवत् तस्य मूलं तस्य संस्कृतिः संस्काराः मूल्यानि च भवन्ति। मूलस्य पोषणेन विना कश्चनपि राष्ट्रः सुख-समृद्धि-समोन्नतिं प्राप्तुं नार्हति। अतः देशकाल परिस्थित्यानुगुणं आधुनिकशिक्षाव्यवस्थायाम् आधुनिकविषयाणां परम्परागतशिक्षायाः महत्वपूर्णबिन्दूनां समावेशः करणीयः। नो चेत् शिक्षायां व्यावसायिकरणमेव अवशिष्यते। भारतस्य परम्परागतशिक्षायाः प्रासङ्गिकतायाः आवश्यकता निम्नलिखिततथ्यानामाधारे गण्यते।

- २०१२ तमे वर्षे NCRB (National Crime Record Bureau) कथयति यत् अस्मिन् वर्षे बलात्कारघटनायाः प्रदत्ताः (cases) 24,900 (नवशताधिकचतुर्विंशतिसहस्त्रः) सङ्कलिताः वर्तन्ते। तेषु 95% पञ्चनवतिः प्रतिशतं पीड़िताः अपराधिजनान् जानन्ति। ते अपराधिनः परिचिताः एव सन्ति।

- 2015 तमे वर्षे The Hindu समाचारपत्रे इदं कथितमस्ति यत् भारतवर्षस्य सूची (Index) सुरक्षादृष्ट्या अधः गच्छति।
- 2015 तमे वर्षे The Hindu समाचारपत्रे इयं चिन्ता प्रदर्शिता यत् अस्माकं देशे वृद्धाश्रमस्य (Old Age Home) संख्या गतवर्षाणामपेक्षया सकलजनसंख्यायाः 9.79% दृष्ट्या वर्धते।
- फरवरी मासे 2018 तमे वर्षे Financial Express Online समाचारपत्रे इदं कथ्यते यत् अपहरणं बलात्कारस्य घटना, हत्या इत्यादयः दिन-प्रतिदिनं वर्धते।
- Addiction Recovery Online Resource माध्यमेन इदं ज्ञायते यत् 75% युवानः भारते ड्रग्स-धूम्रपानेन पीड़िताः कुप्रभाविताश्च सन्ति।

एते उपर्युक्तलिखिताः प्रदत्ताः अस्माकं आधुनिकशिक्षाप्रणाल्यां कुत्र-कुत्र न्यूनता वर्तते, कुत्र अपूर्णता, कुत्र परिष्कारः अपेक्षितः इति सर्वान् बिन्दून् प्रति सङ्केतं कुर्वन्ति। बालकस्य सर्वाङ्गीणविकासस्य सङ्कल्पनायां कस्मिन् क्षेत्रे अस्माकं दृष्टिः नागच्छति इति एतादृशाः प्रश्नाः अस्माकम् आधुनिकशिक्षा प्रणाली समक्षे समायाति। साम्प्रतम् आधुनिकशिक्षाप्रणाल्यां याः न्यूनताः वर्तन्ते ताः निम्नलिखिताः वर्तन्ते।

अद्यतनसमये महाविद्यालयी-विद्यालयी शिक्षायां वा इदानीमपि छात्रः रटनपद्धतिद्वारा अधिगमं करोति। व्याख्यानविधेः प्रयोगः सञ्जायते। रटनेन छात्राणां चिन्तनशक्तेः विकासः कदापि भवितुं नार्हति। इदानीं स्टेनफोर्ड विश्वविद्यालये (अमरीकादेशे) कैम्ब्रिजविश्वविद्यालये (इंग्लैण्डदेशे), ओक्सफोर्डविश्वविद्यालये (इंग्लैण्डदेशे) इत्यादिविश्वविद्यालयेषु सम्पूर्णशिक्षणे व्याख्यानस्य केवलं 5% स्थानमस्ति। अवशिष्टं 95% प्रतिशतम् छात्राः समस्यासमाधानंविधिना (Problem Solving Method) पठन्ति। शोधदृष्टेः विकासः विद्यालयीस्तराद् क्रियते। पश्चिमीदेशाः स्वकीयशिक्षाप्रणाल्यां यद् नूतनपरिवर्तनं कुर्वन्ति, एतादृशं नूतनं चिन्तनं अस्माकं परम्परागतप्रणाल्यां प्राचीन् कालादेवासीत्। कष्टस्य विषयोऽयं वर्तते यत् परम्परागतप्रणाल्यां आधुनिकसन्दर्भानुगुणं ज्ञानं तु वर्तते। परं तेषां क्रियान्वयं कथं भवेत्? तत् ज्ञानं अद्यतनीयं कथं भवेत् आधुनिकपरम्परयोः सेतुनिर्माणं कथं जायेत् इति समेषां विषयाणां चिन्तनं भारतीयेषु न दृश्यते। यदि एतेषां महदावश्यकविषयाणां चिन्तनं आरभेत् चेत् छात्राणां सर्वाङ्गीणविकासस्य सङ्कल्पना शतप्रतिशतं पूरयितुमर्हति। छात्राः जिज्ञासाधारितऽऽधिगमं करिष्यन्ति। अनेन तेषां अन्वेषणक्षमतायाः वर्धनं जायेत्। अस्माकं शिक्षणविधिषु अपि परिष्कारः अपेक्षितः यथा तीव्र बुभुक्षा भवति चेत् भोजनं सहजतया पचति। तथैव यदा छात्रेषु ज्ञानं प्रति जिज्ञासा वर्तते ते आनन्देन सर्व पठिष्यन्ति।

आधुनिकसमये गुरुशिष्यसम्बन्धः शैक्षिकप्रविधेः कारणाद् प्रभावितो जायते। साम्प्रतम् वै.कक्षा.वै.विद्यालयाः, वै. अधिगमः, इति एतेषां समेषां कारणाद् शिक्षकच्छात्रयोः परस्परं मेलनं गौणः जायते। एतैः उपकरणैः माध्यमैः वा सूचनायाः सङ्कलनं भवितुमर्हति परं व्यक्तित्वविकासे

कुत्रचित् न्यूनता दरीदृश्यते। **वनस्पतिशास्त्रेऽपि लिखितं वर्तते यत्–"पादपानां समस्यानाञ्च कृते सर्वाधिकं महत्त्वपूर्णं भोजनम् ( खाद/Compost ) – मनुष्यस्य स्पर्शः (Human Touch) वर्तते।** एवं पश्यामः चेत् वनस्पत्यां केवलं कोशद्वयं वर्तते अनमय-प्राण-मयकोशौ। तथापि तेषां कृते मानवस्पर्शः मानवोपस्थिति आवश्यकौ। अतः विद्यार्थीनां कृते गुरोः साक्षात् उपस्थितिः महती आवश्यकी यतोहि मानवीयशरीरं तु पञ्चकोशनिर्मितमस्ति (अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमय)

अधुना प्रायः दृश्यते यत् समेषाम् अभिभावकानां शिक्षकाणां चिन्तनं बालकस्य कृते उद्योगप्राप्तिः इत्याधारितं वर्तते। सम्पूर्णशिक्षायाः केन्द्रे उद्योगप्राप्तिः (Job Oriented) इति मुख्यं लक्ष्यं दरीदृश्यते। एतस्माद् कारणाद् छात्रस्य मनसि अपि केवलं धनप्राप्तिः उद्योगप्राप्तिः वा मुख्यं जायते। छात्रस्य चिन्तनं बाल्यकालाद् एव परिपक्वं जायते यत् येन केन प्रकारेण उद्योगप्राप्तिः धन प्राप्तिः वा करणीयाम्। वस्तुतः एतादृशं चिन्तनं छात्रेषु स्वार्थभावनां जनयति। तदा छात्राः केवलं स्वहितचिन्तनं कुर्वन्ति। लोकहितचिन्तनम् व्यर्थं इति मन्यन्ते। प्रायः वयं पश्यामः बहवाः बालकाः उच्चोपाधिं संप्राप्य यथा I.I.T, M.B.A., MBBS इति सर्वं लब्ध्वा इतोऽपि धनसंग्रहीतुं विदेशं प्रति गच्छन्ति। राष्ट्रसेवां प्रति तेषां चिन्तनं अस्ति एव न। तेषां पालनपोषणं (upbringing) यथा जातं तथैव ते व्यवहरन्ति। पुनश्च इदानीं महत्चिन्तनस्य अयं विषयः अस्ति यत् बालकाः युवानः वा उद्योगेन सह संवेदनशीलाः, चिन्तनशीलाः, दायित्वयुक्ताः, कर्तव्ययुक्ताश्च स्युः। यथा इदानीं कोर्पोरेट जगति DINK(Double Income No Kids) इति अयं सम्प्रत्ययः प्रचलितोऽस्ति। इदं अस्माकं भारतीय चिन्तनं नास्ति। भोगदृष्टिः मूलभारतीयचिन्तनं न वर्तते। परम्पराप्रणाल्यां सर्वं योगएव मुख्यम्। चरित्रशिक्षायाः योगः, संस्काराणांयोगः, संस्कृतिसंरक्षणस्य भावना इत्यादयः। UNESCO इत्यपि कथयति यत् बाल्यकालाद् चरित्रशिक्षायाः क्रियान्वितये संरचनायाः प्रारुपं निर्मातव्यम्। 2017 तमे वर्षे The Hindu समाचारपत्रेऽपि लिखितम् यत् मूल्यशिक्षायै CBSE(Central Board of Secondary Education) केन्द्रियमाध्यमिकशिक्षामण्डलम् रामकृष्णमिशनेन समं गठबन्धनं कृतम्। अनेन छात्राः जागरूकाः स्युः, उत्तमनागरिकाः भवेयुः उत्कृष्ट चरित्रयुक्ताः स्युः समाजे परस्परं मिलित्वा कार्याणि कुर्युः। समाजे मानवीयतायाः वर्धनं भवेयुः इति सङ्कल्पनया गठबन्धनमभवत्।

अस्माकं परम्परागतगुरुकुलप्रणाल्यां छात्रेभ्यः वातावरणं महद्सौकर्यं, सुरम्यं, अध्ययनशीलञ्चासीत्। छात्रैः न केवलं विषयी ज्ञातं अधीयते। अपि च जीवनाय व्यावहारिक शिक्षायाः ज्ञानमपि विधीयते। समायोजपयोगिनः एते विद्यार्थिनः आसन्। परं इदानीं अस्माकं विद्यालयेषु केवलं प्रतिस्पर्धायुक्तं वातावरणमस्ति। अभिभावकाः शिक्षकाः केवलं प्रत्येकं छात्रः प्रतिस्पर्धां प्रति प्रेरयन्ति। छात्रस्य मनसि केवलं कक्षायाः प्रथमागमनम् एव महत्त्वपूर्णम् इति विचारः बाल्यकालाद् तिष्ठति। शनैः शनैः सः बालकः स्वीये विषये एव चिन्तयति। राष्ट्रस्य समाजस्य वा लोकचिन्तनम् तस्याचरणे विहितं न

भवति। समाजस्य काः काः समस्याः वर्तन्ते तासां समाधनाय के उपायाः भवितव्याः इत्यस्मिन् विषये तेषां ध्यानं कदापि नागच्छति। अतः शिक्षकाभिभावकयोः इदं दायित्वं वर्तते यत् बालकं कक्षायां प्रथमागमतस्थाने इदं प्रष्टव्यं यत् अद्य भवन्तः कस्य-कस्य सहायतां अकुर्वन्। अनेन तेषु छात्रेषु परोपकारस्य भावना जागृता भविष्यति। **'परोपकाराय इदं शरीरम्'** इति मूल्यं प्रतिदिनं वार्तालापेन, कार्यमाध्यमेन तेषां मनसि शनैः शनैः समागमिष्यति। एतादृशं चिन्तनं यदि समाजस्य प्रत्येकं अभिभावकाः शिक्षकाश्च करिष्यति तर्हि समाजे बृहद् परिवर्तनम् भवितुमर्हति।

अनेन प्रकारेण एतादृशाणि बहूनि मूल्यानि सान्दर्भिक तत्त्वानि अस्माकं पारम्परिकप्रणालीसु विद्यमानानि सन्ति। येषां समावेशनं वयं अद्यतनशिक्षाप्रणाल्यां पूर्णतावादी-उपागमं **(Holistic approach)** संवर्धयितुं शक्यते। अस्मिन्नुपागमे बालकस्य न केवलं संज्ञानात्मकपक्षे बलं दीयते अपि च सैद्धान्तिकस्वरूपं जीवने आचरयितुं उपायाः अपि चिन्त्यन्ते। शिक्षायाः व्यावसायिकस्वरूपतः शिक्षायाः पूर्णतावादिस्वरूपं प्रति गन्तुं परम्पागतप्रणाल्याः मूल्यानि सेतुत्वेन भूमिकां निर्वहिष्यन्ति। एतादृशं स्थानापन्नं (Paradigm Shift) अस्माकं शिक्षाप्रणाल्यां महदावश्यकं वर्तते। निष्कर्षत्वेन इदं कथयितुं शक्यते यत् अद्यतनीयशिक्षाप्रणाल्यां पुनः संशोधनस्यावश्यकता वर्तते, प्राचीनपरम्परासु यानि शैक्षिकतत्त्वानि निहितानि सन्ति तेषां संयोजनं आधुनिकधारायां सम्मेलनाय चिन्तनं कार्यञ्च क्रियते चेत् शिक्षायाः वास्तविकोद्देश्यस्य प्राप्तिः नूनमेव भविष्यति इति।

**सन्दर्भग्रन्थाः**

* एल. के. ओड़, शिक्षादर्शनम्, राजस्थानग्रन्थअकादमी।
* झा, संस्कृतशिक्षणम्, उमा, शङ्कर चौखम्बा पब्लिकेशन्स।
* अग्रवाल जे.सी., भारतीय शिक्षा व्यवस्था, आगरा पब्लिकेशन्स, 2012
* पाठक, आर.पी., भारतीय शिक्षा व्यवस्था

**अर्न्तजालीयसामग्री**

* Online. The Hindu Newspaper
* Online. The Financial Express Newspaper
* Online. National Crime Records Bureau.
* Addiction Recovery Online Resource.

सहायकाचार्या,
शिक्षाशास्त्रविभागः,
रा.सं.सं. जयपुरपरिसरः, जयपुरम्

# संस्कृतशिक्षकस्य व्यक्तित्वम् उत्तरदायित्वञ्च

डॉ. कुलदीपशर्मा

भारतीयसंस्कृतौ गुरुशिष्यपरम्परायाः चूडान्तस्तरं यावद्विकासोऽभवत्। सैषा भारतीयगुरुशिष्यपरम्परा भारतीयशिक्षा-पद्धतेः अखण्डतायाः एव बोधिका वर्तते। भारतीयाचार्यैः स्वशिष्याणां शिक्षा-दीक्षा तथाविधरूपेण विहिता, येन ते जगत्कल्याणं कर्तुं प्रभवेयुः, उदाहरणानि यथा हि - उद्दालक-श्वेतकेतू, वैशम्पायन-याज्ञवल्क्यौ, याज्ञवल्क्य-जनकौ, वर्तन्तु-कौत्सौ, वशिष्ठ-रामौ, सूर्य-हनुमन्तौ, सान्दीपनि-कृष्णौ, द्रोण-अर्जुनौ, परशुराम-कर्णौ, गौडपाद-गोविन्द-शङ्कराचार्याः, उपवर्ष-पाणिनी, चाणक्य-चन्द्रगुप्तौ, रामकृष्ण-विवेकानन्दौ एषा युग्मनामावली अविच्छिन्नरूपेण प्रसरन्ती एव वर्तते।

संस्कृतसाहित्ये शिक्षकाय बहवः शब्दाः प्रयुक्ताः यथा गुरुः, आचार्यः, उपाध्यायः, अध्यापकः, शिक्षकः, कुलपतिः इत्यादयः। एतेषां सर्वेषां शब्दानां व्यवहारे वैशिष्ट्यमासीत्। यथा हि प्रथमतः गुरुशब्दस्य विचारः स्यात्।

**गुरुः**

बहुभिः धातुभिः गुरु-शब्दस्य व्युत्पत्तिः भवितुमर्हति, यथा हि -

| | | |
|---|---|---|
| गृ सेचने (भ्वादिगणस्थः) | - | गरति सिञ्चति कर्णयोर्ज्ञानामृतम् इति गुरुः। |
| गृ निगरणे (तुदादिगणस्थः) | - | गिरति अज्ञानान्धकारम् इति गुरुः। |
| गृ शब्दे (क्रयादिगणस्थः) | - | गृणातिधर्मादिरहस्यम् इति गुरुः। |
| गृ विज्ञाने (चुरादिगणस्थः) | - | गारयते विज्ञापयति शास्त्ररहस्यम् इति गुरुः। |
| गुरी उद्यमने (तुदादिगणस्थः) | - | गुरते सत्पथे प्रवर्तयति शिष्यमिति गुरुः। |

**गुरुशब्दस्य अक्षरसङ्केतज्ञापकाः श्लोकाः**

गुरुशब्दस्य अर्थः एव भवति ज्येष्ठः इति। कश्चन श्रद्धेयः एव गुरुशब्देन उच्यते। वीरमित्रोदयशुद्धिप्रकाशानुसारेण गुरुशब्देन आचार्यः उपाध्यायश्च इत्यनयोरेव ग्रहणं भवति। एवं हि शिक्षागुरुः दीक्षागुरुश्च इत्येवंप्रकारेण गुरूणां वर्गीकरणं क्रियते। सामान्यतः विषयशिक्षकस्य स्थाने आध्यात्मिकज्ञानदातुः कृते गुरु-शब्दस्य प्रयोगः प्रशस्तरूपेण शास्त्रेषु समवलोक्यते। यतो हि अस्य शब्दस्य महिमा महान् वर्तते। बहुत्र गुरु-शब्दस्य पदपरिचयार्थं प्रत्येकं घटकवर्णस्य कश्चन विशेषार्थः प्रतिपादितः, यथा हि-

**गकारः सिद्धिदः प्रोक्तो रेफः पापस्य हारकः।**
**उकारो विष्णुव्यक्तस्त्रियात्मा गुरुः परः।।**[१]
**गुरुरेकः शिवः साक्षाद् गुरुः सर्वार्थसाधकः।**
**गुरुरेव परं तत्त्वं सर्वं गुरुमयं जगत्।।**[२]

**गुकारश्चान्धकारस्तु रुकारस्तन्निरोधकः।**
**अन्धकारविनाशित्वात् गुरुरित्यभिधीयते।।[3]**
**सः गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।।[4]**

**आचार्यः**

आ उपसर्गपूर्वकात् चर गतौ इति भ्वादिगणस्थात् धातोः ण्यत्-प्रत्यये आचार्य-शब्दः सिद्धः भवति। शिक्षणदृष्ट्या शिक्षकस्य सर्वेषु रूपेण रूपमिदं महनीयतमं वर्तते। मनुस्मृतौ अस्य विषये उक्तं यत्-

**स्वयमाचरते यस्मादाचारं स्थापयत्यपि।**
**आचिनोति च शास्त्रार्थान् यमैः संनियमैर्युतः।।[5]**

अर्थात् यः विविधशास्त्राणां गूढार्थं ज्ञात्वा तदनुरूपम् आचरणं करोति, यश्च तस्य आचरणस्य प्रतिष्ठां शिष्येषु सम्पादयति, सः आचार्यः भवतीति। अस्य कर्तव्य विषये यथोक्तं मनुना --

**उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।**
**सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते।।[6]**

आचार्यस्य षट् स्वरूपाणि सन्ति, यथा हि -

**आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः।**
**जीमूता आसन सत्त्वानस्तैरिदं स्वराभृतम्।।[7]**

**१. मृत्युः** - यथा हि कृषकः नवधान्योत्पादनात् पूर्वं क्षेत्रे पूर्वतः विद्यमानानि बीजानि नडानि तृणानि वा नाशयति तथैव आचार्यः छात्राणां मानसपटले पूर्वतः विद्यमानानां कुसंस्काराणां मृत्युरूपेण नाशं कृत्वा उत्तमसंस्काराणां समुत्पादनाय उर्वरां भूमिं निर्माति। शिक्षकः छात्राणां पूर्वव्यवहारेषु किं नाशनीयं किञ्च रक्षणीयमिति विवेकवान् स्यात्।

**२. वरुणः** - वेदेषु वरुणदेवः सहस्रपाशिरूपेण समुपवर्णितः। शिक्षकस्य तादृशः गुणः स्यात्। विद्यार्थिनाम् अनुशासनं कर्तुं वरुणदेवसदृशं पाशकौशलम् आवश्यकम्, येन ते संयमिताः भूत्वा विद्यार्जनं विदध्युरिति।

**३. सोमः** - वैदिकवाङ्मये चन्द्रदेवः सौम्यस्वरूपेण विज्ञापितः अस्ति। अतः शिक्षकस्य अपि तथैव स्वरूपं स्यादिति। अपि च चन्द्रः मनसः कारकग्रहः वर्तते इति भावेन शिक्षकः अपि मनोवेत्ता भवेदिति आशयं स्वीकर्तुं शक्नुमः।

**४. औषधिः** - यथा औषधौ रोगनिवारकशक्तिः रोग-प्रतिरोधकशक्तिश्च भवति, तथैव शिक्षके अपि शारीरिक-मानसिक-आध्यात्मिकादीनां विकृतीनां प्रतिरोधशक्तिः भवेदिति।

**५. पयः** - यथा हि पयः अर्थात् दुग्धं बलवर्धकं भवति, तथैव शिक्षके अपि सर्वाङ्गिकपुष्टिसामर्थ्यं भवितव्यम्। पयः पवित्रतायाः अपि प्रतीकरूपेण स्वीकृत्य शिक्षकस्य पवित्रचारित्र्यस्य अपि आशयं स्वीकर्तुं शक्नुमः।

**६. जीमूतः** - जीवनं (जलं) मूतं (बद्धम्) अनेनेति जीमूतः अर्थात् मेघः। यथा हि मेघः जलवृष्टिं सम्पाद्य भू-गर्भे प्रसुप्तस्य बीजस्य शस्यरूपेण उत्पादनं कारयति, तथैव शिक्षकः अपि ज्ञानामृत-वृष्टिं कृत्वा विद्यार्थिनां मनसि प्रसुप्तानाम् उत्तमसंस्काराणाम् अङ्कुरणं सम्पादयेदिति।

उपनिषदि आचार्यस्य ब्रह्मचारिणां हिताय कथं हवनादिकं कर्तव्यमिति निर्देशः द्रष्टव्यः, यथा हि-

**आ मायन्तु ब्रह्मचारिणः स्वाहा। विमायन्तु ब्रह्मचारिणः स्वाहा। प्रमायन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु ब्रह्मचारिणः स्वाहा।**[८]

अर्थात् ब्रह्मचारिणः मा (अस्मत्-शब्दस्य द्वितीया-एकवचने माम् इत्यस्य वैकल्पिकरूपम्) आ-यन्तु (इण्-गतौ इति धातोः प्रथमपुरुषवहुवचनरूपम्)। अस्यैव वाक्यस्य 'ब्रह्मचारिणः मा (निषेधार्थकम् अव्ययपदम्) यन्तु' इत्यपि अर्थः भवितुमर्हति। ब्रह्मचारिणः विमायन्तु अर्थात् कपटशून्याः स्युः। ब्रह्मचारिणः प्रामाणिकज्ञानस्य आकाङ्क्षिणः स्युः। ब्रह्मचारिणः इन्द्रियदमनं कर्तुं क्षमाः स्युः। ब्रह्मचारिणः मनसः वशीकरणे दक्षाः स्युः। इत्येवंरूपेण ब्रह्मचारिणाम् अर्थात् विद्यार्थिनां कृते प्रार्थयते स्म।

**उपाध्यायः**

उपाध्यायः वेतनमुपजीवति। यः गुरुः शिक्षणं व्यवसायरूपेण मत्वा छात्रेभ्यः धनं स्वीकृत्य कञ्चित् एकं वेदं किमपि एकं वेदाङ्गं वा पाठयति, सः उपाध्यायः कथ्यते, यथा हि -

**एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।**
**योऽध्यापयति वृत्त्यर्थम् उपाध्याय स उच्यते।।**[९]

**शिक्षकः**

भ्वादिगणस्थात् **शिक्ष विद्योपादाने** इत्यस्मात् धातोः णिचि ण्वुल्-प्रत्यये शिक्षक-शब्दस्य व्युत्पत्तिः भवति। अयं हि शब्दः सर्वविधगुरूणां कृते व्यवहर्तुं शक्यः। यथा हि कालिदासेन कथितम् -

**श्लिष्टा क्रिया कस्यचिदात्मसंस्था, सङ्क्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणाम्, धुरिप्रतिष्ठापयितव्य एव।।**[१०]

अर्थात् कश्चित् शिक्षकः तादृशः भवति, यः अत्यन्तं ज्ञानी भवेत्, किन्तु ज्ञानविज्ञापने तस्य शिक्षणकौशलं पुष्टं नास्ति। कश्चित् अन्यः शिक्षकः तादृशः भवति, यः महान् ज्ञानी नास्ति अथापि यत् जानाति तत् सम्यक् प्रकारेण विज्ञापयितुं समर्थः भवति। अनयोः द्वयोः अपि पक्षयोः यस्य शिक्षकस्य दक्षता भवति अर्थात् यः ज्ञानी अपि अस्ति, ज्ञानस्य छात्रेषु सङ्क्रमणे अपि च यः दक्षः अस्ति, स एव उत्तमः शिक्षकः मन्तव्यः इति।

**पाठकः**

'पठ व्यक्तायां वाचि' इत्यस्मात् भ्वादिगणस्थात् धातोः णिचि ण्वुल्-प्रत्यये पाठक-शब्दः निर्गच्छति। मौखिकपद्धत्या यः गुरुः पाठस्य आवृत्त्यात्मकम् अभ्यासं कारयति सः पाठकः इत्युच्यते।

**अध्यापकः**

अधि इति उपसर्गपूर्वकात् 'इण्-गतौ' इति धातोः णिच्-प्रत्यये ण्वुल्-प्रत्यये च पदमिदं सिद्धं भवति। इदमपि पदं सर्वविधशिक्षकेभ्यः प्रयुज्यते।

**कुलपतिः**

अयं विशिष्टः उपाधिः विशिष्टशिक्षकेभ्यः एव उपयुज्यते। यः आचार्यः शिक्षाकुटुम्बस्य प्रमुखः भवति, सः कुलपतिः कथितः। यथा हि मनुना भणितम् -

**मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।**
**अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः।।**[११]

अर्थात् यस्य ऋषेः कुले दशसहस्राणि छात्राः भवन्ति। यश्च तेभ्यः छात्रेभ्यः अन्नदानादिव्यवस्थां कृत्वा अध्यापयति सः श्रेष्ठः कुलपतिः इत्युच्यते।

**संस्कृतशिक्षकस्य गुणाः**

शिक्षके मानवीयगुणाः अवश्यं स्युः। यथोक्तम् -

**षडेव तु गुणाः पुंसां न हातव्याः कदाचन।**
**सत्यं दानम् अनालस्यम् अनसूया क्षमा धृतिः।।**[१२]

एवमेव गुरुः भूत्वा अपि अन्येभ्यः गुणादानस्य गुणः शिक्षके अवश्यं भवेत्। यथा हि यदुराजं दत्तात्रेयाचार्यः स्वस्य चतुर्विंशतेः गुरूणां परिचयं दत्तवान्, यथा हि -

**पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः।**
**कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः।।**
**मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः।**
**कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत्।।**
**एते मे गुरवो राजन् चतुर्विंशतिराश्रिताः।**
**शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः।।**[१३]

अर्थात् पृथ्व्याः धैर्यस्य, वायोः निर्लिप्ततायाः, आकाशात् व्यापकतायाः, जलात् मधुरतायाः, अग्नेः तेजस्वितायाः, चन्द्रमसः शीतलतायाः, सूर्यात् समानतायाः, कपोतात् अनासक्तेः, अजगरात् संतोषस्य, समुद्रात् गभीरतायाः, पतङ्गात् निर्मोहस्य, मधुमक्षिकायाः असङ्ग्रहस्य, गजात् निर्बन्धस्य, मधुदोहकात् निभोगस्य, हरिणात् वैराग्यस्य, पिङ्गलावाराङ्गनायाः दुराशात्यागस्य, कुररपक्षिणः त्यागस्य, बालकात् निश्चिन्ततायाः, कन्यायाः एकान्तवासस्य, बाणनिर्मातुः लक्ष्यकेन्द्रिततायाः, सर्पात् आत्मनिर्भरतायाः, ऊर्णनाभेः सृष्टिचक्रस्य, भृङ्गिकीटात् एकाग्रतायाश्च शिक्षा दत्तात्रेयाचार्येण प्राप्ता। अत्र ध्यातव्यं यत् आचार्येण कस्यचित् जीवस्य गुणः साक्षात् गृहीतः, कस्यचित् च दुर्गुणवशात् तस्य दुर्दशाम् अवलोक्य पुनः शिक्षा प्राप्ता। अतः

मनुष्येण शिक्षायाः सम्प्राप्तौ उदात्तरूपेण चिन्तनीयम्। यतः यत् किमपि उत्तमं स्वीकर्तुं शक्यते, तत् स्वीकरणीयम् इति।

**सद्वर्तनञ्च विद्वत्ता तथाध्यापनकौशलम्।**
**शिष्यप्रियत्वमेतद्धि, गुरोर्गुणचतुष्टयम्।।**

सामान्यतः एवं चिन्त्यते यत् गुरोः दायित्वमस्ति शिक्षणम्। सः यदि सम्यक्तया पाठयति तर्हि तस्य दायित्वस्य इतिश्रीः जायते। यथा हि उक्तं भवभूतिना–

**वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे**
**न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।**
**भवति च पुनर्भूयान् भेदः फलं प्रति तद्यथा**
**प्रभवति शुचिर्बिम्बाग्राहे मणिर्न मृदादयः।।**[१४]

अर्थात् यथा सूर्यस्य प्रकाशं मणिः गृह्णाति किन्तु मृदा नैव, तथैव गुरुः अपि सर्वेभ्यः ज्ञानं ददाति, किन्तु तत् ज्ञानं व्युत्पन्नशिष्याः एव स्वीकुर्वन्ति, न तु मूढाः इति। एवमेव आध्यात्मिकगुरोः कृते तु सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृतः।[१५] इति कथनेन केवलं तत्त्वज्ञानस्य लक्षणमेव पर्याप्तं मतम्। किन्तु परिवर्तिते काले एतावत् विधानं कथमपि पर्याप्तं वक्तुं न शक्यते। अद्य शिक्षाचक्रे केन्द्रे छात्रः वर्तते। व्यक्तिगतभेदस्य सिद्धान्तं मनसि निधाय छात्रस्य आवश्यकतानुरूपेण शिक्षकेण आत्मनः शिक्षणशैल्यां परिवर्तनम् आनेतव्यमिति। अनेन भावेन आधुनिकशिक्षकस्य अधोनिर्दिष्ट षट् गुणाः कल्पयितुं शक्यन्ते, यथा हि –

**विद्वत्ता दक्षता शीलम्, सङ्क्रान्तिरनुशीलनम्।**
**शिक्षकस्य गुणाः सप्त सचेतस्त्वं प्रसन्नता।।**

स्पष्टतः उत्तमशिक्षकस्य सप्त गुणाः भवितव्याः। सः विद्वान् स्यात्। सः शिक्षणे दक्षः भवेत्। तस्य शीलम् अर्थात् चारित्र्यम् उत्तमं भवेत्। तस्य ज्ञानसङ्क्रमणसामर्थ्यम् उत्कृष्टं स्यात्। सः अनुशीलनम् अर्थात् नवीनज्ञानस्य अन्वेषणाय अनुसन्धानं कुर्यात्। तस्य सचेतस्त्वम् अर्थात् संवेदनापूर्णं हृदयं भवेत्। तन्मुखे च सर्वदा स्मितहासेन प्रसन्नता भवेत्।

एवमेव अन्यत्र व इति वर्णेन पञ्च गुणाः प्रोक्ताः। ते च यथा वस्त्रम्, वपुः, (शरीरम्), वाक् (वाणी), विद्या विनयश्च इत्येतेषां गुणानां संधारणेन शिक्षकस्य सम्मानः भवति, यथा हि कथितम् –

**वस्त्रेण वपुषा वाचा, विद्यया विनयेन च।**
**वकारैः पञ्चभिर्युक्तः, गुरुः प्राप्नोति गौरवम्।।**[१६]

एवमेव अन्ये गुणाः अपि उक्ताः –

**कुशलधीः सदाचारः, सर्वशास्त्रार्थपारगः।**
**नित्यनैमित्तिकानाञ्च, कार्याणां कारकः गुरुः।।**[१७]

आङ्ग्लभाषायाम् आभाणकमस्ति यत् To teach John Latin, teacher must know John as well as Latin अर्थात् जॉन नामकं छात्रं लैटिन-भाषां पाठयितुं यावत् लैटिन-भाषां जानाति, तावदेव जॉन नामकं छात्रमपि जानीयात्। अस्य कथनस्य संस्कृतस्य शिक्षणसन्दर्भे अपि प्रासङ्गिकता वर्तते यत् संस्कृतशिक्षकः संस्कृतभाषया सह संस्कृतस्य अध्ययनाय उपस्थितं बालकमपि जानीयात्, अर्थात् तस्य रुचिः, अधिगमसामर्थ्यम्, पूर्वानुभवाः, विचाराः, सम्भावनाः इत्येतत् सर्वमपि ज्ञातव्यमिति। एतदर्थं आवश्यकमस्ति यत् संस्कृतशिक्षकः मनोविज्ञानी अपि भवेत्।

शिक्षायाः सफलता शिक्षकस्य कुशलतायां निर्भरति। संस्कृतशिक्षणं सरलं रुचिकरं प्रभावपूर्णं च कर्तुं शिक्षणकलादक्षः संस्कृतशिक्षकः आवश्यकः। अनया दृष्ट्या संस्कृतशिक्षकस्य गुणाः अधोलिखितरूपेण भवितुमर्हन्ति -

१. संस्कृतशिक्षकः संस्कृतस्य भाषारूपस्य विषयरूपस्य च अधिकारी स्यात्।
२. संस्कृतशिक्षणस्य सिद्धान्तानां विधीनाम् उपागमानां च ज्ञाता स्यात्।
३. बाल-मनोविज्ञानस्य शिक्षा-मनोविज्ञानस्य च ज्ञानी भवेत्।
४. तस्मिन् सविनोदं कक्षायाः वातावरणस्य नियन्त्रणयोग्यता स्यात्।
५. शिक्षणे प्रसङ्गानुकूलरूपेण कथानां श्लोकानाञ्च कुशलवक्ता भवेत्।
६. संस्कृतशिक्षकः व्यावसायिकरूपेण दक्षः भवेत्।
७. व्यक्तित्वस्य बाह्याभ्यन्तरगुणैः अर्थात् आकृत्या व्यवहारेण च उत्तमः स्यात्।
८. शैक्षिकनवाचाराणाम्, मूल्याङ्कनविधीनां समसामयिकघटनानां च ज्ञानी स्यात्।

**संस्कृतशिक्षकस्य दायित्वानि**

**सततं प्रातरुत्थाय दन्तधावनपूर्वकम्।**
**स्नात्वा हुत्वा अथ शिष्येभ्यः कुर्यादध्यापनं नरः।।**[१८]

'मुक्तश्चान्यान् विमोचयेत्' इति वचनदिशा शिक्षकस्य दायित्वं प्रथमतः समायाति यत् सः आत्मना प्राप्तेन ज्ञानेन लाभान्वितः भूत्वा तत् ज्ञानम् अन्येभ्यः अपि दद्यात् येन समाजे शिक्षायाः प्रसारः स्यादिति। शिक्षकस्य दायित्वं कक्षासु विद्यालये वा समाप्तं न भवति, अपितु तस्य किमपि सामाजिकं दायित्वमपि भवति। लेखनबलेन सः व्यवस्थायाः समीक्षां कृत्वा समाजसुधारकरूपेण अपि आत्मनः दायित्वस्य पूर्तिं कर्तुं प्रभवति। सः कर्तव्यच्युतान् अकर्मण्यनिद्रावशान् छात्रान्, समाजसेवकान्, पथिकान्, क्षुधया पीडितान्, भयभीतान् जनान्, भाण्डारनिधिरक्षकान्, प्रतिहारिजनान् च सत्कर्तव्यं प्रबोधयेत् इति। यथा हि उक्तम् -

**विद्यार्थी सेवकः पान्थः क्षुधाऽऽर्तो भयकातरः।**
**भाण्डारी प्रतिहारी च सप्त सुप्तान् प्रबोधयेत्।।**[१९]

**सन्दर्भाः**


१. शब्दकल्पद्रुमः, द्वितीयभागः, पृ.सं. ३४०
२. तन्त्रसङ्ग्रहः
३. गुरुगीता, ३४
४. याज्ञवल्क्यस्मृतिः, १/३४
५. वायुपुराणम्, ५९/३०
६. मनुस्मृतिः, २/१४०
७. अथर्ववेदः, ११/५/१४
८. तैत्तिरीयोपनिषद्, ४/३
९. मनुस्मृतिः, २/१४१
१०. मालविकाग्निमित्रम्, १/१६
११. पद्मपुराणम्
१२. विदुरनीतिः, ८६
१३. श्रीमद्भागवतमहापुराणम्, ११/७/३३-३५
१४. उत्तररामचरितम्, २/४
१५. कुलार्णवतन्त्रम्, १३/१२१
१६. विकिस्रोतः, सुभाषितसङ्ग्रहः, १०५
१७. भोजविरचितः, युक्तिकल्पतरः, १४
१८. पराशरमाधवः, पृ.सं. १३६
१९. चाणक्यनीतिः, ९/६


सहायकाचार्यः, शिक्षाशास्त्रविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
जयपुरपरिसरः, जयपुरम्

# महर्षिदयानन्दस्वामिनः शैक्षिकदर्शनं संस्कृतशिक्षणं शास्त्रशिक्षणं प्रति योगदानञ्च

डॉ. देवदत्त सरोदे

**प्रास्ताविकम् -**

भारतस्यैतिह्ये एकोनविंशतितमाशताब्दी नवजागरणशताब्दी इति कथने नास्ति अतिशयोक्तिः। आभारतं परस्परं द्विषत्सु भारतीयनृपेषु, अविद्यायां रतेषु जनसामान्येषु, आङ्ग्लान् सेवमानेषु मैकाले-मानसपुत्रेषु, पाखण्डेषु, अधर्मेषु, सम्पृक्तेषु धर्ममार्तण्डेषु आङ्ग्लदास्यशृङ्खलया परिपीड्यमानेषु भारतीयजनेषु, सर्वत्र अराजकत्वमुपप्लवः, अन्यायः, कदाचारः, शोषणं, वचनम्, इत्येतस्यैव प्राबल्यम् आसीत्। नानाजातिषु विभक्तो भारतीयसमाजः अवर्तत, एता जातयः परस्परं कलहायन्ते स्म। धर्मगुरवः अन्योऽन्यं असहमाना द्विषन्ति स्म। धर्ममूढाः दिङ्मुग्धाः भारतीयाः कामकारतः प्रवर्तन्ते स्म। नाना मिथ्या सम्प्रदायाः मतानि गुरवः भगवन्तः पाखण्डिनः जनान् प्रलोभ्य वञ्चयन्ति स्म। देशे यवनानां शासनं, आर्याणां धर्मपरिवर्तनं विधाय यवनक्रीस्तइस्लाममतेषु दीक्षितान् कृत्वा यावनमतं प्रतिष्ठाप-यामासुः यावनाः। जनेषु दारिद्र्यम्, यावनदास्यं वैदेशिकशासकानां सर्वत्र गुणगौरवं, सामन्ताधिपानां प्रजापीडनमेव परमधर्मः आसीत्। यत्र धर्मनिष्ठा राष्ट्रनिष्ठा निजजातिधर्मभाषासंस्कृतिसभ्यतैतिह्य-महापुरुषाणां गौरवम् अनुदिवसं क्षीयमाणम् आसीत् एतादृशीषु विषादस्थितिषु स्वामीदयानन्दो जनिं लेभे। स्वामिदयानन्दः स्वजीवनकाले नैकविधसामाजिकधार्मिकशैक्षिककार्याणि चकारः अस्मिन् पत्रे स्वामिदयानन्दस्य शैक्षिकदर्शनं शैक्षिकयोगदानमधिकृत्य विचारो विधीयते।

**स्वामिदयानन्दस्य संक्षिप्तजीवनपरिचयः -**

स्वामिदयानन्दस्य जन्म गुर्जरराज्ये मौरवी प्रान्ते टंकारा ग्रामे औदिच्य ब्राह्मणकुले १८२४ ईस्वीयाब्दे अभूत्। अस्य पितुः नाम कर्षनजी तिवारी मातुः नाम रूक्मिणी आसीत्। पिता कर्षन जी परमशिवभक्तः अवर्तत। बाल्यकाले कुलपरम्परामनुसृत्य गृहे एव अक्षराभ्यासः यर्जुवेदस्य कण्ठस्थीकरणं मूलशङ्करेण व्यधायि। १८३७ ईस्वीयाब्दे मूलशङ्करः शिवरात्रौ पितुराज्ञया शिवरात्री व्रतमाचचार। ग्रामशिवमन्दिरे रात्रीजागरणकाले सुप्तेषु सर्वभक्तजनेषु एकाकिनि जागरिते दयानन्दे शिवलिङ्गस्योपरि कश्चन् मूषकः नैवेद्यादिपदार्थान् सेवितुं समारूढः। एतद्वीक्ष्य मूलशङ्करेण चिन्तितं यत् "देवाधिदेवमहादेव" आत्मनि आरूढं क्षुद्रं जन्तुमपि दूरीकर्तुं न प्रभुः तर्हि दैत्यादीन् हन्तुं कथं प्रभवेत्? कैलासवासी शङ्करः अयमेव भवितुनार्हति वस्तुतः शिवः अन्यः भवेत् इति विषण्णमना गृहमुपगम्य मातरमेतद् विनिवेद्य सुष्वाप, ततः परं समतिक्रामत्सु केषुचिद् दिवसेषु तस्य भगिनी मृता पश्चात् वत्सलपितृव्यः दिवंगतः एतन्मरणं

विलोक्य नानाविचारवितर्कविमनायितं मूलशङ्करस्य चित्तं सत्यान्वेषणे संलग्नम्। १८४६ ईस्वीयाब्दे गृहं परित्यज्य सिद्धयोगिनां सविधे सत्यज्ञानप्राप्त्यर्थं प्रयत्नोऽकारि। आभारतं १४ वर्षाणियावत् सत्यान्वेषणे संचचार। एतस्मिन् अन्तरे स्वामिनः पूर्णानन्दात् संन्यासं जग्राह ततः स्वामीदयानन्दसरस्वती सञ्जातः। १८६० ईस्वीयाब्दे मथुरास्थदण्डिविरजानन्द-स्वामिनः सविधे वर्षचतुष्टयं आर्षग्रन्थान् अष्टाध्यायीमहाभाष्यादीन् अधीत्य १८६४ विद्यां परिसमाप्य लोककल्याणं विधातुं मथुरातः निश्चक्राम। १८६७ ईस्वीयाब्दे हरिद्वारस्थ कुम्भमेलावसरे पाखण्डखण्डिनीपताकां तत्र उत्तोल्य समकालिक धर्मक्षेत्रे, सामाजिकक्षेत्रे प्रवृद्धपाखण्डानि खण्डयितुं प्रवृतः।

१८६९ विद्यानगर्यां काश्यां पण्डितैः सह मूर्तिपूजामभिलक्ष्य शास्त्रार्थः सम्पन्नः ३०० पण्डितेषु नैकोऽपि, वेदेषु, मूर्तिपूजासम्मतं प्रमाणं प्रदातुं अलं बभूव तत्र स्वामिदयानन्दोविजयी जातः।

१८७४ ईस्वीयाब्दे राजाजयकृष्णदासस्य प्रेरणया स्वामिदयानन्द १२.६.१८७४ – ३०.९.१८७४ पर्यन्तं कालजयी सत्यार्थप्रकाशग्रन्थः सार्धत्रिमासेषु व्यरचयत्।

१८७५ मुम्बईनगरर्यां काकडवाडी स्थाने प्रथमार्यसमाजस्य स्थापना विहिता। १८७७ कलकत्ताप्रवासे देवेन्द्रनाथमुखोपाध्यायः श्रीकेशवचन्द्रसेनः ब्रह्मसमाजिनौ मिलितौ केशवचन्द्रसेनस्य परामर्शमङ्गीकृत्य केवलं कौपीनधारिदयानन्दः, वस्त्राणि धर्तुं हिन्दीभाषया लेखनं प्रवचनं कर्तुम् अङ्गीचकार, एतस्मिन् वर्षे एव लाहोरनगरे आर्यसमाजस्य स्थापनाकृता। अयमेवार्यसमाज उत्तरभारते सामाजिकधार्मिक-राष्ट्रियसांस्कृतिकनवजागरणे अग्रेसरोऽवर्तत।

स्वामिदयानन्दः १८६४ आरभ्य १८८३ पर्यन्तम् सम्पूर्णे मध्योत्तरभारते वैदिकधर्मस्य प्रचारं प्रसारं अकार्षीत्। सुप्तराष्ट्रस्य धर्मभाषासंस्कृतिस्वदेशाभिमानं प्रबोधयाञ्चकार एतन्मध्ये, नैकेशास्त्रार्थाः, चर्चाः विहिताः। ग्रन्थलेखनं, विद्वद्मेलनं, समाजसंस्करणं कृतं। गुणकर्मस्वभावानुसारं वर्णव्यवस्थां, वेदोक्तधर्मव्यवस्थां पुरस्कृत्य, प्रचारं चकार। बालविवाहनिषेधः विधवाविवाहव्यवस्था, स्त्रीशिक्षा, स्त्रीवेदाधिकारः, शूद्रशिक्षाधिकारः वेदाधिकारश्च एकेश्वरवादः मूर्तिपूजाखण्डनं, आदर्शवेदोक्तजीवनम् इत्यादीनि नानाकार्याणि महर्षिदयानन्देन समपादि।

सत्यसनातनवैदिकधर्मप्रचारप्रसारकाले पाखण्डखण्डनसमये स्वामिनि दयानन्दे षोडशकृत्वः विषप्रयोगः अकारि पापिपाखण्डिधूर्तजनैः। विषप्रभावेण अन्ते १८८३ ईस्वीयाब्दे, दीपावली अमावस्यायां भुवं विरहय्य स्वामिदयानन्दः दिवं जगाम।

**शिक्षा ( Education )** – शिक्ष्-विद्योपादाने इत्यस्माद्धातोः गुरोश्चहलः इति अप्रत्यये कृते स्त्रियां टापि सति शिक्षा इति पदं निष्पद्यते शिक्ष्यते, बुध्यते ज्ञायते अनयेति शिक्षा, शिक्षा नाम ज्ञानप्रदानं ज्ञानार्जनं च महर्षिदयानन्दस्वामी स्वकीये सत्यार्थप्रकाश इति पुस्तके द्वितीयसमुगासे अथ शिक्षां प्रवक्ष्यामः इति बालशिक्षामधिकृत्य वर्णनं किञ्च तृतीयसमुगासे अथ अध्ययनाध्यापनविधिं व्याख्यास्यामः इति शिक्षामधिकृत्य वर्णनं चकार अपि च ऋग्वेदादिभाष्यभूमिका इति पुस्तके पठनपाठनविषयमभिलक्ष्य

वर्णयामास तथा च संस्कारविधिः इति ग्रन्थेऽपि पठनपाठनविधिः इति शीर्षके अधिशिक्षं लिलेख। स्वामी "स्वमन्तव्यामन्तव्यप्रकाशे" शिक्षामेवाह ... शिक्षा – "यया विद्या, सभ्यता, धर्मात्मता, जितेन्द्रियता .... इत्यादीनां संवृद्धिः भवेत् अपिच आभिः अविद्या'दयो दोषाः नष्टाः स्युः।"

किञ्च स्वामिनः साहित्ये तत्र तत्र विकीर्णेषु शिक्षावचनेषु तेषां समग्र शिक्षाविषयकाभिमतम् एवं जातीयकं भवितुमर्हति। शिक्षा नाम परमाणुतः परमेश्वरपर्यन्तं यथावत् ज्ञानप्राप्तिः अथवा पराविद्यायाः अपरा-विद्यायाः च संप्राप्तिः। बौद्धिकशैक्षिकशारीरिकात्मिकसामाजिक धार्मिकानुशासनात्मकविकासयुत लोकोपकारकसगाारित्र्यसमन्वितव्यक्तित्वस्य निर्माणम्।

श्रीमतः दयानन्दस्वामिनः साहित्यानुशीलेनेन एतत् सुतरां स्फुटीभवति यत् तस्य शिक्षायाः तात्पर्यं कियत् गभीरतरं उदात्ततरञ्च विद्यते इति यथा आर्यसमाजस्य दशनियमेषु अष्टम नियमः एवमस्ति।

**"अविद्यायाः नाशो विद्यायाः वृद्धिः कर्त्तव्येति।"**

किञ्च षष्ठे नियमे एवमाह-

**लोकोपकारः अस्य समाजस्य प्रधानोद्देश्यं विद्यते अर्थात् शारीरिकात्मिकसामाजिकोन्नतिसम्पादनम्।** सत्यार्थप्रकाशस्य तृतीयसमुगासस्य आरम्भे स्वामी एवमुवाच "आत्मनः अपत्यानि उत्तमविद्याशिक्षागुणकर्मशीलस्वरूपाभरणैः सुभूषितानि स्युः इत्येतद् मातृपित्राचार्यसम्बन्धिनां मुख्यं कर्त्तव्यम् विद्यते" अग्रेऽवोचत् – "यतः सुवर्णादिभूषणधारणेन केवलं देहाभिमानं विषयासक्तिः चौरादीनां भयं भवति, क्वचिद् मरणमपि संभवेत्।"

**शिक्षायाः महत्त्वम्** –

शिक्षायाः माहात्म्यं प्रतिपादयन् महर्षिः प्राह –

**"विद्याविलासमनसो धृतशीलशिक्षाः,**
**सत्यव्रतारहितमानमलापहाराः।**
**संसारदुःखदलनेन सुभूषिताः ये,**
**धन्या नरा विहितकर्मपरोपकाराः॥"**

येषां मनांसि विद्याविलासे निमग्नानि सन्ति ये च जनाः सुशीलस्वभावयुताः सत्याचरणे तत्परा अपि च पवित्रा मदविरहा वेदोक्तकर्मभिः लोककल्याणे संलग्ना भवबन्धदुःखभञ्जनेन लोके समादृताः तादृशाः जनाः धन्याः भवन्ति इति। मनुरपि प्राह –

**"विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति।"**

द्वितीयसमुगासस्य अन्ते पाठनस्य महत्त्वं पित्रोः कर्त्तव्यं च स्मारयन् महर्षिः उवाच –

**"माता शत्रुः पिता वैरी येन बालो न पाठितः।**
**न शोभते सभामध्ये हंसमध्ये बको यथा॥"**

**स्वामिदयानन्दाभिमतानि शिक्षायाः उद्देश्यानि –**

१. धार्मिकतास्तिकतासमन्वितसगाारित्र्यस्य निर्माणम्।
२. शारीरिकात्मिकसामाजिकविकाससम्पादनम्।
३. विद्यायाः वृद्धिः अविद्यायाः निर्मूलनम्।
४. ब्रह्मचर्यं सत्प्रवर्तनं धर्माचरणं तपश्चरणम् इत्यादीनां सद्गुणानामाचरणम्।
५. मानवस्य सर्वाङ्गीणविकाससम्पादनं येन अभ्युदयनिश्रयसोरवाप्तिः स्यात्।
६. वेदानां वेदानुकूलशास्त्राणां संरक्षणं पठनं पाठनम्।
७. वैदिकसंस्कृतेः संरक्षणम्।
८. नैतिकमूल्यानां संवर्धनम्।
९. व्यष्टिहितं समष्टिहितञ्च इत्येतद् द्वयं सम्पादनीयम्।
१०. शिष्टाचारः सभानुकूलव्यवहारः।
११. विज्ञानं, शिल्पं, कलां अन्या उपाधिविद्याः कौशलानि सर्वमेतत् समुपार्जनीयम्।
१२. सत्यासत्यनिर्णयसदसद्विवेकसम्पादनम्।
१३. राष्ट्रभक्तिः दैवभक्तिः शास्त्रनिष्ठा वर्धनीया।
१४. लोककल्याणभावना।
१५. समेषां कृते भेदभावं वर्जयित्वा समानशिक्षणसमानसमुदाचारसमानावकाशकल्पनम्।
१६. उत्तमसन्नागरिकनिर्माणम्। कृण्वन्तो विश्वमार्यम्।
१७. स्वदेशाभिमानजागरणम्।
१८. पारतन्त्र्यविनिर्मूलनं स्वातन्त्र्यप्राप्तिः।
१९. आधुनिकतन्त्रज्ञानवाणिज्यकौशलसमुपार्जनम्।
२०. वसुधैवकुटुम्बकम् इति भावना समुत्पादनीया।
२१. संस्कृतलिपिभाषाव्याकरणज्ञानार्जनम्।
२२. अन्यभारतीयभाषापाश्चात्त्यभाषाधिगमः।
२३. समग्रान्तरिकबाह्यव्यक्तित्त्वस्य सर्वविधविकाससम्पादनम्।
२४. प्रकृतेः पर्यावरणस्य च संरक्षणं तदनुकूलाचरणम्।
२५. ज्ञानार्जनम् अनुभूतिसम्पादनञ्च।

**महर्षिदयानन्दाभिमता शिक्षाव्यवस्था –**

शिक्षायाः उद्देश्यानि सम्प्राप्तुं शिक्षणाधिगमौ सम्यक् निर्वर्तयितुं काचित् सुनियोजिता व्यवस्था स्यात् यया शिक्षणाधिगमकार्यं निर्विघ्नं सम्पद्येत।

महर्षिदयानन्दस्वामी स्वकीये प्रसिद्धे सत्यार्थप्रकाशग्रन्थे द्वितीये तृतीये च समुगासे शिक्षाव्यवस्था कथं स्यात् इति वर्णयति। तत्र द्वितीयसमुगासे बालशिक्षां वर्णयन् "**मातृमान् पितृमान्** आचार्यवान् **पुरुषोवेद**" इति शतपथब्राह्मणस्य वचनमुपस्थाप्य एवमाह "यस्य माता सुशीला धार्मिकी, विदुषी भवति यस्य पिता सदाचारी परोपकारी विद्वान् भवति यस्य गुरुः बहुश्रुतः छात्र-वत्सलः आचारवान् भवति निश्चप्रचं स जनः अतीव भाग्यशाली भवति। तत् कुलं धन्यं भवति।" **आचार्यः** साङ्गोपाङ्गवेदविद्यानामध्यापकः सत्याचारस्य प्रापकः असत्याचारस्य हारकः इति स्वामिदयानन्दाभिमतम्। निरूक्तकारः **यास्कः** ब्रूते - "आचार्यः कस्मात् आचारं ग्राहयति आचनोति अर्थम् आचिनोति बुद्धिमिति वा।"

स्वामिनः मते शिक्षाया आरम्भः गर्भादानाद् आरभ्य भवति अतः मातापितरौ उत्तमसन्तान-प्राप्त्यर्थं सदाचरणमुत्तमपदार्थानां सेवनं कुर्याताम्। स्वामीदयानन्दः मनुते यत् गर्भादानाद् आरभ्य माता सद्वर्तनेन स्वाध्यायेन गर्भस्थशिशुं परिपालयेत् संस्कुर्यात् बालजन्मनः परं पञ्चवर्षपर्यन्तं मातैव-शिष्टाचारान् वर्णोच्चारणं मातृभाषां शिक्षयेत् पश्चात् बालकं पिता सप्तमवर्षंयावत् विद्यां, लौकिक-व्यवहारान् बोधयेत्। ततः परं अष्टमेवयसि[१] गुरुकुले पाठशालायां वा प्रेषयेत् यत्र उत्तमाचार्यस्य सविधे सदाचारान् नैतिकगुणान् नानाविद्याः शिल्पकलाः बालकः सम्पादयेत्।

१. प्राथमिकी शिक्षा गृहे भवेत् ततः परं उगाशिक्षा गुरुकुले पाठशालायां भवेत्।
२. पितरौ आत्मनः अपत्यस्य लालनं न कुर्यातां यतः लालनाश्रयाः दोषा भवन्ति।[२]
३. प्राचीनर्षिमुनीनां भारतीयशिक्षाव्यवस्था भवेत्।
४. सहशिक्षा अर्थात् स्त्रीपुसां सम्मिलिताशिक्षा न भवेत् इति स्वामिनः मतम्।
५. बालकानां शिक्षणं विद्याध्ययनं वा गुरुकुले पाठशालायां कन्यानां शिक्षणं कन्यागुरुकुले कन्यापाठशालासु वा भवेत्।
६. एतद्गुरुकुलं ग्रामाद् नगराद् वा दूरे एकान्ते अरण्ये वा भवेत्। कन्यानां गुरुकुलानि पाठशालाः बालकानां गुरुकुलेभ्यः दूरे पृथक् च स्युः।
७. गुरुकुलस्य स्थानम् अथवा पाठशालायाः स्थानम् नदीनां संगमे३ नदीतीरे, उपत्यकासु आरण्यकप्रान्ते रमणीयप्राकृतिकवातावरणे स्यात्।
८. बालकानां गुरुकुले पुरुषा आचार्याः शिक्षकाः स्युः, बालिकानां पाठशालासु महिला आचार्या भवेयुः।
९. सर्वेभ्यः पक्षपातरहिता समानाशिक्षा, तुल्यान्नपानवस्त्रसाधनसामग्रीसम्पूर्तिः समानसमुदाचारः, समानावसरो भवेत्। स्वावलम्बिनी गुरुकुलीयव्यवस्था भवेत्, समेषां जनानां कृते निःशुल्का अनिवार्या शिक्षा स्यात्। निर्धननानां कृतेऽपि शिक्षाव्यवस्था भवेत्।

१०. अष्टमे वर्षे बालकमुपनीय गायत्रीमन्त्रोपदेशं विधाय वेदारम्भं आचार्यः कुर्यात्। प्रत्यहं सन्ध्योपासनां प्राणायामम् अग्निहोत्रं च ब्रह्मचारी कुर्यात्। ब्रह्मचारी सदाचरणे तत्परः भवेत् तथा आचार्यः ब्रह्मचारिणः दोषान् अपाकृत्य सदाचारान्[४] धर्माचरणं शिक्षयेत्।

११. शिक्षा शूद्राणां महिलानां कृतेऽपि स्यात् न केवलं शिक्षा वेदाध्ययनमपि कारयेत्।

अत्र केचन आक्षिपन्ति यत् ''स्त्रीशूद्रौ नाधीयाताम् इति श्रुतेः'' अतः स्त्रीशूद्राणां वेदाध्यापनं न कार्यम्। स्वामी दयानन्दस्तु एतन्न सहते। इदं वचनं खण्डयन् श्रुतिप्रमाणं ददौ –

**''यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**

**ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय॥'' यजुर्वेदः २६.२**

**पाठ्यक्रमः पाठ्यग्रन्थाश्च –**

**आर्षम् अनार्षम् –**

महर्षिदयानन्दः यदा गुरुवरविरजानन्दात् व्याकरणमध्यगीष्ट तदा गुरुः तस्मै उपदिदेश यत् ऋषिप्रणीतानि आप्तोपदिष्टानि शास्त्राणि पुस्तकानि पठितव्यानि, लौकिक पुरुषैः निर्मितानि क्षुद्राशयानि अनार्षपुस्तकानि न पठितव्यानि इति। अतः स्वामीदयानन्दोऽपि स्वकीयरचनासु सर्वत्र आर्षग्रन्थानां पठनस्य माहात्म्यं वर्णयामास, तद्यथा सत्यार्थप्रकाशे तृतीये समुगासे ''अनार्षलौकिक ग्रन्थानां पठनं तावत् महतापरिश्रमेण अल्पलाभप्राप्तिः यथा महतो वंशस्तम्भात् लट्वानुकर्षणम्। परन्तु आर्षग्रन्थानां पठनं तथा वर्तते यथा – ''एकदा निमगानं बहुमूल्यमुक्तासम्पादनम्।'' अतः सत्यार्थप्रकाशे ऋग्वेदादिभाष्यभूमिकायां संस्कारविधौ च स्पष्टतया आर्षग्रन्थानामुगेखः तेषां पठनक्रमश्च प्रदत्तः।

**आर्षग्रन्थपठनक्रमः –**

वर्णोगारणशिक्षा अष्टाध्यायी च पाणिनिना प्रणीता। अनयोः कण्ठस्थीकरणं ततः परं संस्कृतभाषाभ्यासः अष्टाध्याय्याः (प्रथमायाः) वृत्तेः अध्ययनम् अर्थात् सूत्रक्रमेण सूत्राणां व्याख्यानं पदसिद्धिश्च तद्यथाः

आदौ पदच्छेदः[५] विभक्तिः, पदार्थः, समासविग्रहः अन्वयः, अर्थनिष्पादनम् पूर्वपक्षः (शङ्का) उत्तरपक्षः (समाधानम्) अनेन क्रमेण समेषां सूत्राणां व्याख्यानं कृत्वा शिक्षयेत्।

अष्टाध्याय्याः सूत्रार्थाध्ययनात् परं धातुपाठस्य दशलकाररूपाणां प्रक्रियासमन्वितं पाठनं कुर्यात्। एतदनन्तरं उणादिकोशस्य गणपाठस्य च पाठने सर्वसुबन्तविषयं भृशं विशदी कुर्यात्। एतस्मात् परं अष्टाध्याय्याः द्वितीयामावृत्तिं (काशिकां) पाठयेत् यत्र शङ्कासमाधानं वार्तिकानि कारिकाः परिभाषाश्च बोधयेत्। इतः परं महाभाष्यं पतञ्जलिमुनिविरचितम् अध्यापयेत्। यदि मतिमन्तः, पुरुषार्थिनः, ऋजवः विद्याभिलाषिनः परिश्रमेण पठेयुः पाठयेयुश्च तदानीं त्रिषु सार्धत्रिषु चतुर्षवा वर्षेषु कृत्स्नं व्याकरणं समपद्येत।

व्याकरणानन्तरं निघण्टुः यास्कमुनिविरचितं निरुक्तं षट्सु अष्टसु वा मासेषु अध्यापयेत्। ततश्च

पिङ्गलाचार्येण प्रणीतं छन्दः शास्त्रं पाठयेत् येन लौकिकवैदिकछन्दसां परिचयो जायेत किञ्च अनेन नवीनश्लोकरचनाम् अधीयीत। यास्कमुनिरचितकाव्यालङ्कारसूत्राणि वात्स्यायनमुनिकृतं भाष्यसहितं शिक्षयेत्। एतत् चतुर्षु मासेषु पठेत् पाठयेत्। मनुस्मृतिं, वाल्मीकिरामायणं, महाभारत-स्थोद्योगपर्वणि विद्यमानां विदुरनीतिं एतेष्वपि उत्तमोत्तमानि प्रकरणानि एकस्मिन् हायने पठेत् पाठयेत् च। अपि च सूर्यसिद्धान्तादिषु ग्रन्थेषु अन्यतमसिद्धान्तग्रन्थात् गणितविद्या यत्र बीजगणितं, रेखागणितं पाटीगणितञ्च पठेत् पाठयेत्। निघण्टुमारभ्य ज्योतिषं यावत् वेदाङ्गानि चतुर्षु वर्षेषु अध्यापयेत्। एतावत् पर्यन्तं वेदाङ्गानामध्ययनक्रमः प्रदर्शितः अधुना उपाङ्गानामध्ययनक्रमः तत्प्रवक्तारः मुनयः तेषां वृत्तिभाष्यादिसाहित्यम् इत्येतत् क्रमशः प्रस्तूयते।

जैमिनिमुनिनां प्रणीतं मीमांसादर्शनं व्यासमुनिरचितं व्याख्यासहितं, कणादमुनिरचितं वैशेषिकदर्शनं प्रशस्तपादभाष्यसहितं गौतममुनिकृतं न्यायशास्त्रं वात्स्यायनमुनिकृतभाष्यसहितं पतञ्जलिमुनिविरचितं योगदर्शनं व्यासमुनिकृतभाष्यसहितं, कपिलमुनिकृतं सांख्यशास्त्रं भागुरिमुनि-विरचितं भाष्यं, वेदान्तदर्शनं जैमिनि अथवा बोधायन इत्यादिमुनिभिः रचितं संस्कृत व्याख्यासहितं पाठयेत्। वस्तुतः वेदान्तदर्शनाध्यापनात् प्राक् ईश, केन, कठ, प्रश्न मुण्डक, माण्डुक्य, ऐतरेय, तैत्तिरीय, छान्दोग्य, बृहदारण्यक इति दशोपनिषदः पाठयेत्। इमामि षड्दर्शनानि द्वयोः वर्षयोः शिक्षयेत्। ततश्च ऐतरेयब्राह्मणम् आश्वलायनकृतं श्रौतसूत्रं गृह्यसूत्रं कल्पसूत्रं (-धर्मसूत्रं) ततः परं वेदाध्ययने पदपाठं क्रमपाठं छन्दः, स्वरं पदार्थम् अन्वयव्याख्यासहितं त्रीषु वर्षेषु अध्यापनं समापयेत्। तद्वद् यजुर्वेदं शतपथब्राह्मणादीनि शिक्षयेत्। सामवेदं सामब्राह्मणं वर्षद्वये अथर्ववेदं गोपथब्राह्मणं पाठयेत्। एतत् सर्वं नववर्षेषु चतुरः वेदान् पठेत् पाठयेत् च। आयुर्वेदा चरकं सुश्रुतं, निघण्टुं पाठयेत्। एतानि आयुर्वेदपुस्कानि त्रिषु वर्षेषु बोधयेत। ततश्च धनुर्वेदं शास्त्रस्त्रविद्यां राज्ञः शिक्षयेत् एतद् अङ्गिरामुनिकृतं विद्यते एतदपि त्रिषु वर्षेषु पठेत् पाठयेत् च। गान्धर्ववेदं यत्र नारदसंहितादिग्रन्थान् स्वर, राग, रागिणी, ग्रामताल मूर्च्छना इत्यादीनाम् अध्यापनं यथावत् त्रिषु वर्षेषु सफलीकुर्यात्। ततश्च अर्थवेदं अथवा शिल्पशास्त्रं त्वष्टुः विश्वकर्मणः मयकृतसंहिताग्रन्थं षट्सु वर्षेषु पठित्वा विज्ञानमर्जयेत् वर्णोगारणशिक्षातः आयुर्वेदपर्यन्तं चतुर्दशविद्याः ३१ वर्षेषु परिसमापनीयाः।

एतद् अतिरिच्य समकालिकपाश्चात्यदेशेषु विकसत् आधुनिकभौतिकविज्ञानं औद्योगिक-यन्त्राणां ज्ञानं भारतीया युवानः सम्यक् अधिगच्छेयुः तदर्थं प्रयत्नोऽपि स्वामिदयानन्देन विहितः शर्मण्य (जर्मनी) देशस्य विपश्चित् जी.एस. वाइस इति महाशय आसीत् तेन सह स्वामिदयानन्दस्य पत्रव्यवहारो विद्यते। एषु पत्रेषु कथं भारतीया जर्मनीदेशे गत्वा तत्रत्य तन्त्रज्ञानं सम्पादयितुमर्हन्ति इति एतस्य विस्तरशः बोधोऽनयोर्मध्ये सञ्ज्ञातपत्रोत्तरमाध्यमेन ज्ञायते।

**स्वामिदयानन्दसाहित्ये शिक्षणपद्धतयः -**

महर्षिदयानन्दः सत्यार्थप्रकाशे तृतीये समुगासे व्याख्यानपद्धतिं दर्शयति तद्यथा अथ पठन-पाठनविधिः इति शीर्षके महर्षि प्राह- ''व्याकरणम् अर्थात् सर्वादौ अष्टाध्यायाः सूत्राणां कण्ठपाठः ततः परं वृद्धिरादैच्

इतिसूत्रस्य पदच्छेदः, विभक्तिः, समासविग्रहः अर्थः ततश्च शब्दसिद्धिः यथा भागः, नायकः, कारकः ... इत्यादयः'' अनेन उद्धरणेन सुतरामेतत् ज्ञायते यत् सूत्रार्थबोधाय व्याख्यानपद्धतिः[७] प्रयोक्तव्येति।

**प्रत्यक्षपद्धतिः –**

सुश्रुतशास्त्रे यथा शरीरावयवानामुगेखो विद्यते तदनुसृत्य शरीरस्य गात्राणि विशीर्य तद् अवलोकिव्यम् अनेन प्रत्यक्षपद्धतेः अपि च कृत्वाधिगम पद्धतेः (Learning by doing) बोधो भवति।

**प्रयोगपद्धतिः –**

अर्थवेदः अथवा शिल्पशास्त्रं यथा विश्वकर्मणः त्वष्टुः मयस्य च संहिताग्रन्थाः सन्ति। एतान् षट्सु वर्षेषु अधीत्य तारभूगर्भविद्याः साक्षात् कु र्यात् अर्थात् प्रयोगं विधाय साक्षात्कारः कार्यः। श्रवणं मननं निदिध्यासनं साक्षात्कारः इति साधनचतुष्टयम्, इत्यस्य उगेख नवमसमुगासे मुक्तिसाधनेषु कृतम्। अपि च सत्यासत्यनिर्णयाय महर्षिदयानन्दः उवाच – पठनं पाठनं सम्यक् परीक्ष्य कर्तव्यं परीक्षापञ्चधा भवति।

**प्रथमा –**

यद् यद् ईश्वरस्य गुणकर्मस्वभावानुकूलम् अपि च वेदानुकूलं भवति तत्सत्यमन्यत् मिथ्या।

**द्वितीया –**

यद् यत्, सृष्टिनियमानुसारं विज्ञानानुकूलं भवति तत् सत्यम् अन्यत् असत्यम्।

**तृतीया –**

आप्तकथनं यथा धार्मिकः सत्यवादि निश्च्छलः परोपकारी विपश्चित् यद् यद् उपदिशति तत् सत्यं अन्यत् मिथ्या।

**चतुर्थी –**

आत्मनः पवित्रता, विद्यायाः अनुकूलं तद्यथा आत्मनि रहसि सत्यासत्यप्रत्ययो भवति तथा निर्णेतव्यम्।

**पञ्चमी –**

अष्टौ प्रमाणानि तानि च प्रत्यक्षम्, अनुमानम्, उपमानम्, आप्तोपदेशः (शब्दः) ऐतिह्यम् अर्थापत्तिः संभवः, अभावः।

**प्रश्नोत्तरपद्धतिः –**

वाकोवाक्यपद्धतिः अथवा प्रश्नोत्तरपद्धतिः स्वामिदयानन्देन भृशं प्रयुक्ता। महाभाष्ये प्रयुक्त-वाक्योवाक्यपद्धत्याः प्रभावः स्वामिनः साहित्ये पदे पदे परिलक्ष्यते। भाष्यप्रमाणानि अपि असकृत् उदाहरति दयानन्दस्वामी।

**संवादपद्धतिः (वार्तालापपद्धतिः) –**

महर्षिदयानन्दस्य प्रसिद्धग्रन्थः सत्यार्थप्रकाशः संवादपद्धत्या लिखितः विद्यते। अतः स्वामी इमापद्धतिं पुरस्करोति इति इङ्गितेन चेष्टितेन, ग्रन्थलेखनव्यवहारेण ज्ञायते। एताः अतिरिच्य सूत्रपद्धतिः,

स्मरणपद्धतिः (कण्ठपाठपद्धतिः) अपिनिर्दिष्टा तद्यथा ''यः वेदानां पाठमात्रं, स्वरान् च वेत्ति न तु अर्थम् ...'' इत्यादि।

अनेन ज्ञायते वेदाध्ययनं वेदस्मरणं कण्ठपाठस्तु कर्तव्यः परं अर्थज्ञानमपि अर्जनीयम्। स्वामिदयानन्दः अध्यापनमाध्यमं स्पष्टतया नोगिलेख परन्तु संकेतेन ज्ञायते हिन्दीभाषामाध्यमेन पाठनं भवेत्। परन्तु यदि पठनपाठनं संस्कृतमाध्यमेन स्वामिनः काले तदनुपरवर्तिनिकाले गुरुकुलेषु अभविष्यत्, तर्हि इदानीं वैदिकशास्त्राणां संस्कृतसाहित्यस्य संस्कृतभाषाभाषणप्रवीणाः विद्वांसः पुष्कला अभविष्यन्। प्रचारः प्रसारस्तु हिन्दीभाषायां भवतु नाम परन्तु संस्कृतशास्त्राणामध्यापनं संस्कृतमाध्यमेनैव भवेत्।

**अन्तेवासिनाम् अनुशासनं ( कर्तव्यानि ) –**

१. अपोऽशान, २. कर्म कुरू ३. दिवा मा स्वाप्सीः, ४. आचार्याधीनो वेदमधीष्व ५. द्वादश वर्षाणि प्रतिवेदं ब्रह्मचर्यं गृहाण वा ब्रह्मचर्यं चर ६. आचार्याधीनो भवान्यत्राधर्माचरणात् ७. क्रोधानृते वर्जय ८. मैथुनं वर्जय ९. उपरि शय्यां वर्जय १०. कौशीलवगन्धाञ्जनानि वर्जय ११. अत्यन्तं स्नानं भोजनं निद्रां जागरणं निन्दां लोभमोहभयशोकान् वर्जय १२. प्रतिदिनं रात्रेः पश्चिमे यामे चोत्त्थायावश्यकं कृत्वा दन्तधावनस्नानसन्ध्योपासननेश्वरस्तुतिप्रार्थनोपासनायोगाभ्यासान्नित्यमाचर १३. क्षुरकृत्यं वर्जय १४. मांसरुक्षाहारं मद्यादिपानं च वर्जय १५. गवाश्वहस्त्युष्ट्रादियानं वर्जय १६. अन्तर्ग्रामनिवासोपान–च्छत्रधारणं वर्जय १७. अकामतः स्वयमिन्द्रियस्पर्शेन वीर्यस्खलनं विहाय वीर्यं शरीरे संरक्ष्योर्ध्वरेताः सततं भव १८. तैलाभ्यङ्गमर्दनात्यम्लातितिक्तकषायक्षाररेचनद्रव्याणि मा सेवस्व १९. नित्यं युक्ताहार–विहारवान् विद्योपार्जने च यत्नवान् भव २०. सुशीलो मितभाषी सभ्यो भव २१. मेखलादण्डधारण-भैक्ष्यचर्यसमिदाधानोदकस्पर्शनाचार्यप्रियाचरणप्रातः–सायमभिवादनविद्यासंचयजितेन्द्रियत्वादीन्येते ते नित्यधर्माः। अपि च ऋतञ्च स्वाध्यायप्रवचने .... तद्धितपस्तद्धि तपः ..... एतादृशानि बहूनि सदाचारसंकीर्तनानि तत्र तत्र कृतानि सन्ति।

**आचार्यान्तेवासिनां सम्बन्धः –**

ब्रह्मचारी आत्मनः गृहं परित्यज्य विद्याध्ययननिमित्तं आचार्यकुलं गुरुकुलं वा गच्छेत् तत्र गुरुकुले गुरुः शिष्यम् आत्मनः पुत्रमिव आचरति अतः पुत्रीयति आचार्यः शिष्यम् इति व्यवहारः किञ्च –

**''आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।**
**तं रात्रीस्तिस्त्र उदरे बिभर्ति तं द्रष्टुमभिसंयन्ति देवाः॥''** अथर्व. का. ११। सू. ५ म. १

अपि च –

**''ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति।**
**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते॥''** अथर्व. का. ११। सू. ५ म. ४

आभ्यां वेदमन्त्राभ्यां गुरुशिष्ययोः सम्बन्धः कीदृशो वर्तत इति यथा जननीपुत्रयोः आत्मीयः स्नेहपूर्णः दृढघनिष्ठसम्बन्धो भवति तद्वद् गुरुशिष्ययोः सम्बन्धो भवति। किञ्च अत्र बालकस्य द्वितीयजन्म जायते

तस्माद् द्विजो भवति। गुरुः छात्रेषु स्निह्यति। छात्राः श्रद्धया, भक्त्या गुरोः सेवां सुश्रुषां कुर्वन्ति। गुरोराज्ञां शिरसा वहन्ति। उक्तञ्च आज्ञाहि गुरूणामविचारणीया इति।

स्वामिदयानन्दस्य शिक्षाविषयकं चिन्तनम् अद्वितीयम् अपूर्वं विद्यते तस्मात् सत्यार्थप्रकाशे संस्कारविधौ, ऋग्वेदादिभाष्यभूमिकायां व्यवहारभानौ च एतद् अतिरिच्य तत्र तत्र वेदभाष्ये अन्येषु ग्रन्थेषु गुरुशिष्यशिक्षणं वर्तनानि इमानि सर्वाणि भृशं प्रावोचत् दयानन्दस्वामी। सत्यज्ञानाय सत्यार्थप्रकाशे जननाद् आरभ्यः मरणपर्यन्तं मानवसंस्करणं निर्माणं संस्कारविधौ सत्यार्थप्रकाशे ऋग्वेदादिभाष्य-भूमिकायां विशदतया दिग्दर्शनं स्वामिपादाः अकार्षुः।

स्वामीदयानन्दः मनुते यत् गुरुः शिष्यस्य सर्वाङ्गीणविकासाय सर्वविधहिताय यतेत शिष्योऽपि गुरुप्रियाचरणे रतो भवेत् एवंपरस्परं प्रीत्या भावयेत् विद्याध्ययनाध्यापनं ब्रह्मचर्यं तपश्चरणं, लोकोपकारं च कुर्यात्। आचार्यः शिष्यस्य मानसपिता भवति तथैव शिष्यो गुरोः मानसपुत्रः भवति इह विद्याकृतसम्बन्धो भवति।

स्वामिदयानन्दस्य शिक्षावैशिष्ट्यानि -

१. आर्षानार्षविवेकः, ऋषिभिः प्रोक्तं कृतं वा निर्भ्रान्तं शास्त्रं पठनीयम्। अनार्षग्रन्थजालानां परित्यागो कर्तव्यः येन अल्पेन आयासेन अल्पेन कालेन बहु समासादितं भवति।

२. वेदाः सर्व सत्यविद्यानां आकराः सन्ति वेदानामध्ययनम् अध्यापनं नः परमकर्तव्यम्।

३. वेदाध्ययनं केवलं पाठमात्रं स्मरणमात्रं न भवेत् अपितु स्वरशब्दार्थक्रियासहितं स्यात्[८]।

४. स्वावलम्बिनी अल्पव्ययसाध्या, विकेन्द्रिता, व्यक्तिशः सम्पर्कयुता, सदाचरणपूर्णा प्रकृत्यानुकूला, पर्यावरणेन संगतो अल्पसाधनापेक्षिता, ऐहिकामुष्मिकफलदा विद्यते।

५. महिलानां शूद्राणां च कृते शिक्षा वेदाध्ययनाधिकारश्च[९]।

६. सर्वेभ्यः समाना पक्षपातरहिता अनिवार्या निःशुल्का शिक्षा।

७. दर्शनानां सुव्यवस्थिताध्ययन क्रमः अपि च दर्शनपरम्परासु प्रचलितविरोधभावमपनीय तेषु सामञ्जस्य समन्वयस्थापनम्।

८. आन्तरिकबाह्यव्यक्तित्वविकासाय अपि च शैक्षिकबौद्धिकमानसिकाध्यात्मिकनैतिकगुणानां विकासाय पूर्णावकाशः।

९. मातापितरौ प्रति समाजं प्रति स्वदेशं प्रति लोकं प्रति प्रकृतिं प्रति आत्मानं प्रति, परमात्मानं प्रति उत्तरदायित्वपूर्णं शिक्षणम्।

१०. अल्पकालेऽनेकशास्त्राणि कलाः साहित्यं विज्ञानम् अधिगम्य नानाकौशलसम्पादनक्षमा अभ्रमाशिक्षा।

**स्वामिदयानन्दस्य योगदानम् -**

एतस्मिनैव काले ग्रन्थलेखनकार्यं वेदभाष्यकार्यं अपि शास्त्राध्ययनं संस्कृतपाठशालास्थापनम् अकारि।

महर्षिदयानन्देन लिखिताः इमे ग्रन्थाः –

१. पाखण्डखण्डनम्, १८६७, हरिद्वार कुम्भे, संस्कृतम्।
२. सत्यधर्मविचारः, १८८० शास्त्रार्थ, चाँदपुरमेला, हिन्दी।
३. अद्वैतमतखण्डनम्, १८७०, काशी, संस्कृतम्।
४. प्रतिमापूजनविचारः, १८७३, हुगलीशास्त्रार्थः, हिन्दी।
५. पञ्चमहायज्ञविधिः, १८७४, हिन्दी-संस्कृतम्।
६. सत्यार्थप्रकाशः, १८७४-७५, हिन्दी।
७. आर्याभिविनयः १८७६, १०७ वेदमन्त्रव्याख्या, संस्कृतम्।
८. वल्लभाचार्यमतखण्डनम्, १८७५ (वेदविरुद्धमतखण्डनम्) संस्कृतम्।
९. स्वामिनारायणमतखण्डनम्, १८७६, संस्कृतम्।
१०. वेदान्तिध्वान्तनिवारणम्, १८७६।
११. संस्कारविधिः, १८७६, हिन्दी।
१२. ऋग्वेदादिभाष्यभूमिका, १८७७, हिन्दी-संस्कृतम्।
१३. सत्यासत्यविवेकः, १८७९, हिन्दी।
१४. भ्रान्तिनिवारणम्, १८७७ हिन्दी।
१५. गोकरुणानिधिः, हिन्दी।
१६. संस्कृतवाक्यप्रबोधः १८८०, संस्कृतम्।
१७. व्यवहारभानुः १८८०, हिन्दी।
१८. शिक्षापत्रीधान्तनिवारणम्, संस्कृतम्।
१९. वेदाङ्गप्रकाशः – १४ (हिन्दी-संस्कृत)

१. वर्णोगारणशिक्षा, २. सन्धिः, ३. नामिकः, ४. तद्धितम्, ५. सामासिकः, ६. अव्ययार्थः, ७. आख्यातिकः, ८. कारकम्, ९. सौवरः, १०. पारिभाषिकः, ११. उणादिकोशः, १२. गणपाठः, १३. निघण्टुः, १४. धातुपाठः।

२०. भागवतखण्डनम्, १८६६, संस्कृतम्।
२१. संध्या, १८६३।
२२. यजुर्वेदभाष्यम् १८७८, सम्पूर्णम्।
२३. ऋग्वेदभाष्यम्, ७-६२-२ पर्यन्तम् भाष्यम्, अपूर्णम्।
२४. उपदेशमञ्जरी पूना प्रबन्धम्, १८७५।
२५. आयोद्देश्यरत्नमाला:, १८७७।
२६. आत्मचरित, १८७५।

२७. गौतम अहिल्या की कथा।
२८. गर्दभतापनी उपनिषद् – अप्रकाशित।
२९. भ्रमोच्छेदनम्, १८८०, संस्कृतम्।
३०. अनुभ्रमोच्छेदनम्, १८८०, संस्कृतम्।
३१. अष्टाध्यायीभाष्य।
३२. वार्तिकपाठसभाष्य।
३३. अष्टाध्यायी यादीपत्र (सूची पत्र)।
३४. प्राकृतसंस्कृत अनुवाद।
३५. महाभाष्यसंक्षेपः।

स्वामिदयानन्दसरस्वती स्वकीयजीवनकाले १५००० पृष्ठात्मकं लेखनम् अकार्षीत्। तेषां लघुवृहत् ग्रन्थानां संख्या ६६ वर्तते। ग्रन्थलेखनं संस्कृतभाषया हिन्दीभाषया च वर्तते।

**स्वामिदयानन्देन स्थापिताः संस्कृतपाठशालाः –**

१. संस्कृतपाठशाला १८६९ फर्रूखाबाद, लाला पन्नीलाल/दयानन्द।
२. संस्कृतपाठशाला १८७१ कासगंज, स्वामी दयानन्दः।
३. संस्कृतपाठशाला १८७० मिर्जापुर, चौधरी गुरुचरण।
४. संस्कृतपाठशाला १८७० छलेसर, स्वामी दयानन्दः।
५. संस्कृतपाठशाला १८७३ काशी, स्वामी दयानन्दः।

स्वामिदयानन्दः स्वकीयजीवनकाले नैकानार्यसमाजान् स्थापयामास। तदनु तस्य अनुयायिनः भारते विदेशे च सहस्राधिकान् आर्यसमाजान्, गुरुकुलानि, कन्यागुरुकुलानि अनाथसदनानि, शोधसंस्थानानि स्थापितवन्तः। गुरुकुलेषु गुरुकुलकाङ्गडी, ज्वालापुर महाविद्यालयः, वृन्दावन गुरुकुलं, इन्द्रप्रस्थ गुरुकुलम्, पाणिनि महाविद्यालयः, रेवली। एटा गुरुकुलम्, गुरुकुल प्रभात आश्रमः, पाणिनि कन्या महाविद्यालयः, वाराणसी। यत्र सहस्रशः छात्राः संस्कृतशास्त्राध्ययनम् कुर्वन्ति।

**शोधसंस्थानानि, न्यासाः –**

१. विश्वेश्वरानन्द वैदिकशोधसंस्थान होशियारपुर।
२. वेदसंस्थान, अजमेर।
३. विश्ववेदपरिषद्, लखनऊ।
४. वैदिकसंस्थान, नजीबाबाद।
५. भारतीयप्राच्यविद्याप्रतिष्ठान, रेवली, रामलालकपूर ट्रस्ट, रेवली।
६. प्राच्यविद्यानुसन्धान केन्द्र नाँगलोई।
७. त्रैतवादीय आर्यपीठ ज्वालापुर, हरिद्वार।

८. आर्ष साहित्य प्रचार ट्रस्ट, दिगी।

स्वामिदयानन्दस्य निर्वाणान्तरं स्वामिनः स्मृतिरूपेण ईस्वीयाब्दे १८८६ डी.ए.वी. इति शिक्षा संस्थायाः आरम्भः जातः। साम्प्रतं डी.ए वी. इति शिक्षा संस्थायाः ६६७ विद्यालयाः महाविद्यालयाश्च सन्ति। तेषु ४६१ उगामाध्यमिक-विद्य ायाः सन्ति। यत्र संस्कृतम् पाठ्यते। इत्थं स्वामिदयानन्दस्य शैक्षिकक्षेत्रे कृतं योगदानं दिङ्मात्रमत्र र्शितम्।

**सन्दर्भग्रन्थाः -**

१. सत्यार्थप्रकाशः, स्वामीदयानन ः, आर्यधर्मार्थन्यासः।
२. संस्कारविधिः, स्वामीदयानन्द, रामलालकपूरट्रस्ट रेवली।
३. ऋग्वेदादिभाष्यभूमिका, स्वा ीदयानन्दः, वैदिकयन्त्रालयः अजमेर।
४. व्यवहारभानुः, स्वामिदयान ःः, वैदिकयन्त्रालयः, अजमेर।
५. आर्यसमाज का इतिहास, सत्यकेतुविद्यालङ्कार, आर्य स्वाध्याय केन्द्र, नई दिल्ली।
६. मनुस्मृतिः, डॉ. सुरेन्द्र, आर्ष साहित्य प्रचार ट्रस्ट, दिगी।
७. अष्टाध्यायी प्रथमावृत्तिः, पं. ब्रह्मदत्त जिज्ञासु, रामलालकपूरट्रस्ट रेवली।
८. षड्दर्शनसमन्वय एक नवीन वैज्ञानिक दृष्टिः, डा. प्रशान्त आर्यः, विजयकुमार गोविन्दराम हासानन्द दिल्ली।
९. A Critical study of the contribution of the Arya a samaj to Indian Education, Saraswati S. Pandit, Sarvadeshik Arya Pratinidhi Sabha, Delhi
१०. दयानन्द के पत्र विज्ञापन, पं. युधिष्ठिर मीमांसक रामलालकपूर ट्रस्ट।
११. यजुर्वेदः वैदिकयन्त्रालयः, अजमेर।
१२. विश्वधर्मकोशः, डॉ. भवानीलालभारतीय, विजयकुमार गोविन्दराम हासानन्द दिल्ली।

सहायकाचार्यः (शिक्षाशास्त्रविभागः)
राष्ट्रियसंस्कृतसंस्थानम्,
क.जे.सोमैयासंस्कृतविद्यापीठम्, विद्याविहारः, मुम्बई

# वैदिकवाङ्मये प्रतिपादितं वैज्ञानिकं व्यक्तित्वस्वरूपम्

डा. आर्. गायत्रीमुरलीकृष्णः

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।**

भारतीयज्ञानविज्ञानस्य प्राणभूताः ग्रन्था भवन्ति वेदाः। चतुर्विधपुरुषार्थसाधकेऽस्मिन् वेदे नैकविधवैज्ञानिकविषयाः न्यक्षिप्यन्त। तेष्वतिप्रधानविषयाः भवन्ति उपनिषदः, आयुर्वेदस्य चरकसंहिता, सुश्रुतसंहिता इति ग्रन्थद्वयं, योगशास्त्रस्य सिद्धान्ताः। एतेषु ग्रन्थेषु न केवलं दार्शनिकानां विषयाणाम् अथवा वनस्पतीनां विषयाणां निरूपणं कृतम् अपितु रोग-शस्त्रचिकित्सा-मनोविज्ञानमित्यादीनां विषयाणां निशिताध्ययनं दरीदृश्यते। अतः शोधपत्रेऽस्मिन् क्रमशः वैदिकवाङ्मये प्रतिपादितानां व्यक्तित्वविशेषाणां प्रदर्शनमत्र क्रियते।

**व्यक्तित्वं नाम किम् -**

प्राचीनभारतीयानामनुगुणं सत्त्वरजस्तमोगुणानां साम्यावस्था भवति व्यक्तित्वम्। पाश्चात्यानां मतानुसारं मानवीयव्यवहाराणां समुदितः मूलभूतः विशेषः भवति व्यक्तित्वमिति। प्रत्येकम् आत्मनः सत्त्वं भवति। तत्सत्त्वंत्रिविधम्- सत्त्व-रजस्तमांसि चेति। तदाधारेणमानवीयव्यक्तित्वं सात्त्विक-राजसिक-तामसिकरूपेण त्रिधा भवति। केवयं, किं चिन्तयामो वयं, किं कुर्मो वयम् इत्यादीनां प्रश्नानां समाधानमेव व्यक्तित्वम्। मानवीयव्यवहाराणां मूलभूतः समुदितः यः धर्मविशेषः अथवा संस्कारसंहतीनां तत्त्वं व्यक्तित्वमिति। आङ्ग्लभाषायां व्यक्तित्वं Personality इति शब्देन व्यवह्रियते। अस्य अर्थः भवति यत् Persona = Mask इति।

उपनिषदिति विद्योच्यते, असुराणां ह्येषोपनिषत्, उपनिषद् ब्राह्मी वाव त, उपनिषद्सत्यस्य सत्यमिति, गुह्योपनिषत्सु गूढम्, इत्यादि पारिभाषाभिः ज्ञायते यत् आसुरीप्रवृत्तितः ब्राह्मीस्थितेः पर्यन्तं विकासः व्यक्तित्वविकासः सम्भवतीति उपनिषदां मतम्।

**उपनिषत्सु व्यक्तित्वविकासः -**

पाश्चात्यानां मते persona इत्युक्ते आवरकम् अतः तादृशः एव अर्थः उपनिषत्सु अपि दरीदृश्यते यथा-

**हिरण्मयेन पात्रेण सत्यस्य पिहितं मुखम्।**
**तत् त्वं पूषन् अपावृणु सत्यधर्माय दृष्टये।**

सत्यधर्माय अर्थात् यः धर्मः सत्ययाय कल्पते तादृशधर्मसंस्थापनार्थाय अज्ञानमिति हिरण्मयेन पात्रेण पिहितस्य मुखावरकस्य (Mask/Persona) अपावरणं निष्कासनं हे पूषन् हे प्रभाकर! सूर्य! त्वं निष्कासयतु इति व्यक्तित्वानुगुणं व्याख्यां कर्तुं शक्नुमः। अत्र पूषन् शब्दः गुरुवाचकोपि विद्यते अतः

अज्ञानावृतस्य चेतसः मुखावरकं सत्यय धर्माय निष्काशयतु इति वक्तुं शक्नुमः। अनेन व्यक्तित्वविकासः नाम सत्यधर्माय मनसः मुखावरकं नाम अज्ञानं निष्कास्य धर्माचरणं कर्तव्यमिति अर्थः स्वीकर्तुं शक्यः। विशिष्य अन्नमय-प्राणमय-मनोमय-विज्ञानमयकोशानामावरकस्य निष्कासनेन आनन्दमयकोशस्य यः अनुभवः जायते सः व्यक्तित्वविकासः भवति। तथैव अधः कतिपयानि वैदिकोदाहरणानि व्यक्तित्वविकाससिद्धान्तत्वेन प्रदर्श्यन्ते-

**तां योगमिति मन्यन्ते स्थिरमिन्द्रियधारणम्।**
**अप्रमत्तस्तदा भवति योगोहि प्रभवाप्ययौ॥**
**यदा पंचावतिष्ठन्ते ज्ञानानि मनसा सह।**
**बुद्धिश्च न विचेष्टति तमाहुः परमांगतिम्॥**

यस्यां स्थितौ बुद्धिः न विचेष्टति सा एव स्थितिः व्यक्तित्वविकासस्य सर्वतोमुखविकाससोपानं भवति।

**वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम् आवीरावीर्म एधि .....।**

इत्याद्याः मन्त्राः व्यक्तित्वविकासप्रक्रियायाः उदाहरणानि वेविद्यन्ते।

**आयुर्वेदानुगुणं व्यक्तित्वविकासः -**

संहिताग्रन्थेषु चरकसंहिता, सुश्रुतसंहिता इति संहिताद्वयम् अत्यन्तं प्रधानं भवति। यद्यपि साक्षात् वैदिकग्रन्थाः न विद्येते तथापि आयुर्वेदस्य आन्तरिकविभागे भवतः। अत्र चरकसंहितायां व्यक्तित्वं निरूपयति यथा -

**तत्रशुद्धमदोषमाख्यातं काल्याणांशत्वात्, राजसं सदोषमाख्यातं रोषांशत्वात्, तामसमपि सदोषमाख्यातं मोहांशत्वात्।** अतः स्पष्टं भवति यत् व्यक्तित्वं सात्त्विक-राजस-तामसमयोपेतं भिन्नप्रकारकं भवतीति। पुनस्तत्र सात्त्विक-राजस-तामसरूपात्मकं व्यक्तित्वं भिन्नकारणैः विकृतिमायाति। अतः व्यक्तित्वप्रवृत्तयः काः? तासां स्वरूपं किम्? इत्याद्याः विषयाः यदि सुष्ठ्वभिज्ञाता भवन्ति तर्हि व्यक्तित्वस्य विकासस्वरूपं सुलभतया अवगम्येत तस्मात् व्यक्तित्वप्रकारैः साकं व्यक्तित्वस्य प्रवृत्तेः स्वरूपं प्रदर्श्यते -



**व्यक्तित्वप्रकारैः व्यक्तित्वे प्रकाशमानाः प्रवृत्तयः**

प्रीतिः (Pleasure) अप्रीतिः(Disagreement) दुःखम्(Despair)
प्रकाशः(Illumination) प्रवृत्तिः(Activity) निराशा(Restraint)

एतेषां व्यक्तित्वप्रकाराणां स्वरूपस्वभावविषयकचर्चा अत्र विधीयते।

**सात्त्विकम् - सात्त्विकं ब्राह्म-आर्ष-ऐन्द्य-याम्य-वारुण-कौबेर-गान्धर्व-भेदात्।**

1. **ब्राह्मम्**- शुचिं सत्याभिसन्धं जितात्मानं संभागिनं ज्ञानविज्ञानवचन-प्रतिवचनशक्तिसम्पन्नं स्मृतिमन्तं कामक्रोधलोभमानमोहेर्ष्याऽपेतं समं सर्वभूतेषु ब्राह्मं विद्यात्।
2. **आर्षम्**- इज्याध्यायनव्रतहोमब्रह्मचर्यपरमतिथिव्रतमुपशान्तमदमानराग-द्वेषमोहलोभरोषं प्रतिभावचनविज्ञानोपधारणशक्तिसम्पन्नमार्षं विद्यात्।
3. **ऐन्द्रयम्**- ऐश्वर्यवन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं तेजसोपेतमक्लिष्टकर्माणं दीर्घदर्शिनं धर्मार्थकामाभिरतमैन्द्र्यं विद्यात्।
4. **याम्यम्**- लेखास्थवृत्तं प्राप्तकारिणमसंहार्योत्थानवन्तं स्मृतिमन्तमैश्वर्यावलम्बिनं व्यपगतरागद्वेषमोहं याम्यं विद्यात्।
5. **वारुणम्**- शूरं धीरं शुचिमशुचिविद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्माणं स्थानकोपप्रसादं वारुणं विद्यात्।
6. **कौबेरम्**- स्थानमानोपभोगं परिवारसम्पन्नं सुखविहारं धर्मार्थकामनित्यं शिचिं व्यक्तकोपप्रसादं कौवेरं विद्यात्।
7. **गान्धर्वम्**- प्रियनृत्यगीतवादित्रोल्लसकं श्लोकव्याख्यायिकेतिहासपुराणेषु कुशलं गन्धमाल्यानुलेपनवसनस्त्रीविहारकामनित्यमनसूयकं गान्धर्वं विद्यात्।

**राजसाः - राजसाःआसुरराक्षसपैशाचसार्पप्रैतशाकुनभेदन षोढा।**[7]

1. **आसुरम्** - शूरं चण्डमसूयकमैश्वर्यवन्तमौदरिकं रौद्रमननुक्रोशकमात्मपूजकमासुरं विद्यात्।
2. **राक्षसम्** - अमर्षिणमनुबन्धकोपं छिद्रप्रहारिणं क्रूरमाहारातिमात्ररिचिरमामिषप्रियतमं स्वप्नायासबहुलमीर्ष्युं राक्षसं विद्यात्।
3. **पैशाचम्** - महालसं स्त्रैणं स्त्रीरहस्काभमशुचिं शुचिविद्वेषिणं भीरुं भीषयितारं विहारशीलंपैशाचं विद्यात्।
4. **सार्पम्** - क्रुद्धसूरमक्रुद्धभीरुं तीक्ष्णमायासबहुलं मन्त्रसुगोचरमाहारवोहारपरं सार्पं विद्यात्।
5. **प्रैतम्** - आहारकाममतिदुःखशीलाचारोपचारमसूयकमविभागिनमति-लोलुपमकर्मशीलं प्रैतं विद्यात्।
6. **शाकुनम्** - अनुषक्तकाममजस्त्रमाहारविहारपरमनवस्थितममर्षिणमसञ्चयं शाकुनं विद्यात्।

**तामसाः - तामसाःपशव-मात्स्य-वानस्पत्यभेदेनत्रिधा।**

1. **पशवम्** - निराकरिष्णुममेधसंजुगुप्सिताचाराहरंमैथुनपरंस्वप्नशीलंपाशवंविद्यात्।

भीरुमबुधमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधंसरणशीलंतोयकामंमात्स्यंविद्यात्।
2. **मात्स्यम्-** भीरुमबुधमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधंसरणशीलंतोयकामंमात्स्यंविद्यात्।
3. **वानस्पत्यम्** - अलसंकेवलमभिनिविष्टमाहारेसर्वबुद्ध्यङ्गहीनंवानस्पत्यंविद्यात्।

इत्थमायुर्वेदे प्रवृत्तमाने व्यक्तित्वे अनेकेविषयाः प्रवृत्तिनिवृत्तिरूपात्मकाः प्रतिपादिताः। तेषां ज्ञानेन मानसविकाराणामभिज्ञानं सम्भवति। मानसविकृतीनामभिज्ञानेन तासां नियन्त्रणेन च समुदितं व्यक्तित्वमुत्पाद्यते। व्यक्तित्वस्य समुदितस्वरूपेण अर्थात् सात्विक-राजस-तामसप्रवृत्तीनां साम्यावस्थायां सत्यां व्यक्तित्वस्य सर्वतोमुखविकासः सम्भवति। आयुर्वेदे व्यक्तित्वविकृतीनां नियन्त्रणमुपचारञ्च कथं कुर्यादिति सुष्ठु भणितं विद्यते।

**उपनिषत्सु व्यक्तित्वविकाससोपानानि**

Personality Development Steps in Upanishds–

तैत्तरीयोपनिषदनुगुणं व्यक्तित्वं मुख्यतः पञ्चायामेषु क्रियाशीलः विद्यते यत् भौतिक-शक्त्यात्मक-मानसिक-बौद्धिक-आनन्दा इति (Personality is operational, mainly in five dimensions say Physical, Energise, Mental, Intellectual and blissful.) स्वामिविवेकानन्देन भणितम्। अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयकोशाः एव व्यक्तित्वस्य पञ्चायामाः विद्यन्ते -

Body - Physical dimension – अन्नमयकोशः तथा प्राणमयकोशः

Mind - mental dimension – मनोमयकोशः

Intellect - Intellectual dimension – विज्ञानमयकोशः

Soul- blissful dimension – आनन्दमयकोशः

अत्र अन्नमय-प्राणमय-मनोमयकोशाः सर्वेषु मनुष्येषु जन्तुषु पशुपक्षिषु च समानरूपेण भवन्ति। यतः भोजनावासाद्यन्नमयाः श्वासनिश्वासाद्यान्तिरिकप्रक्रियाः सुखदुःखाद्यनुभवाश्च सर्वेषु प्राणिकोटिषु समानरूपेण भवन्ति। परं विज्ञानं यज्ञं तन्वानः मनुष्यः श्रद्धा, ऋतं (स्पर्धा), सत्यं, योगः, महः (उत्सवः/पूजनं/उत्साहः) इति करणैः मन्त्रद्रष्टारः भवन्ति। अत्र विशेषरूपेण व्यक्तित्वविकासः नाम ज्ञानस्य आत्मसात्करणं केवलं श्रद्धया, स्पर्धया, सत्येन, योगेन, पूजनेन जायते इति उपनिषदि स्पष्टीकृतं विद्यते। अत्र सुखम् आनन्दः इत्यनयोः व्यत्यासः ज्ञातव्यः यत् कारणीभूतजन्यः तात्कालिको अनुभवः सुखमिति तथा निष्कारणीभूतजन्यं शाश्वतिकं सुखमानन्दः इति मे अनुभवः। अतः यस्मिन् कार्ये अनिर्वचनीयः आनन्दः जायते सः आनन्दमयकोशः व्यक्तित्वस्य सर्वतोमुखविकासस्तरः इति वक्तुं शक्नुमः। प्रायः एष एव सिद्धान्तः पाश्चात्येषु मास्लो (Maslow) महोदयेनापि प्रतिपादितम्। तस्य सिद्धान्तस्य नाम आत्मयथार्थीकरणसिद्धान्तः। अत्र विशेषः नाम पाश्चात्यसम्प्रदाये शारीरिकापेक्षायाः कृते प्राधान्यं दीयते। किन्तु प्राच्यसम्प्रदाये आनन्दस्य प्राधान्यं दीयते। अतः सर्वापेक्षाणां पूर्तेः पश्चात् अन्तिमरूपेण आत्मयथार्थीकरणार्थं प्रयतते पाश्चात्यः परं सर्वान् कोशान् परित्यज्य केवलं आनन्दमयकोशनिमित्तं मोक्षप्राप्त्यर्थं यतते भारतीयः इति व्यत्यासः। यद्यपि सिद्धान्तद्वये सोपानानि प्रायः समानानि दृश्यन्ते परं

प्राधान्यं भिन्नं विद्यते अतः चित्रे तत् प्रदर्शितम्। तस्मात् भारतीयव्यक्तित्वविकाससिद्धान्तः आत्मयथार्थीकरणार्थमेव यतते तस्य कृते एकः क्रमः नास्तीति निश्चप्रचम्।

भारतीयैः चतुर्थावस्था तुरीयावस्था कथिता सा अवस्था प्रायः पाश्चात्यैः नैव दृष्टा। अतः व्यक्तित्वविकासस्य सर्वतोमुखश्रेष्ठावस्था का इति पाश्चात्यैः नैव ज्ञायते या भारतीयानामत्यन्तं प्राधान्या स्यात्। वस्तुतः ओंकारस्य वर्णनावसरे प्रत्येकमवस्थायाम् अनुभोक्तारः भिद्यन्ते इति माण्डूक्योपनिषदि सुष्ठु निरूपितम्। तेषां क्रियाः अपि भिन्नाः एव। क्रियानुगुणं तत्र व्यक्तित्वं प्रभावितं भवतीति विश्वासः। व्यक्तित्वानुगुणं कश्चन गुणः बहिः प्रकटितः स्यात्। स च गुणः अस्मासु व्यक्तित्वस्य प्रधानांशः भवति। अधः विषयोऽयं सविस्तरं तौलनिकरूपेण पट्टिकायां प्रदर्शितम्।

| ॐ | अवस्था | भोक्ता | क्रिया | व्यक्तित्वं | कोशः | मेस्लो आवश्कता-सिद्धान्तः |
|---|---|---|---|---|---|---|
| अ | जाग्रत् Conscious | वैश्वानरः | सर्वान् कामानादिस्व | Id तमः | अन्नमयः | Physiological |
| | | | | | प्राणमयः | Safety needs |
| उ | स्वप्नः Unconscious | हिरण्यगर्भः | ज्ञानसन्ततिं समानस्व | Ego रजः | मनोमयः | Love / belongings |
| म | सुषुप्तिः Subconscious | प्राज्ञः | मितेरपीतेर्वा मिनोति सर्वमपीतिश्च | Super Ego सत्वम् | विज्ञानमयः | Esteem |
| अमात्रश्चतुर्थः | तुरीयः | ब्रह्म | प्रपञ्चोपशमः शिवोद्वैतः | साम्यावस्थ प्रकृतिः | आनन्दमयः | Self Actualization |

पट्टिकायां प्रदर्शितरीत्या जाग्रत्-स्वप्न-सुषुप्त्यवस्थाः मनुष्याणाम् व्यक्तित्वस्य कोशाः भवन्ति

तदा मनुष्याणां व्यक्तित्वानुगुणं भोक्तारः तामसिक-राजसिक-सात्विकप्रकृतिं गृह्णन्ति इति प्रदर्शितम् । यत्र क्रियानामकेस्तम्भे प्रदर्शितरीत्या ये मनुष्याः यस्मिन् विषये अधिकम् अवधानं ददति ते तादृशरीत्या क्रियाः कुर्वन्तीति तेषां क्रियाविशेषाणां प्रदर्शनं कृतम्। अत एव केचन अन्नमयस्य केचन मनोमयस्य केचन विज्ञानमयस्य प्राधान्यं प्रदाय स्वीयप्रवृत्तिं प्रकाशयन्ति। भारतीयपरम्परायां सर्वतोमुखविकासः तुरीयावस्था इति वक्तुं शक्नुमः यस्यामवस्थायां प्रपञ्चोपशमः शिवम् अद्वैतमिति भावनाः मनुष्येषु भवन्ति। एष एव आशयः मुख्यं लक्ष्यं विद्यते अधिगमस्य। मागृधः कस्य स्विद्धनम् इति या प्रवृत्तिः सात्विकप्रवृत्तिः भवति सा प्रवृत्तिः विज्ञानेनैव सम्भवति अतः ज्ञानस्य विस्तारः कार्यः। सुषुप्त्यवस्थया सह विज्ञानमयस्य तुलनायाम् एषः अंशः अवगन्तव्यः यत् समस्तं विज्ञानं वाङ्मयम् अधीतशास्त्राणि सर्वाणि अपि मानसिकपटलात् प्रवाहरूपेण बहिरानेतुं सर्वे विषयाः अचैतन्यावस्थायामेव भवेयुः। तथा साधना कर्तव्या। तदा एव प्राज्ञत्वं सम्प्राप्य मितेरपीतेर्वा मिनोति सर्वमपि इति समस्तविज्ञानस्य आधारस्तम्भः इव एषः कोशः प्रतीकात्मकः भवति।

**सन्दर्भग्रन्थसूची -**


1. Eight Upanishads Vol. v and Vol. w, Swami Gambhirananda, Advaita Ashrama, Kolkata.
2. Brihadaranyakopanishad with rangaramanujas commentary Vol. v, Academy of Sanskrit Research, Melkote-571431
3. तैत्तरीयोपनिषत् ( भाष्यषट्कोपेता), संस्कृत संशोधन संसत्, मेलुकोटे - 571431
4. उपनिषत्संग्रहः, प्रो. जे.एल.शास्त्री, मोतीलाल बनारसीदास, दिल्ली।
5. Upanishad-Vakya- Maha-Kosa, Shastri Ganjanan Shambhu Sadhale, K.C. Publishers, 448, Ring Road, Azad Pur Flyover, Delhi - 33.
6. App, अमरकोशः (शब्दकल्पद्रुम-वाचस्पत्यम्-वीलियम-आप्टे डिक्शनरी सहितः), प्रो. मदनमोहनझा, राष्ट्रियसंस्कृतसंस्थानम्, क.जे.सोमैयासंस्कृतविद्यापीठ, मुम्बई।



सहायकाचार्यः, शिक्षाशास्त्रम्,
राष्ट्रियसंस्कृतसंस्थानम्,
नवदेहली।

# मूल्यशिक्षणे भाषाऽध्यापकानां भूमिका

डॉ. कुलदीपसिंहः

**तन्तुं तन्वन् जसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्।**
**अनुल्बणं वयान जोगु वामपो मनुर्भव जनया दैव्यं जनम्॥**

(१०-५३-६ ऋग्वेद)

मूलेन सम्मितं मूल्यमिति व्युत्पत्तिदिशामूलेन सह तौलनं मूल्यं भवति। मूल्यमितिशब्दः आदर्श-शील-गुणादिशब्दैः पर्यायत्वेन ज्ञायते। मूल्यमेकप्रकारकं मानकमस्ति, व्यक्तिः कस्याऽपि क्रियायाः कस्याऽपि विचारस्य कस्यापि वस्तुनो वा चयनात्पूर्वं चिन्तयति यदिदं स्वीकरणीयमाहोस्वित् न। अयं भावः मनसि यदा निर्णयात्मकरूपेणायाति तदा तद् मूल्यं भवति।

यदि विचारदृशा विमृश्यते परीक्ष्यते चेत् महत्यावश्यकतानुभूयते मूल्यानाम्। समाजे मानवव्यवहारस्य वास्तविक प्रभावमन्वेष्टुं मूल्यानि माध्यमानि भवन्ति। मानवीयजीवने मूल्यान्यनुगन्तुं यान्युपकुर्वन्ति तानि जीवनमूल्यानि इत्युच्यन्ते। मूल्यानामार्विभावः मानवेन सह अभूत्। मूल्येषु मानवस्य हितं सन्निविष्टं भवति मूल्यानां संरक्षणं समाजस्य आद्यम् उद्देश्यं भवति। मूल्यान्येव जातिं धर्मं समाजं मानवजीवनञ्च भव्यं आनन्दमयञ्च कुर्वन्ति। यद्यपि मूल्यानि सामाजिकमान्यताभिस्सह परिवर्तितानि भवन्ति तथापि तेष्वन्तर्निहितमंगलकामनायाः भावना सर्वत्र सदैव समरूपा भवति। यदा नवीने परिवेशे प्राचीनाः मान्यताः कालातीताः भवन्ति तदा समाजः नवीनाः मान्यताः गृह्णाति। सनातनमूल्येषु श्रद्धा-आस्था-धर्म-अर्थ-काम-मोक्षाणां सन्निवेशः वर्तते।

**१. मूल्योन्नयने भाषायाः भूमिका-**

मूल्यशिक्षायाम् एतेषां पुनः प्रतिष्ठायां च भाषायाः योगदानं शब्दातीतं वर्तते। अस्माकं देशे संस्कृत-हिन्दी-उर्दू-बंगला-मराठी-गुजराती-तमिल-तेलुगु-मलयालम-कन्नड-उडिया-असमी-पंजाबी-सिंधि-कश्मीरी-इत्यादयः पञ्चदशभाषाः राष्ट्रभाषात्वेनाङ्गीकृताः। पञ्चदशभाषासु भिन्नासु सतीस्वपि, एताभिः निःसृता भावधारा न भिन्ना। भाषाशिक्षणं नैतिकाभ्युदयस्य महत्त्वपूर्णं साधनं वर्तते। सत्यं शिवं सुन्दरं प्रभृतीनि शाश्वतमूल्यानि भाषाशिक्षणेन सहजतया बोधयितुं शक्यन्ते। जनहितमेव धर्मस्य सदाचारस्य च निकषः भवति। विवेकानन्दः कथयति यत्- **नास्ति सः धर्मः यः विधवायाः अश्रूनि प्रोछितुं न शक्नोति न च बुभुक्षितेभ्यः भोजनं दातुं पिपासितेभ्यश्च जलं प्रदातुम्** । सुमित्रानन्दनपन्त महोदया अपि सत्यं शिवं सुन्दरं प्रभृतीनि शाश्वतानि मूल्यानि जीवनेन सह सम्बद्धानि मर्वयु इति पक्षं प्रबलयति। राष्ट्रियएकतायै अखण्डतायै च भाषाशिक्षणमपेक्षितमस्ति । यतोहि भाषाशिक्षणेनैव धर्मेषु सम्प्रदायेषु च मध्ये सहजतया सौहार्दं कल्पयितुं शक्यते। उक्तञ्च रैदासमहोदयेन -

**अलख इलाही एक तू, तू ही राम रहीम।**
**तू ही मालिक, मोहना, केसौ नाम करीम॥**

कस्यापि भाषायाः साहित्यं तस्याः संस्कृतेर्वाणी भवति। काव्यम् - नाटकम्-कथा-उपन्यास-महाकाव्यादि विविधविधासु संस्कृति तथैव व्याप्ताः भवति यथा दुग्धे दध्नि वा धृतम्। अतः साहित्यस्य माध्यमेन विविधसांस्कृतिमूल्यानामवबोधः सरलतया सहजतया च कारयितुं शक्यते, भिन्न-भिन्नभाषासु नानाप्रसङ्गेषु च अस्य समभिव्यक्तिर्भवति । मानवतावादः प्रायः सर्वाषां भाषाणां साहित्यस्य मूलाधारः वर्तते । उदाहरणरूपेण महाभारतकारः व्यासस्य श्रीरामचरितमानसस्य प्रणेतुः गोस्वामी तुलसीदासस्य भाषान्तरसमानता इत्थमस्ति -

**परोपकारः पुण्याय पापाय परपीडनम् - व्यास**
**परहित सरिस धर्म नहीं भाई, पर पीडा सम नहीं अधमाई - तुलसी**

इमामेव भावनां क्रोडीकृत्य बुद्ध-महावीर-मुहम्मदपैगम्बर-गुरुनानकादि सर्वेऽपि महापुरुषाः स्वीयभावनां प्रसङ्गान्तरेण प्रकटितवन्तः। सनातनमूल्यानामेकतायाः बोधः भाषाशिक्षणेन सरलतया कारयितुं शक्यते।

अस्माकं जीवने सदाचारस्य नीतेश्च एतावत् महत्त्वं अस्ति यत् श्रीकृष्णः आत्मानं नीतिमेव कथयति उक्तञ्च **नीतिरस्मि जिगीषताम्**। भर्तृहरेः नीतिशतकं मूल्यपरकशिक्षादृष्ट्या अत्यन्तं महत्त्वपूर्ण वर्तते, नीतेः सैद्धान्तिकपक्षः एव सर्वेषां धर्माणां साहित्येषु उद्घाटितः वर्तते। अद्यत्वे धर्मः पंथस्य उत् सम्प्रदायस्य पर्यायत्वेन दृश्यते परं यदि संस्कृसाहित्यनिष्ठां धर्मस्य व्यापिकां व्याख्याम् अवगच्छामः आश्रयामश्चेत् पंथस्य तथा सम्प्रदायस्य नाम्नि जायमानयां हिंसायां न्यूनता भवितुमर्हति। वैशेषिकदर्शनस्य प्रणेता महर्षिकणादः कथयति यत् येन लौकिकपारलौकिक अभ्युदययोः निश्रेयस्य च सिद्धिर्जायते स एव धर्मः यथोक्तम् - यतोभ्युदयनिःश्रेयससिद्धिः सः धर्मः धर्मस्यास्य व्यापकार्थस्य प्रतिध्वनिः मजहब-रिलीजन-पंथ-सम्प्रदायादिषु शब्देषु नास्ति। आंग्लभाषायाः रिलीजन शब्दः धर्मस्य सङ्कीर्णतमः पर्यायः वर्तते। अस्य तुलनायां इण्टिग्रेशन इति शब्दः धर्मस्य यथाकथञ्चित् पर्यायत्वेनाधिकं शब्दायते यस्मिन् मैत्रीभावस्य, एकत्वस्य, परस्परं योगस्य च स्पष्टाभिव्यक्तिरस्ति।

तेन धर्मेण किं ? येन पङ्क्तिषु सम्प्रदायेषु समाजेषु राष्ट्रेषु च परस्परम् एकीभावं स्थापयितुमेव न शक्येत्। अत एव इकबालमहोदयः कथितवान् यत् - **मजहब नहीं सिखाता आपस में बैर रखना।** वस्तुतः प्रज्ञः अनेकतासु ऐक्यं कल्पयति अज्ञश्च एकतायां अनेकत्वम्।

ब्रह्मचर्याश्रमस्य समावर्तने आचार्यः स्वशिष्याय नैतिकोपदेशं ददाति। अयं प्रकारान्तरेण नैतिकमूल्यानां सङ्क्षेपीकरणमस्ति। वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्माप्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः सत्यान्न प्रमदितव्यम् । भूत्यैन प्रमदितव्यम् स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो

भव। अतिथिदेवो भव। यान्यवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि।

समासतः वक्तुं शक्यते यत् मूल्योन्मुखीशिक्षायां मूल्यानि प्रतिष्ठापयितुं साहित्यस्य विशिष्टं स्थानं वर्तते। साहित्यं कस्यापि भाषायाः वा भवतु। साहित्ये भूतकालस्य नादः वर्तमानस्य प्रतिबिम्बः भविष्यस्य च निर्माणस्य शक्तिर्भवति।

**( २ ) मूल्यशिक्षणे भाषाऽध्यापकः** – अध्यापकः मानवतायाः शिल्पी भवति। यतोहि शिक्षाया औपचारिकाभिकरणे अध्यापकः प्रमुखः भवति तत्र चरित्रनिर्माणम् अत्यावश्यक भवति बालकेभ्यः। चरित्रनिर्माणञ्च शिक्षणेन पाठनेन वा न भवति अपितु आदर्शप्रस्तुतिद्वारा अधिकं भवति। शिक्षकाय निम्नाङ्कितानि वाक्यानि अपेक्ष्यन्ते। (क) अवरानुपातः शिक्षकः केवलं कथयति । (ख) सामान्यानुपातशिक्षकः स्पष्टयति । (ग) साधु शिक्षकः प्रदर्शयति परं (घ) महान् शिक्षकः स्व आदर्शः प्रेरयति। अर्थात् शिक्षकेन सैद्धान्तिक ज्ञानस्य व्यावहारिकधरातले अनुप्रयोगः बोधनीयः। येन छात्रा स्वजीवने तस्योपयोगं कृत्वा राष्ट्रस्य आत्मनश्च गौरवं वर्धयेयुः। अध्यापकः कथापाठनसमये श्लोकपाठनसमये, कवितापाठनसमये संवादपाठनसमये च मूल्यान्विताः वार्ताः प्रसङ्गेषु आगतेषु सत्सु तेषामुद्घाटनं कुर्यात्। मूल्यपरकशिक्षायाः क्रम इत्थमस्ति – ज्ञानम्–अवबोधः–उपयोगः–आत्मीकरणम्–अभिरुचि–अभिवृत्ति–मूल्यान्तरणञ्च ।

अस्माकं विश्वासाः, अभिवृत्तयः, अन्तःप्रज्ञा च तानि उपकरणानि भवन्ति यानि अस्माकं पारस्परिकसम्बन्धानामवगमने निर्णयप्रदाने च सहायकानि भवन्ति । अतः मूल्यानि शिक्षयितुं न शक्यन्ते तानि तु व्यवहारेण प्रेरयितुं शक्यन्ते Values are not tought but caught इत्थं भाषा शिक्षकस्य क्षमतायां कुशलतायां सर्जनात्मकतायां कल्पनाशीलतायाञ्च मूल्यानि निहितानि भवन्ति। भाषा शिक्षकश्च छात्रहितं चिकीर्षन् सहवृत्तमनुतिष्ठेत् प्रेरयेत् च तदर्थम्।

सहायक आचार्य (शिक्षा संकाय)
जगद्गुरुरामानन्दाचार्य राजस्थान संस्कृत विश्वविद्यालय,
जयपुर

# परम्परागतशिक्षाप्रणाल्यां शिक्षितसमृद्धञ्च भारतम्
## ( मनस्तत्त्वम् )

डॉ. हरिओमशर्मा

सृष्टिसर्जनसमनन्तरमेव व्यवस्थासम्पादनाय केषाञ्चित्रियमविशेषाणां भवत्यावश्यकता। तदर्थञ्च प्रयतन्ते विज्ञाः। सर्वेषु देशेषु मध्ये भारतवर्षस्य किञ्चिद्वैशिष्ट्यं पुरातनकालादेव पश्यामो वयम्। अत्र समाजस्य सुचारुसञ्चालनाय तद्विहितसमये तत्तत्संस्काराणां सम्पादनमप्यावश्यकं भवति। तेषां कृते ग्रन्थानां निर्माणं तथा शिक्षणं-प्रशिक्षणमप्यावश्यकं भवति। यद्यपि अस्माकं देशे भारतवर्षे संस्कारशिक्षानीतिव्यवसायोपासनाराज्यन्यायादिव्यवस्थाप्रतिपादयान्येनकानि शास्त्राणि प्रारभ्यत एव वर्त्तन्ते। तेषां विषयाणां समन्वितरूपेण प्रतिपादनमेव शास्त्रं भवतीत्यपि वक्तुं शक्यते।

आचारविचारादिविषये वेदानां परमं प्रामाण्यमिति न केषाञ्चिदपि तिरोहिमस्ति विद्वद्वरेण्यानाम्। वेदानाञ्चापौरुषेयत्वमिति मीमांसकानां समुद्घोषः। प्रतिपादितञ्च जैमिनिप्रभृतिभिराचार्यैः वेदापौरूषेयत्वाधिकरणे। वेदेषु सर्वेषां विषयाणां सूक्ष्मरूपेण वर्त्तते निर्देशः। तथा न सर्वे विषया एकत्र प्रतिपादिता सन्ति। न च सर्वासां शाखानां समुपलब्धिर्वर्तते सम्प्रतिकाले। अतस्तेषां विषयाणां ज्ञानमपि न समेषां सुकरम्। अतएव सर्वजनहिताय वेदानधीत्य विषयणाञ्च स्मरणं कृत्वा पुनः क्रमशः एकत्र च प्रतिपादनं कृतम्। स्मरणं कृत्वा लिखिततत्वेनैव स्मृतिशब्देनोच्यते। स्मरणं स्मृतिश्चेति व्युत्पादयन्ति विज्ञाः। स्मृतिरेव धर्मशास्त्रशब्देनोच्यते तथा वेदाः श्रुतिशब्देनोच्यते। नोभयत्र भेदलेशोऽपि। तथा चोक्तम् मनुना-

**श्रुतिस्तु वेदो विज्ञेयो स्मृति तु वै धर्मशास्त्रम्।**
**ते सर्वार्थष्वमीमांस्ये ताभ्यां धर्मोहिनिर्बलौ।।**[१]

अतएव वेद शब्देन ब्राह्मणानां ग्रहणं, श्रुति शब्देन च संहितानामिति येषां मतं तेषां मतं परास्तम्। अत्र खलु मीमांसाख्यतर्केण भवति विचारः। यथाह- यस्तर्केणानुसन्धे स धर्मं वेद नेतरः। हेतुशास्त्रमुपस्थाप्य तद्विरुद्धो विचारो न प्रकटनीयः हेतुशास्त्राश्रयाद्विजः इत्यादि। यद्यपि स्मृतिशास्त्रेष्वेव धर्मशास्त्रशब्दस्य प्रयोगः प्रतिपादितः तथापि कुत्रचित् व्याकरणश्रौतसूत्रगृह्यसूत्रधर्मसूत्रमहाभारतादिष्वपि धर्मशास्त्रशब्दस्य प्रयोगः समवलोक्यते। धर्मशास्त्रस्य वेदमूलकत्वेन प्रामाण्यं समामनन्ति विद्वांसः।

वस्तुतः परम्परागतशिक्षाप्रणाल्यां वैदिकी शिक्षा एव समाहिता, किमर्थम्?

उच्यते- बृहस्पतिस्मृतौसंस्कारकाण्डे-

**श्रुति-स्मृतिचक्षुषी द्वे द्विजानां न्यायन्वर्त्मनि।**
**मार्गे मुह्यन्ति तद्धीनाः प्रपतन्तिः पयश्च्युताः।।**[२]

**जातो मृतश्च कतिधा न कति स्तनानां**
**पीतभ्ययो न कलिताः कति मातरो न।**
**उत्पत्य बन्ध-विधुतावधुना यतिष्ये।**
**इत्यस्य विप्लवमुपैति बहिर्मनीषा।।**

उपर्युक्तेन प्रतिपादनेन, अयमाशयः निःस्सरति यत् आत्मा जन्म-जन्मान्तरयोः अतीव कठोरतपस्यया मानवशरीरे प्रविष्टो भूत्वा पुनश्च अनेन शरीरेण लोके आवागमनस्य विमुक्ति इच्छति। परञ्च मानवशरीरे गार्भेः निःसरणात् एव आत्मनः कर्तव्यबुद्धिः विस्मृतौगते विलिनाभवति। अत्र आर्द्रकरणैः प्रभृतैः महर्षिभिः जीवात्माहेतोः कर्त्तव्यविधनहेतोः वेदाः। तद्यथा– 'देवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवताः।' अतः स्पष्टयति वेदामन्त्ररूपा एव। यज्ञाद्यवसरेषु ब्राह्मणप्रयुक्तैस्तैस्तैमन्त्रैरावाहनादिविधिना आवाहिता देवास्तत्र तत्र आयान्त्यैवात्रश्रुतिरेव प्रमाणम्। तदहो! आश्चर्यकरः प्रभावो वेदोक्तमन्त्राणाम्। अत्र विदन्त्येव सर्वे विद्वांसो यद् वेदा एव भारतवर्षस्य भारतीयसंस्कृतेश्च मुख्यमवलम्बनमिति। ते च भगवताकृष्णद्वैपायेन शिष्याणां ग्रहणसौकप्यपि ॠग्यजुः साभाथर्वभेदेन चतुर्था विभज्य यथाक्रमं पैलवैशम्पायनजैमिनिसुमन्तुभ्यः प्रदत्ताः। कालक्रमेण शिष्योपशिष्यैर्गृहीतास्ते बह्शाखात्वमापन्नाः। तदुक्तं व्याकरणमहाभाष्ये पस्पशाह्निके भगवता पञ्जलिना–

**एकशतमध्वर्युशाखाः, सहस्त्रवर्त्मासामवेदः।**
**एकविंशतिधाबद्व्चं, नवधा आथर्वणी वेदः।।**[3]

तत्रायं वेदः अस्माकं संस्कृत्या मूलस्त्रोतमस्ति। विश्वस्यागमेषु वेदाः प्राचीनतमाः। अतएव नृशास्त्रज्ञानां, मानवप्रकृतेरध्येतृणां जगतो विभिन्नेषु धर्मेषु सश्रद्धं प्रवर्त्तमानानाञ्च जनानां सानुरागविषया इमे वेदा इति सर्वेषां विदितचरम्। ये जना वेदानामभ्यन्तरे सांसारिकसमस्तैश्वर्याणामन्वेषणमवलान्त-परिश्रमेण कुर्वन्ति, ते न जानन्ति वेद-ज्ञानयोर्मध्येऽन्तरमस्ति। विद्-धातौ तथा ज्ञा-धातौ सामान्यतः एकत्वे सत्यपि मूलतः पार्थक्यमस्ति। भौतिकविद्यायामभिज्ञताया नामास्ति ज्ञानं तथा अध्यात्मशास्त्रस्य तथ्यानामवगत्या नामास्ति वेद इति। एकस्य लक्ष्यं बाह्यविषयाणामपरस्याभ्यन्तरविषयाणां विश्लेषणमस्ति। पार्थक्यमिदं संस्कृतेन सम्बद्धानेकयूरोपीयभाषागतशब्दानामनुशीलनेनापि स्पष्टतो ज्ञायते जर्मनभाषायां द्वौ सम्बद्धौ शब्दौ स्तः– केन्नेन (Kennon) तथा वाइसेन (Wisdom)। आंग्लभाषायामपि द्वौ सम्बद्धौ शब्दौ स्तः – नॉलेज (Knowledge) तथाा विजडम (Wisdom)। अनयो 'केन्नेन' तथा 'नालेज' इत्यनयोः शब्दयोः साक्षात्सम्बन्धमस्ति संस्कृतस्य 'ज्ञा' धातुना सह तथा वाइलेज एवं 'विजडम' इत्यनयोः शब्दयोः सम्बन्धोऽस्ति 'विद्' धातुना सह। अतः 'वेद' इत्यस्य शब्दस्य मौलिकतात्पर्यमस्ति अध्यात्मविषयाणामन्वेषणम्। सायणाचार्यः लिखति–

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते।**
**एनं विदन्ति तेदेन तस्माद् वेदस्य वेदता।।**

परञ्च मोक्षेधिः ज्ञानम् अन्यत्रविज्ञानम् = कृषिकर्मकुशीलवादयः। 'सा विद्या या विमुक्तये' अत्र किं वेद विद्या नास्ति? इति प्रश्नचिन्हमापतति। एतादृशं नास्ति, यत् वैदेशिकाः अस्मिन् सन्दर्भे किमपि न प्रतिपादितवन्तः? ते तु आंग्लभाषामसुविस्तृतरूपमुपस्थापितवन्तः यत्र डॉ. बेवर, डॉ. मैक्समूलर (हिस्ट्री ऑफ एनसिएण्ट संस्कृत लिटरेचर) मैक्डोनल, विण्टरनित्लादयः। पुनः वेदस्य यथार्थज्ञानलाभाय षण्णां विषयाणां ज्ञानपेक्षितं भवति। वेदमन्त्राणामवितथोच्चारणमेव प्रथममावश्यकमस्ति। अतः शास्त्राणां शास्त्रं शिक्षा-शास्त्रम्। पुनश्च

**शिक्षा कल्पो व्याकरणं निरूक्तं छन्दसां चयः।**
**ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु।।**
**छन्दः पादौ तु वेदस्य स्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**[४]

पतञ्जलिनाऽयुक्तम्- **ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोहयेयोज्ञेयश्च।**[५]

अतः तच्छास्त्रं नाम शिक्षा येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पादयेत्। वेदे स्वरस्य प्राधान्यं सर्वविदितम्, स्वरज्ञानं च शिक्षाऽऽपत्तम्, अत एवेदं शिक्षाशास्त्रम् वेदाङ्गम्। पुनश्च शिक्षाशास्त्रप्रयोजनमुक्तं तैत्तिरीयोपनिषदारम्भे। यथा- 'अथ शिक्षां व्याख्यास्यामः - वर्णः स्वरः, मात्रा, बलम्, साम सन्तान इत्युक्तः शिक्षाध्यायः।

यथा वैदिकविधीनां सम्पादनार्थं ब्राह्मणग्रन्था उपयुज्यन्ते, तथैवोच्चारणप्रयोजनेन शिक्षाया उपयोगो वाञ्छयते। वेदानां वैदिकसाहित्यस्य वाऽध्ययनाध्यापनविषयकविधीनां निर्देशः शिक्षाशास्त्रे कृतः। सायणस्य ऋग्वेदभाष्यभूमिकायामुक्तम्- 'स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षेति। अग्रे शिक्षाशास्त्रेतिहासः पुरातनतरः। परं न त द्विषयकाः प्राचीनतरा ग्रन्था उपलभ्यन्ते। श्रीवाचस्पतिगैरोला स्वकीये इतिहासे लिखति यत् सत्यकेतु विद्यालङ्कारस्य मतमिदं यत् ''जैगीषव्यस्य शिष्योबाभ्रव्यः शिक्षाशास्त्रं प्रणिनाय। महाभारते शान्तिपर्वणि आचार्यगालवकृतस्य शिक्षाग्रन्थस्योल्लेखो लभ्यते। श्रीबलदेव-उपाध्यायः स्वकीये 'वैदिकसाहित्य संस्कृतिश्च' इत्यत्र अभिधेये ग्रन्थे याज्ञवल्क्यशिक्षा-वासिष्ठीशिक्षादिसंज्ञकानां विंशतिग्रन्थानामुल्लेखं विदधानो दृश्यते। साम्प्रतं समवाप्ता पाणिनीयशिक्षा प्राचीनशिक्षासूत्राणां साहाय्येन प्रणीताऽभूदिति बुधानां विचार। पुनश्च विविध-महापुरूषाणामुद्धरणानि समाहितानि सन्ति। यथा- स्वामी विवेकानन्दः नारीशिक्षायाः पूर्णतः पक्षधरः आसीत्। तेषामभिमतम्- यत् तस्य परिवारस्य उत देशस्य उन्नतौ का स्थितिः, यत्र नारीणां शिक्षा एवनास्ति। अतः एते विज्ञान शिक्षा, सौन्दर्यात्मक आध्यात्मिकञ्च जीवनस्य पक्षे सहमताः आसन्। अनेन सह जनशिक्षाया (Mass-Education) सर्वेषां कृते स्यात् इति पक्षधरः आसीत्। ते भारतस्य अतीत (भूतं) वर्तमानं (भाव्यं) द्वयोः मध्ये संयोजकरनयेण आसीत्। अर्थात् भारतस्य धरोहरं

(विरासत) प्रतिपूर्णनिष्ठामुपस्थाप्य जीवनस्य समस्यानां प्रति दृष्टिकोणं आधुनिकमासीत्। अतः रविन्द्रनाथटैगोर महोदयः लिखति– "if you want to know india study vivekanand."

आधुनिकयुगे अमेरिकायाः महान् शिक्षा–शास्त्री Prof. Richard M Weaver 'wikipedia' लिखति यत् ज्ञानस्य स्त्रोतं ज्ञानाधिगन्ते अन्तरेव विद्यमानोऽस्ति।

अतः छात्रस्य तार्किकशक्तिं ज्ञात्वा, अवबोधयित्वा, प्रयोगेन प्रयुज्य निश्चयक्षमताञ्च परिमार्जनमेव शिक्षायाः प्रमुखोद्देश्यं स्यात्। अतएव यजुर्वेदे उपदिष्टम् यत् सत्यं जानीयात्, अवबोधयतु तथा मानवजीवने क्रियान्वयतु/क्रियान्विती करोतु इत्यर्थः/एव शिक्षायाः यथार्थता अस्ति।'[६] महर्षि पतञ्जलिना महाभाष्ये विद्यायाः उपयोगिता चतुर्था प्रतिपादिता–

(१) अध्ययनकालः– छात्राः शिक्षकं/गुरो समीपे उषित्वा विद्यां अध्येतव्याः।
श्रीमद्भगवद्गीतायामपि उक्तम्– **श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिग्काछति।।**

(२) मननकालः– अत्र छात्रः विद्याध्यननान्तरे चिन्तनं कुर्याद्, यद् अस्माकं शिक्षकाः यद् किमपि शिक्षयितुं प्रयासं कृतवन्तः, तत्तु समीचीनमस्ति न वा। अत्र श्रद्धाभक्तिं न त्याजनीया इत्यभिप्रायः नास्ति, अपितु शिक्षेतर यद् ज्ञानमस्ति, तस्य प्राप्तिरेव मननकालः, यतोहि 'अनन्ता वै वेदाः।'[७]

(३) चिन्तनकालः– पूर्वोक्ते पश्चाते यदि प्रश्नाः आगच्छन्ति चेत् तेषां समाधानं मित्रैः सह विचार–विमर्शञ्च कृत्वा सत्यस्य परिणामः अन्वेषणीयम्। छात्र चिन्तने स्वाध्याये च प्रवृत्तिं सक्रिया स्यात्। कथितम् हि– 'स्वाध्यायान्मा प्रमदः।'[८]

(४) उपयोगकालः– अत्र अध्यनेन–मननेन–चिन्तनेन च यद् ज्ञानमुपार्जितं तस्य ज्ञानस्यजीवने उपयोगिता का अस्ति। तं ज्ञानं येन केनापि सामंजस्यपूर्वकं संतुलन प्रस्थापयितुं शक्यते। अत्र मनुष्यः यदा ज्ञानस्य प्रयोगः करोति, तत्र अथमेव अपि ध्यातव्यं यत् यस्य वस्तूनि अस्माभिः न निर्भीयन्ते, तासां नष्टो उपसंहार अपि न कर्त्तव्या, इति नैतिकोत्तरदायित्वं स्यात्।
अन्ते शिक्षाभौतिक–आध्यात्मिक विकासययोः साधनभूता अस्ति।

What is Education? is it book learning? No. is it diverse knowledge? not eventnat. Me maining by which the current and expression of will are brought under control and become fruitful is called Education.

**संदर्भसंकेत–**


१. मनुस्मृतिः २/१०
२. बृहस्पति–स्मृति, संस्कारकाण्ड, श्लो.।।
३. भगवता पतञ्जलि, पस्पशाह्निके–व्याकरणमहाभाष्ये।
४. पाणिनीय शिक्षा ४१/४२
५. पतञ्जलि, पस्यशाह्निके
६. यजुर्वेदः, अध्याय १९/ मंत्र ३०
७. तै.ब्रा. ३.१०.११.३
८. तैत्तिरीयोपनिषद् १.११.१


सहायकाचार्यः, शिक्षाशास्त्रविभागः, रा.सं.सं., जयपुरपरिसरः, जयपुरम्

# प्राचीनभारतीयमनोविज्ञाने चित्तदशा

## (State of mind in India.. ancient Psychology)

डॉ. विजयकुमारदाधीचः

पातञ्जलयोगशास्त्रे चित्तविषये यो विमर्शो विद्यते तत्र द्विविधा दृष्टिरावश्यकी - पारमार्थिकी व्यावहारिकी चेति। पारमार्थिकदृष्ट्या चित्तस्वरूपं कीदृशं भवति, तदग्रे विचारयिष्यामः। प्रथमं तावद् व्यावहारिकदृष्ट्या मानववर्तनस्य आधारभूतं गूढमिन्द्रयमिति चित्तस्य लक्षणमङ्गीकर्तुं शक्यते। वृत्तिभेदाच्चैतदेव चित्तं मनोबुद्ध्यहङ्कारादिभिः शब्दैर्व्यपदिश्यते। विविधासु भूमिषु वर्तमानं चित्तमेव मानवस्यावनत्या उन्नत्यै वा प्रभवति। तदेतच्चित्तमुच्चतरभूमिकावेशेन मानवस्योन्नत्यै कथं प्रभवेदित्येतदर्थमेव योगशास्त्रस्य प्रपञ्चः।

तत्र तावद् 'योगः समाधिः, स च सार्वभौमश्चित्तस्य धर्मः' इति यदुक्तं व्यासभाष्ये तस्योपव्याख्यानमतीवावश्यकं मन्यामहे।

सत्त्वरजस्तमोगुणानां प्रकाशक्रियास्थितिशीलानां साम्यावस्था प्रधानशब्देन व्यपदिश्यते। तदेतत् प्रधानमेव निखिलदृश्यस्य मूलं सद् द्रष्टृपुरुषसंयोगेन रजस्तमोऽभिभवात् सत्त्वोद्रेकेण पुरुषचैतन्यलब्ध्या चित्तशब्दभाग् भवति। तत एव च महदहङ्कारादिक्रमेण दृश्यरूपविस्तारः। एवं च चित्ते प्रकाशरूपिणः सत्त्वस्य प्राधान्यं वर्तते। समाधिश्च धर्म एव सत्त्वगुणस्य, किन्तु रजस्तमोभ्यां मलिने चित्ते प्रकाशावरणे सति सन्नपति समाधिश्चित्तस्य सार्वभौमो धर्मो गूढस्तिष्ठति। अत्रोदाहरणम् - भास्वरत्वं नाम सौवभौगो रत्नस्य धर्मः। किन्तु धूल्यावरणे सति सन्नप्यसौ गूढस्तिष्ठति। एवमेव क्लेशमलिने वृत्तिभिश्च क्षुब्धे चेतसि पुरुषचैतन्यं यथावन्न प्रतिबिम्बति। अत एव च सार्वभौमोऽपि चित्तधर्मः समाधिर्नानुभूयते।

व्यवहारसौकर्याय क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धं चेति चित्तं पञ्चावस्थमभ्युपगम्यते योगशास्त्रे। न त्वेता अवस्थाः सर्वथैवान्योन्यव्यावर्त्तिका इति मन्तव्यम्। सामान्यतो जाग्रदवस्थायां स्वप्नावस्थायां वेन्द्रियद्वारा विषयेषु क्षिप्तं चित्तं क्षिप्तावस्थमित्युच्यते। सुषुप्तौ तु मोहातंवृचित्तं मूढावस्थमित्युच्यते। तत्र क्षिप्तमपि चित्तं नहि सर्वथा सर्वेन्द्रियद्वारा क्षिप्तं भवति। अत एव च वर्तते खलु मोहांशः क्षिप्तेऽपि चेतसि। एते च द्वे अवस्थे सर्वजनसामान्ये प्रतिदिनमनुभूयमाने दृश्येते। विक्षिप्तावस्थाऽपि न्यूनाधिकप्रमाणेन वारंवारमनुभूयते जनैः। येषु त्वेषाऽवस्था प्राधान्यं भजते ते विक्षिप्तत्वेन मनोरुग्णत्वेन वा प्रथिता भवन्ति जनेषु। अस्यां ह्यवस्थायां क्वचिद् विशेषेण क्षिप्तं चित्तमन्यविषयेषु मूढं तिष्ठति। एते चे विक्षेपा व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानीति नवोदाहृता योगशास्त्रे (१-३०)। अस्यामवस्थायामनुभूयमानोऽपि क्वाचित्कः स्थेमा न योगपक्षे वर्तते, विक्षेपोपसर्जनीभूतत्वात् समाधेः। एतासां तिसृणामवस्थानां स्वल्प एव विचारो वर्तते योगशास्त्रे। पाश्चात्त्यमनोविज्ञाने

त्वेतासामेवावस्थानां विमर्शो विद्यते। उत्तरयोरवस्थयोर्विचारस्तु नगण्य एवास्ति। अतएव च योगशास्त्रं पाश्चात्यमनोविज्ञानं च परस्परपूरकइत्येव वक्तुं समुचितं स्यात्। एतदपि च स्मर्तव्यं यत् पाश्चात्यमनोविज्ञानस्य प्रगत्यर्थं योगशास्त्रं नितरां सहायकं भविष्यति।

एकाग्रनिरुद्धयोर्भूमिकयोर्वर्णनात् पूर्वं चित्तधर्मविषये किञ्चिद् विवेचनमुपयुक्तं स्यात्। पाश्चात्यमनोविज्ञानेऽज्ञातचित्तं (unconscious mind) नाम फ्राइड (Frued) महाभागस्य महान् क्रान्तकारी शोध इत्यभ्युपगम्यते। रसायनशास्त्रेऽणोर्विभजनं यावद् महत्त्वपूर्णं तावदेव मनोविज्ञानेऽज्ञातचित्तस्य शोधद्वारा मनोविश्लेषणम् (Psychoanlysis) इति मन्यते पाश्चात्यमनोवैज्ञानिकैः। इदमज्ञातचित्तं सहस्रावधिवर्षेभ्यः पूर्वं परिचितमासीद् भारत इति स्पष्टमेव व्यासभाष्यात्। तथा चोक्तं व्यासभाष्ये –

'चित्तस्य द्वये धर्माः परिदृष्टाश्चापरिदृष्टाश्च। तत्र प्रत्ययात्मकाःपरिदृष्टाः वस्तुमात्रात्मका अपरिदृष्टाः। ते च सप्तैव भवन्त्यनुमानेन प्रापितवस्तुमात्रसद्भावाः –

**निरोधधर्मसंस्काराः परिणामोऽथ जीवनम्।**
**चेष्टा शक्तिश्च चित्तस्य धर्माः दर्शनवर्जिताः॥ ३, १५।**

फ्राइडादिभिः प्राधान्येन निरोधाख्य (Repression) एव धर्मोऽज्ञातचित्तत्वेन प्रोक्तः। एषोऽपि च कामवासनारूपो भवतीति फ्राइडमहाभागस्य मतम्। योगशास्त्रदृष्ट्या तु निरोधस्यातिविशालं स्वरूपं भवति। कामवासनादीनामपरिदृष्टो निरोधो यथैव विक्षेपे परिणमति तथैवाभ्यासेन कृतान्निरोधात् प्रज्ञालोकोऽप्युदेति। निरोधवदेव च धर्मादयोऽप्यपरिदृष्टाश्चित्तधर्मा अज्ञातचित्तेऽवश्यमन्तर्भाव्याः।

जन्मकाले चित्तं रिक्तकक्षवद् भवतीति पाश्चात्यमनोवैज्ञानिकानामभ्युपगमो नैव सम्मतो योगशास्त्रस्य। पूर्वजन्मकृतकर्मफलरूपे पुण्यापुण्ये तज्जनिताश्च संस्कारा वासनारूपा वर्तन्त एव, चित्ते जन्मकाले यद्यप्यपरिदृष्टास्ते तिष्ठन्ति। क्वचित् तु सम्भवत्यपि पूर्वजन्मस्मृतिः सहजा योगाभ्यासजनिता वा। पाश्चात्यैरपि परमनोवैज्ञानिकैः (Para-Psychologists) पूर्वजन्मस्मृतिसम्बन्धीनि बहून्युदाहरणानि लब्धानि। मोहनिद्रावस्थायामपि (hypnosis) च पूर्वजन्मस्मृतिः सम्भवतीति नैकप्रयोगैः सिद्धम् । एवं स्थितेऽपि यदि केचन पाश्चात्यमनोवैज्ञानिकाः पूर्वजन्मानि नाभ्युपगच्छन्ति, तत्र तेषां ख्रिस्तसम्प्रदायविषयको दुराग्रह एव कारणमिति वक्तुमुचितं स्यात्।

चित्तं हि पाश्चात्यगहनमनोवैज्ञानिकै (ancient depth psychologists) समुद्रस्थहिमनगवत् (Iceberg) मन्यते। हिमनगस्यैकदशांशमात्रो (10%) भागः परिदृश्यते, नवदशांशः (90%) च अपरिदृष्टस्तिष्ठति। एवमेव चित्तस्यापि भूयान् भागोऽपरिदृष्ट एव तिष्ठति। स च हिमनगवदेव संकटावहो भवतीति तेषामभिप्रायः। अत एव च मनोविश्लेषणद्वारा तस्यावबोधस्तैरावश्यको मन्यते। दुर्देववशादपरिदृष्टचित्तस्य वासनानिरोधरूप एवांशः पाश्चात्यमनोवैज्ञानिकानामद्य यावत् परिचितस्तमेव

चावबोधयितुं ते प्रयतनशीला दृश्यन्ते। योगशास्त्रे तु चित्तं नदीवन्मन्यते। इयं च चित्तनदी पापाय कल्याणाय च वहन्ती सत्युभयतो वाहिनीत्युच्यते। उक्तं हि व्यासभाष्ये –

"चित्तनदी नामोभयतो वाहिनी या वहति, कल्याणाय वहति पापाय च। या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते। विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोधः" (१-१२)।

एकाग्रावस्था हि व्यासभाष्य इत्थं वर्ण्यते – 'यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति स सम्प्रज्ञातो योग इत्याख्यायते। स च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इत्युपरिष्टान्निवेदयिष्यामः' (१, १)। एकाग्रावस्थायां हि समाधिर्व्यक्तो भवति। यथाभूतः शोभनश्च पदार्थः प्रद्योततेऽस्यामवस्थायाम्। क्लेशाश्च क्रमेण क्षीयन्ते, श्लथानि जायन्ते कर्मबन्धनानि, निरोधश्च सम्मुखीभवति। इयं चावस्थाऽभ्याससाध्या। वशीकारसञ्ज्ञारूपाद् वैराग्यादनन्तरमेवाभ्यासे प्रवृत्तिः सञ्जायते। अभ्यासश्च नाम स्थितौ यत्नो यद्यपि बहुविधो विद्यते, तथापि स्थूलतो वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगतश्चेति चत्वारस्तस्य भेदाः। तत्र वितर्कानुगतः क्रमशः सवितर्कायां निर्वितर्कायां च समापत्तौ, विचारानुगतश्च सविचारायां निर्विचारायां च समापत्तौ परिणमति। एता एव च सबीजः समाधिरित्यप्युच्यन्ते। आनन्दानुगतेऽस्मितानुगते चाभ्यासे नास्त्येवंविधो भेदः। संस्कारबीजक्षय एव चैष सम्भवति। तत उर्ध्वं च पुरुषख्यातेर्गुणवैतृष्ण्यरूपं परवैराग्यमाविर्भवति।

अभ्यासप्रक्रिया हि धारणाध्यानसमाधिक्रमा संयमशब्देनोच्यते। अस्मादभ्यासात् पूर्वं चासनप्राणायामप्रत्याहाराणां साधनमुपकारकं भवति। साधनाकाले चाहिंसास्तेयब्रह्मचर्यापरिग्रहाणां यमानां शौचसंतोषतपःस्वाध्यायेश्वरप्राणिधानानां च नियमानामाचरणमावश्यकं विद्यते। एतेषां सर्वेषां सूक्ष्मविचारो नात्र शक्यः। तस्माद् दिङ्मात्रमिदं द्रष्टव्यम्। अभ्यासेन हि निर्मलीकृतानां चिन्तनद्यां शक्तिरत्नानि दृग्गोचरीभवन्ति। संयमजयाद्धि प्रज्ञालोकेजायते। इयं हि योगजा प्रज्ञाऽध्यात्मप्रसादाल्लौकिकप्रज्ञातो विशिष्टा सत्यृतम्भरेत्युच्यते। प्रज्ञोदयानन्तरमपि सावधानता साधकस्य नितरामावश्यकी। प्रज्ञालोकस्य भूमिषु विनियोग एवोन्नत्यै भवति। अन्यथा हि व्युत्थाने सिद्धिवद्भासमाना अपि शक्तयः समाधावुपसर्गा भवन्ति, भ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वादींश्च विक्षेपाञ्जनयित्वा विक्षिप्तावस्थां नयन्ति साधकम्। उक्तं हि (३, ६) व्यासभाष्ये – "तस्य संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोगः। न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते। तदभावाच्च कुतस्तस्य प्रज्ञालोकः? ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः। कस्मात्? तदर्थस्यान्यत एवावगतत्वात्। भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः। कथम्? तदर्थस्यान्यत एवावगतत्वात्। भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः। कथम्? एवं ह्युक्तम् –

**योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्तते।**
**योऽप्रमत्तस्तु योगेन स योगे रमते चिरम्॥ इति।"**

अत्र योग एवोपाध्याय इति यदुक्तं तदतीव महत्त्वपूर्णम्। साधकेन सुयोग्यगुरुलाभो मे कुत्र स्यादिति चिन्ता न कार्या। यदि योगसाधने दृढा श्रद्धाऽस्ति तदेव साधनं प्रगतिपथं दर्शयिष्यति।

योगमार्गे हि सन्ति बहूनि विलोभनानि। तान्यपहायैव साधकस्योन्नतिः सम्भवति। अस्मिन् विषये पुनरपि व्यासभाष्योद्धरणमपरिहार्यं मन्यामहे – ''चत्वारः खल्वमी योगिनः प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति। तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रथमः। ऋतम्भरप्रज्ञो द्वितीयः। भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कर्तव्यसाधनादिमान्। चतुर्थो यस्त्वतिक्रान्तभावनीयः, तस्य चित्तप्रतिसर्ग एकोऽर्थः। सप्तविधास्य प्रान्तभूमिप्रज्ञा।

तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरूपनिमन्त्रयन्ते – भो इहास्यताम्, इह रम्यताम्, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्यू बाधते, वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी सिद्धा महर्षयः उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रे चक्षुषी च, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति। एवमभिधीयमानः सङ्गदोषान् भावयेद् – धोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः। तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः। स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति। स्वस्ति वः स्वप्रोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत्।

एवमयं पातञ्जलयोगगतश्चित्तविचारो मनोविज्ञानस्य प्रगतिं भृशमुपकुर्यात्। विशेषतः प्रायोगिकमनोवैज्ञानिकैः (Experimental Psychology) अनया दिशाऽवश्यं प्रयतनीयम्। अद्य हि बाह्यविषयाणां ज्ञानेन मानवेन भौतिकशक्तयोऽधिगताः। ता यदि मानवजातेरेव विनाशार्थं न भवेयुरित्यस्त्यपेक्षा, तर्हि मानवस्यान्तर्ज्ञानेन प्रगतिरतीतावश्यकी। तदर्थं च पातञ्जलयोगस्य पुनः संशोधनेन मार्गदर्शनं कर्तुं भारतीयाः प्रभवेयुः।

**सन्दर्भग्रन्थाः –**


1. वेंकटराघवाचार्य,वे. श्री, (१९८२)शिक्षामनोविज्ञानम्, प्रथमसंस्करणम्, रा.सं.सं.,नईदिल्ली ।
2. मिश्रः, लोकमान्य (२००५), आधुनिकंशिक्षामनोविज्ञानम्, मृगाक्षीप्रकाशनम्, लखनऊ।
3. परमहंसस्वामीअनन्तभारती, (२००९)योगदर्शन, स्वामीकेशवानन्दयोगसंस्थान, दिल्ली।
4. आत्रेय, शान्तिप्रकाश, योगमनोविज्ञानकीरूपरेखा, मुरादाबाद।
5. शुक्ला, मानसी, (२००४) वैदिकअनुष्ठानोंकामनोवैज्ञानिकअनुशीलन, नागप्रकाशन, दिल्ली।



सहायकाचार्यः, शिक्षाशास्त्रविभागः

राष्ट्रियसंस्कृतसंस्थान (मा.वि.) जयपुरपरिसरः, जयपुरम्।

# शिक्षाशास्त्रे आध्यात्मिकशिक्षायाः वर्तमाने उपयोगिता आवश्यकता च

डॉ. कैलाश चन्द्र बुनकर

शिक्षाशब्दस्य उद्गमं संस्कृतस्य ''शिक्ष्'' धातोर्निष्पन्नः। अस्यार्थः ''सीखना'' प्रेरकरूपे, अस्यार्थः ''सिखाना'' भारतीय भाषासु शिक्षायाः पर्यायवाचीरूपे विद्या ज्ञानं वा प्रयोगमभवत्। शिक्षायाः आंग्लभाषाप्रयोगं 'एजुकेशन' लैटिनभाषायाः 'एजुकेटम्' वा 'एजुकेयर' इति। शिक्षायाः परिभाषायाः विषये अरस्तु उक्तञ्च।

**''स्वस्थशरीरे स्वस्थ मस्तिष्कस्य रचना एव शिक्षा''**

**कान्टमतानुसारं ''मानवस्य पूर्णतायाः विकासः'' इति।**

**शिक्षायाः उद्देश्यं-**

**''जेणरागा विरज्जेज्ज, जेण सेएसुरज्जादि।**
**जेणमित्तीं पभविज्ज, तंषाणं जिणसासणं।।''**

शिक्षा जीवने, आध्यात्मिक शान्ति, पवित्रता, आनन्दस्य साक्षात्कारं करोति।

**आध्यात्मिक शिक्षाः-''अस्या शिक्षायाः वर्तमाने आवश्यकता उपयोगिता च''**

शिक्षाशास्त्रस्यान्तर्गतेः ईश्वरं प्रति आस्थाः सदाचारः सामाजिकं तथा वैयक्तिक कानूनकर्त्तव्यञ्च समाहितः। हिन्दूधर्मस्य विशेषतास्ति, यत् सः जीवनस्य सकलपक्षान् समन्वितरुपेण पश्यति। तस्य कोऽपि पक्षः परस्परं पृथक् कर्तुं न शक्नोति। पारलौकिक, लौकिकेन सह सम्बद्धोऽस्ति तथा च चिन्तनं व्यवहारेण सह चलति। चतुर्णां पुरुषार्थानां कल्पना जीवनस्य सकलपक्षाणां समन्वयस्य आदर्शरूपं वर्तते। एते पुरुषार्थाः परस्परसमन्वितं भूत्वा धर्मस्य उद्देश्यस्य पूर्तिं करोति। हिन्दूधर्मं केवलं आदर्शवादी नास्ति। सः व्यवहारस्य धरातले स्थिति अस्ति यथार्थवादी चास्ति। धर्ममनुष्यात् भिन्नं नास्ति, अपितु धर्म एव तस्याचरणं जीवनं चास्ति, यः मानवे मानवीयगुणानां निर्मापयति। धर्मः मानवं पशोः भिन्नकरणस्य योग्यताहित, अस्य सम्बन्धं च सम्पूर्ण व्यक्तित्वेनास्ति। सुख-दुःखं सम्पत्तिविपत्तौ सर्वे धर्मसूत्रस्य दृष्टिरस्ति, सः नरस्य सामाजिकं, पारिवारिकं, वैयक्तिकं पारलौकिकं च समस्तपक्षेषु सूक्ष्मरुपेण विचारयति। हिन्दूधर्मस्य मानवीय जीवनेन सह यः स्पष्ट तादात्मयमस्ति, सः पाश्चात्य विद्वांसः धर्मस्यचिन्तकानपि च प्रभावितमकरोत्। प्रो. मैक्सक्यूल्लेर महोदयेन भारतीय धर्मस्य विशेषता विषये स्वविचारम् अनेन प्रकारेण व्यक्तः। इदम् आध्यात्मिकजागरणम् आस्था वा अद्यत्वे जगतः प्राथमिकी आवश्यकता।

"जगतः मानव इतिहासस्य एकमात्रं वास्तविकं गम्भीरचिन्तनस्य विषयः
आस्था-अनास्थायाः संघर्षोऽस्ति समस्त अपर-विषयं अस्याधीननमेव वर्तते।"

अस्या आस्थायाभावे किञ्चित्कालाय वैभवस्य चमत्कृति असत्यगरिमां च प्राप्तुं शक्नोति। मानवः आध्यात्मिकतया सह जीवति, आस्थायाभावे मृत्युं प्राप्नोति। समाजमपि आध्यात्मिकतया सह जीवति, आस्थायाभावे मृत्युं विनाशं भवति। आस्थेव भारतीय धर्मस्य, शिक्षाशास्त्रस्य आध्यात्मिक पक्षं वर्तते। आध्यात्मिकता भारतीय चरित्रस्य एतादृशी विशेषता वर्तते, यया अस्माकं संस्कृतिं अमरतां प्रदत्ता। अस्य आध्यात्मिकताया उल्लेखः प्रो. माक्सम्यूल्ल्लेरः स्पष्ट शब्देषु कृतवान्। 'यदि मत् एकस्मिन् शब्दे भारतीय चरित्रस्य विशेषतायाः विषये पृच्छेत् तर्हि अहं कथयिष्यामि यत् सः पारलौकिकमासीत्। भारतीय चरित्रस्य पारलौकिक मनोवृतिः असरू कस्यापि देशस्य अपेक्षा अधिकं प्राधान्यं प्राप्तवान्।" (व्हाट कैन इण्डिया टीच अस)

मनुष्यस्य आध्यात्मिकम् एवं मानसिकसुखानां मूले तपमेव वर्तते।

१. तपोमूलमिदं सर्वं, दैवं मानुषकं सुखम्।
तपो मध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः।।

२. मनसश्चेन्द्रियाणां च ह्येकाग्रं परमं तपः।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः परमुच्यते।। इतियति धर्मः (तैत्तिरीयारण्यक १०/६२)

आध्यात्म/तपस्य विषये महाभारतेऽपि उक्तञ्चः-

१. तपोबलं तापसानां ब्रह्म ब्रह्मविदां बलम्।
हिंसाबलम्साधूनां क्षमागुणवतां बलम्।।

आध्यात्मिक प्रवृत्या आत्मिकशुद्धिः भवति, या मनुष्यं मनसा, वाचा, कर्मणा शुद्धं करोति, बौधायनः शुद्धिर्विषय सम्बन्धे उक्तिर्प्रसिद्धा, अस्यांरूपेव मनुस्मृतौऽपि।

अद्भिः शुध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुध्यति।
अहिंसया च भूतात्म मनः सत्येन शुध्यति।। (१/५/१२ बौधायनः)

आध्यात्मिकता ईश्वरस्य कल्पनाहित, यस्याविषये योगसूत्रेऽपि कथ्यते।

"क्लेशकर्मविपाकारैरपशमृष्टः पुरुष विशेष ईश्वरः" (योगसूत्र १/२४)

आध्यात्मिक शिक्षायाः जीवने श्रेष्ठसंस्कारं स्वीकृत्य शुद्धतया ईश्वरीयशक्तेः कार्यान् संगृहीत्य अग्रे वर्धापनं। स्मृतिशास्त्रेषु आध्यात्मिक शिक्षायाः अन्ताराष्ट्रिय प्रभावमपि दृष्टिगोचरं भवति। चम्पाद्वीपस्य शिलालेखे मनुस्मृते श्लोकं उत्कीर्णमस्ति।

**"वित्तं बन्धुर्वयः कर्मविद्या भवति पञ्चमी।**
**एतानिमान्यस्थानानि गरीयो यद् यदुत्तरम्।।"**

अतः वर्तमाने आध्यात्मिकशिक्षा लोकाचारं, देशाचारं, शिष्यचारम् आचरणं लोकहिताय भवति।

स्मृतयः उपनिषद् इव केवलम् आध्यात्मिकं ग्रन्थं नास्ति, अपितु समाजस्य विधानमपि अस्ति। सन्मार्गदर्शकम्, उपदेशवचनैः स्मृतिसाहित्यमपि ओतप्रोतं सन्ति। तान् आचरणे गृहीत्वा समाजं राष्ट्रं च अधिकाधिकं समुन्नतं कर्तुं शक्नुमः।

गीतायामपि उक्तञ्च-

१. अध्यात्मविद्या विद्यां वादः प्रवदतामहम् (१०/३२)

२. वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः।
मुनीनामप्यहं व्यासः कपिनामुशना कविः।। (१०/३७)

अन्येऽपि च-

१. शिक्षार्थी शिक्षकः शिक्षा, शिक्षाकेन्द्रं तथैव च।
एतेषामेव योगेन, देशोऽस्माकं प्रवर्धताम्।।

२. श्रुतिर्विभ्भन्नाः स्मृतयर्विभिन्ना, नैकोमुनिर्यस्य वचः प्रमाणं।
धर्मस्य तत्वं निहितं गुहायां, महाजनो येन गतः सः पन्था।।

अतः वर्तमानेऽपि आध्यात्मिकशिक्षायाः महती आवश्यकता उपयोगिता च आवश्यकरुपेण मानवजीवने सार्थकं वर्तते।

**सन्दर्भः-**

१. व्हाटकेन इण्डिया टीच अस १०४/१०५
२. तैत्तिरीयारण्यक १०/६२
३. बोधायन ११५/१२
४. योगसूत्र १/२४
५. गीता - १०/३२, १०/३७

प्राचार्य
राज. लक्ष्मीनाथ शास्त्री संस्कृत कालेज
चीथवाडी जिला जयपुर (राज.)

# उपनिषद्वर्णिताः शैक्षिकविचाराः

दिव्यान्शु शर्मा

**किं नाम उपनिषद् ?**

उपनिषत् इति शब्दस्य अर्थः ''ब्रह्मविद्या'' इति भवति। उपनिषद् शब्दस्य निष्पत्तिः उप-नि- उपसर्गपूर्वकात् सदृल (सद्) धातोः क्विपि प्रत्ययेन भवति। अत्र सदृलप्रयोगः 1. विशरण 2. गतिः 3. अवसादन त्रयः अर्थेषु भवति। अतः उपनिषदः अभिप्रायः वर्तते- अविद्यायाः विशरणम्, ब्रह्मविद्यायाः प्राप्तिः सांसारिकदुःखानां शिथिलीकरणं च॥

यद्यपि उपनिषदां संख्या अष्टोत्तरशतं मन्यते तथापि दशोपनिषद् एव मुख्यत्वेन मन्यते।

**ईशकेनकठप्रश्नमुण्डमाडूक्यतित्तिरः।**
**छान्दोग्यं एतरेयं च बृहदारण्यकं तथा।**

भारतियसंस्कृतौ उपनिषदाम् आध्यात्मिकदृष्ट्या महन्मत्वं वर्तते। इमाः उपनिषदः आत्मनः परमात्मनञ्च विषये विचारयन्ति। एतासु उपनिषत्सु आध्यात्मिकज्ञानेन सह कर्तव्याकर्तव्यज्ञानमपि निबद्धं वर्तते। उपनिषदः यज्ञानुष्ठानविरोधि किमपि नूतनमेव मतमुपस्थापयति। वैदिककालादारभ्य भारतीयत्वविचारवस्थां सुष्ठु प्रदर्शयन्ति विद्यया जीवात्मनः परमात्मना सह एकतासंपादनेन प्राप्तव्यं यत्संसारविमोचनमेवधिकृत्य कथयन्ति ततश्चोपनिषत्सु कर्मकलापानां निरर्थकत्वं ज्ञानस्य सर्वमुख्यत्वं चोपवर्णितम् उपनिषत्सु परं ब्रह्माधिकृत्य यः आशयः उपलभ्यते सः मूर्तस्त्रष्टारं प्रजापतिमश्रित्योत्पन्नः वर्तते।

उपनिषत्सु आत्मब्रह्माशब्दयोः पर्यायत्वं स्वीक्रियन्ते। वैदिकसाहित्ये समस्तज्ञानविज्ञानं निहितं वर्तते। वैदिकसहित्यमं ज्ञानकाण्डात्मकं, कर्मकाण्डात्मकं प्रकारेण द्विधा भवति तत्र ज्ञानकाण्डात्मके वैदिकसाहित्ये उपनिषद् वाङ्मयं सर्वस्वमन्तर्भवति ! अतः उपनिषदःतत्वज्ञानस्य प्रमुखोस्त्रोतांसीति कथने अत्युक्तिर्नास्ति।

उपनिषद्-युगे भौतिक-आध्यात्मिकजीवनस्य निर्माणं तथा च व्यावहारिकजीवने विभिन्नोत्तरदायित्वानां निष्पादनस्य शिक्षा अददात्। तैत्तिरीयोपनिषदि शिक्षावल्यां वर्ण-स्वर-मात्रा-बल-साम-सन्तानादीनां वर्णनं प्राप्यते।

उपनिषत्सु गुरुशिष्यसम्बन्धानामुपरि चर्चा प्राप्यते गुरुः शिष्यस्य उपनयनसंस्कारेण शिष्याय शिक्षां ददाति। शिष्यः समित्पाणिः भूत्वा गुरोःसमीपं गत्वा शिष्यत्वं गृह्णाति स्म। शिष्यःअन्तेवासी भूत्वा विद्याग्रहणं करोति स्म। विद्याग्रहणाय त्रीणि सोपानानि भवन्ति -(१)भिक्षाटनम् (२)ब्रह्मचर्याश्रमः (३)सामाजिकदायित्वम्

विद्यारम्भः उपनयनसंस्कारेण विद्यासमापनञ्च समावर्तनसंस्कारेण भवति स्म। माता प्रथमगुरुः आसीत्। अतः प्रारम्भिकशिक्षा गृहे एव भवति स्म। उच्चशिक्षाग्रहणाय आश्रमेषु आचार्यकुलेषु वा अन्तेवासी भूत्वा निवसन्ति स्म। याज्ञिकानुष्ठानेषु विधिसन्दर्भेषु आयोजितेषु विद्वत्सम्मेलनेषु उच्च शिक्षायाः प्राप्तिः भवति स्म। सम्पूर्णोपनिषदानां ज्ञानं वाङ्मयं विद्वत्सम्मेलनेषु उच्च शिक्षायाः प्राप्तिः भवति स्म। सम्पूर्णोपनिषदां ज्ञानं वाङ्मयं विद्वत्सम्मेलनेषु आश्रमेषु च प्रचलितानां संवादानां, वादविवादानां संङ्गोष्ठीना प्राप्नुवन्ति।

**विदुषामभिप्रायः -**

डाँ.सर्वपल्लीराधाकृष्णन् महोदयः - **"वैदिकविद्यानां सरोऽत्र विद्यते इति हेतुना उपनिषद्-साहित्ये अधिकतया भारतियदर्शनशास्त्रस्य धार्मिकसम्प्रदायानां भवनं निर्मितम्।"**

ब्लूम.फ़ील्डस महोदयः - **"भारतियचिन्तनस्यतादृशं रूपं कुत्रापि नास्ति यादृशम् उपनिशद्यः निस्सृतमस्ति"**

दूसनमहोदयः - **"उपनिषदां दर्शनसंबद्धानिसर्वाणि तत्वानि अधिकृत्य सुस्पष्टं विचारः कृतवान्।"**

**सन्दर्भग्रन्थ–**

१. प्रो. श्रीमती संतोष, 'संस्कृतं शिक्षणम्' नवचेतना पब्लिकेशन्स, जयपुरम्
२. हनुमानप्रसादपोद्दार कल्याण 'उपनिषद् अङ्क' गीताप्रेस गोरखपुर
३. मिश्र, डॉ. लोकमान्य, 'पुरातनी शिक्षा' मृगाक्षी प्रकाशन, लखनऊ
४. कुमार, कृष्ण, 'प्राचीन भारत की शिक्षा पद्धति'

शोधच्छात्रः
रा.सं.सं., जयपुरपरिसरः

# संस्कृतशिक्षकः मूल्यशिक्षा च

**अन्वेशा सिंह**

**मूल्यम्** - मूल्यशब्दस्य अर्थः भवति उपयोगिता, वाञ्छनियता, महत्त्वं च। आङ्ग्लभाषायां Value इति पदं लेटिन भाषायाः Valuer इति शब्दात् उत्पत्तिः जातम्। अस्य अर्थः उपयोगिता वर्तते।

वस्त्रादीनां वस्तूनां वा उत्पादने विकृत्रिभिः विनियुक्तद्रव्यं मूल्यम् इति। विक्रयणेन प्राप्तम् अतिरिक्तं द्रव्यं लाभाशं मूल्यम् इति उच्यते। किन्तु सामाजिकसन्दर्भे यैः आदर्शैः तेषां व्यवहारः नियम्यते तन्मूल्यम् इति उच्यते। मानवशास्त्रज्ञः सांस्कृतिकलक्षणानि मूल्यरूपेण वदन्ति। तेषां दृष्टौ संस्कृतिः मूल्यं च समानो दृष्टः।

कस्यापि समाजस्य ये विश्वासाः आदर्शाः, सिद्धान्ताः नैतिकनियमाः, सम्प्रदायः, व्यवहारमानदण्डाश्च भवन्ति। समाजस्य सर्वेऽपि मनुष्याः तेषां महत्त्वम् अङ्गीकुर्वन्ति। अनेन सामाजिकानां व्यवहारः नियमितं नियन्त्रितं च भवति। एतदेव च सामाजिकमूल्यम् इति उच्यते।

यदा पाठ्यक्रमे मूल्यविषयक उपदेशः क्रियते, यथा- 'सत्यं वद', 'धर्मं चर', 'स्वाध्यायान्मा प्रमद', 'आचारहीना न पुण्यानि वेदः' तदा एतन् मूल्यशिक्षा इति उच्यते। यदा च शिक्षायाः आयोजने पाठ्यपुस्तकेषु पाठ्यसहगामिक्रियासु च मूल्यशिक्षणं च क्रियते। तदा सा मूल्याधारिता शिक्षा इति उच्यते।

एवमेव बहूनि मूल्यानि परिस्थितिकानि भवन्ति। परिस्थितिकानि मूल्यानि प्रत्येकमपि जनस्य वातावरणेन भवन्ति। आपातकाले हिंसायाः अपि व्यवहारः न्यायोचित भवति। एवमेव परिस्थितिं वीक्ष्यं कर्त्तव्याकर्तव्यस्य निर्धारणं परिस्थितिकमूल्ये आयाति। यथा उक्तमस्ति-

**"प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः।**
**तस्मात् तदैव वक्तव्यं वचने का दरिद्रता॥**
**सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यम् अप्रियम्।**
**प्रियं च नानृतं ब्रूयात् एषः धर्मः सनातनः॥"**

तद मूल्यं वर्तते यद् मानवा इच्छां पूरयति। मानवस्य वाच्छानां वा पूर्तिः किमर्थं करणीया एतस्य उत्तरं भविष्यति यत् जीवितुम् इच्छापूर्ति अपेक्षिता परन्तु वयं जीवितुं किमर्थं भवामः, उत्तरे अस्मिन् वयं स्वजीवनस्य कानिचित् लक्ष्याणि उद्देश्यानि वा कथयामः यस्य कृते वयं जीविताः भवामः। तत्र एका व्यक्तिः कथयति कलायाः साधनाय, द्वितीया कथयति यत् सत्यस्य अन्वेषणाय, तृतीया च कथयति यत् ईश्वरप्राप्त्यर्थं जीविताः भवितुम् इच्छामः। एकः कलाकारः कलायाः रचनां

किमर्थं कर्तुम् इच्छति। यतः तस्यानुसारं कला तु वयं कलायाः कृते वर्तते। एवमेव सत्यं सत्यस्य कृते वर्तते। एवमेव सत्यं सत्यस्य कृते, परोपकारः परोपकाराय, कर्तव्यं कर्तव्यस्य कृते तथा च ईश्वरः ईश्वरस्य कृते वर्तते। एवं प्रकारेण वयम् एतादृशानां मूल्यानाम् अवधारणां यावत् गच्छामः, यानि अन्तिममूल्यानि सन्ति। दर्शने एतानि मूल्यानि मौलिकानि परममूल्यानि सन्ति। परममूल्यस्य मूल्यम् उद्देश्यमूल्यस्योपरि आश्रितम्। यदि उद्देश्यं मूल्यमानमस्ति, तर्हि तस्य प्राप्तकरणस्य साधनमपि मूल्यमानं भविष्यति यथा उपनेत्रस्य प्रयोगः दर्शनार्थं भवति। इदमेव तस्य मूल्यम्।

**परिभाषा–**

**राधाकमलमुखर्जीमहोदयानुसारं**– "मूल्यानि समाजेन अङ्गीकृतानि इच्छालक्षणानि वक्तुं शक्यन्ते। एतानि लक्षणानि अनुबन्धनेन अभिगमने सामाजिकीकरणप्रक्रियायाः च आभ्यान्तरीक्रियन्ते। यानि च आत्मनिष्ठयाम् अभिमानानाम्, आकाक्षाणां च रूपं धरन्ति।"

**मूल्यसम्पादनस्य मार्गाः –**

1. मूल्याधारितम् आचरणम्
2. कथाकथनम्।
3. निन्दा, प्रशंसा, पुरस्कारः दण्डश्च
4. सेवाकार्यक्रमः
5. धर्मः
6. सांस्कृतिकशिक्षणम्।

**मूल्यानां प्रकाराः**

- महात्मगान्धिनां मते एकादशमूल्यानि सन्ति। यथा– सत्यम्, अहिंसा, अस्तेयं (अचौर्यम्)- अपरिग्रहः, ब्रह्मचर्यः, अस्वादः, अभयं, अस्पृश्यता निवारणं, कायिकश्रमः, सर्वधर्मसम्भावः विनम्रता च।
- N.C.E.R.T. आधारेण 83 मूल्यानि सन्ति। तेषु प्रमुख–रूपेण 5 गण्यते। यथा– स्वच्छता-सत्यता–श्रम -समानता–सहयोगः।
- स्पेञ्जन महोदयानुसारं षड्विधानि मूल्यानि सन्ति–

1. सैद्धान्तिकं
2. आर्थिकं
3. सौन्दर्यबोधात्मकं
4. सामाजिकं
5. राजनैतिकं
6. नैतिकं च

**मूल्यम् अनुशासनं च –**

यथा जीवने मूल्यम् अनिवार्य तथा अनुशासनम् अनिवार्यम्। यदि मूल्यानि दृढतया भवन्ति तर्हि अनुशासनम् अपि व्यवहारे समायाति। शिक्षा-जगति मूल्यानुशासनयोः पूर्वाभावः स्वीक्रियते। शासनानुशासनयोः मध्ये सूक्ष्ममन्तरं भवति।

**हरवर्टमहोदयानुसारे-** "कक्षाशिक्षणे कक्षायां शान्तिमय वातावरणस्य स्थापना शिक्षकाय अनुशासितं भवति। अपि च छात्रान् सुसभ्यान् संस्कृतांश्च कर्तुं तेषां स्वभावे साक्षात् प्रभावोत्पादनम् अनुशासनं भवति।"

**मुनरो-महोदयानुसारे-** "बालकबालिकानां जनतन्त्रात्मकसामाजिकजीवनस्य निर्माणमेव सामान्य-मूल्यानुशासनम्।"

**"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥"**

(श्रीमद्भगवद्गीता)

**"अहिंसा सत्यंक्रोधत्यागः शान्तिरपैशुनम्**
**दया भूतेष्वलोलुप्त्वं मार्दव ह्रीरचापलम्॥ "**

(श्रीमद्भगवद्गीता)

**संस्कृतशिक्षकः मूल्यशिक्षा च–**

शिक्षायाः उद्देश्यम् उत्तमव्यक्तित्वस्य निर्माणम् एव। किन्तु विद्यां प्राप्य अपि छात्रः स्वोद्देश्यपूर्णजीवनं न जीवति। तदस्य एकमेव कारणं यत् शिक्षायां पठितानां मूल्यानां व्यवहारिकजीवने उपयोगः न क्रियते।

संस्कृतशिक्षकस्य कर्तव्यं वर्तते मूल्यपरकशिक्षायै अनुसन्धानं कुर्यात्। परस्परविरोधमूल्यानां प्रत्यभिज्ञाः कृत्वा छात्रेषु सिद्धान्तनिर्धारणाय विवादं कारयेत्। सः मूल्यसम्बद्धाः सूचना एकत्रीकृत्य परीक्षणाय निर्माय मूल्यमापनं कुर्यात्। मूल्यनिर्णयार्थं छात्रान् प्रेरयेत्।

मूल्यशिक्षायैः आत्मसमीक्षणस्य सामर्थ्यं दातव्यम्। स्वाध्यायद्वारा मूल्यविषयकज्ञानं रचयितुम् कल्पनीयः व्याख्यानैः, प्रदर्शनेः, दृश्यश्रव्यसामग्र्यैः, निर्देशनपरामर्शः, पाठ्यसहगामिक्रियाभिः, सांगोष्ठिभिः, परियोजनाभिः च मूल्यानां प्रशिक्षणं दातव्यम्। यौतुकं, सतीप्रथा, बहुपत्नीवादः, धार्मिकान्धता इत्यादीनां निराशपूर्वकं विविधक्रियाभिः करणीय। समाजपोलब्धिः विशिष्टपर्वाणाम् उत्सवानाम् आयोजनं, महापुरुषाणां व्यक्तित्वनिरूपणं च करणीयम्।

शिक्षकः छात्रस्य अज्ञानरुपकम् आवरणं दूरं कृत्वां ज्ञानरूपकं प्रकाशे तस्य जीवनं आलोकितं करोति। अज्ञानरूपी अन्धकारे ज्ञानरूपी प्रदीपः आवृन्तः करोति। यथा उक्तम्–

**अज्ञानान्धकारस्य ज्ञानाञ्जनशलाकया।**
**चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः॥**

आदर्शशिक्षकः एव मनुष्याणां निर्माता, शिक्षापद्धतेः आधारशिला, समाजस्य गतिप्रदायकश्च भवति। सामान्यतया एतादृशशिक्षके एव बालकस्य अवबोधनशक्तिः, कार्यक्षमता, शिक्षणयोग्यता आदि गुणाः अपेक्षन्ते। अपि च निम्नलिखितागुणाः संस्कृतशिक्षकस्य कृते मूल्यचिन्तनाय अपेक्षितं यथा

संस्कृतशिक्षकस्य मुख्यकर्त्तव्यं वर्तते छात्राणां मनसि ईश्वरभक्तिः तथा धार्मिकभावनायाः जागरणम्। भारतवर्षः धर्मप्रधानदेशः इति कथ्यते। प्राचीनकाले सामाजिकजीवने धर्मस्य महत्त्वं आसीत्। यथा उक्तम्-

**धृतिक्षमादमोऽस्तेयं शौचमिनिद्रयनिग्रहः।**
**धीविद्यासत्यमक्रोधो दशकं धर्मलक्षणम्॥**

धार्मिकभावनायाः अभिप्रायः ईश्वरं प्रति आस्था तथा ईश्वरोपासना। अतः शिक्षामाध्यमेन छात्राणां कृते मूल्यपरकशिक्षा तथा संस्कारः संस्कृतशिक्षकस्य प्रयासेन एव सफलतया सम्पन्न भवितुं शक्यते।

**व्यक्तित्वस्य निर्माणम्-**

छात्रस्य व्यक्तित्वनिर्माणं, विकासः तथा उन्नतिकरणं संस्कृतशिक्षकस्य परमध्येयः स्यात्। व्यक्तित्वस्य दृढता तथा स्वच्छतां विना मानवस्य जीवनं व्यर्थः स्यात्। अस्य अभावेन मनुष्यः समाजे सम्मानस्य अधिकारी न भवितुम् अर्हति। शिक्षा एवं ज्ञानप्राप्त-करणेन मनुष्यं व्यक्तिगत तथा सामाजिकनियमः, मूल्यं पालनं करणे समर्थः भवति। अस्य माध्यमेन तस्य मनसि आत्मसंयमः, आत्मविश्वासः, सम्यग्चिन्तनम्, आत्मविश्लेषणं आदि भावनायाः विकासः भवति।

**आत्मसंयमभावनायाः विकासः -**

शिक्षकः छात्रस्य आत्मसंयमभावनायाः विकासकरणे प्रमुख भूमिकां ग्रहणं करोति। शिक्षासंस्थायां यदा छात्रः प्रवेशं करोति तदा आत्मसंयमी भावनायाः विकासार्थ प्रयासः क्रियते। आत्मसंयमः अर्थात् स्वस्योपरि नियन्त्रणम्। इन्द्रियाणां नियन्त्रणं तथा सामाजिकव्यवस्थायां स्वस्यकर्तव्यपालनकरणमेव आत्मसंयमः स्यात्।

आत्मसंयमस्य पालनं छात्रः स्वेच्छया आन्तरिकभावनायाः प्रेरितं भूत्वा एव करोति। परन्तु कुत्रचित् शिक्षकः अपि मार्गदर्शने सहायकं भवति।

**सामाजिकोत्तरदायित्वस्य निर्वाहनम् -**

शिक्षकस्य अन्य-एकम् उद्देश्यं सामाजिकोत्तरदायित्वस्य निर्वहणम् अपि वर्तते। समाजे सुधारार्थं तस्य कर्त्तव्यः वर्तते। नैतिकतायुक्त-विचाराः, नैतिकमूल्यानां प्रचारः, उत्तमसामाजिक

वातावरण निर्माणे सहायकं भवति। समाजे संस्कारयुक्तविचाराणां प्रचारः तथा परिवारे उत्तमः वातावरण-निर्माणे प्रोत्साहनं करोति। यथा उक्तं-

**''सत्यं माता-पिता ज्ञानं धर्मो भ्राता दया सखा।**
**शान्तिपत्नी क्षमा पुत्री षडेते मम बान्धवाः॥''**

चरित्रनिर्माणम् –

शिक्षकस्य प्रमुखम् उद्देश्यं वर्तते छात्राणाम् उत्तमचरित्रनिर्माणे सांह्य्यप्रदानम्। छात्रः शिक्षासंस्थानस्य नियमपालनपूर्वकं सन्मार्गस्य अनुसरणं करोति। सन्मार्गानुसरणपूर्वक छात्रः श्रेष्ठचरित्रः धारणं करोति। अस्मिन् मार्गे शिक्षकः पथप्रदर्शकः रुपेण पथप्रदर्शनं करोति। यथा उक्तम्-

**''प्रेरकः सूचकश्चैव वाचकोदर्शकस्तथा।**
**शिक्षकोबोधश्चैव षडेते गुरवः स्मृतः॥ ''**

गुरुः सर्वदा छात्रस्य मार्गदर्शकः वर्तते। मानवस्य उत्तमकर्मः एव तस्य उत्तमचरित्रनिर्माणे सहायकं भवति। तस्य उत्तमकर्मस्य संचालनं नैतिकमूल्ये एव भवितुं शक्नोति।

अस्मिन भारतवर्षे येषां नामानि स्वर्णाक्षरेषु उल्लेखितम् अस्ति, ते सर्वे निःसन्देहं स्वकीया-आचार्याणां कृपया एव विद्ययां, वीरतायां, दानशीलतायां, मन्त्रे, तन्त्रे, शिल्पशास्त्रे, ज्ञान, विज्ञाने, चिकित्सायां, काव्यरचनादि प्रभूतिः विभिन्नक्षेत्रेषु च सुप्रसिद्धाः जाताः।

आचार्याः स्वकीयैः लोकप्रियः गुणैः, त्यागैः, ज्ञाननिधिभिः, शिष्याणां कल्याणस्य परमकानाभिश्च गौरवास्पदम् आसन्। गुरुः एव अज्ञानान्धतमसं व्यवच्छिद्य ज्ञान-ज्योतिर्वेलयति। तत् कृपाएव दिव्यदृष्टित्वं प्राप्यते।

वस्तुतः आचार्यः खलु ईदृशः जनः यः 'केन प्रकारेण व्यवहारः समाजे कर्तव्यः' इति शिक्षां सर्वेभ्यः जनेभ्यः ददाति। अनेनैव गुरुः सदैवः पूज्यः श्रद्धेयः च भवति। अस्माकं शास्त्रेषु गुरोः स्थानं भगवतः उपरि कथितम्। यथा उक्तम्-

**''गुरूर्बह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परं ब्रह्म तस्मै श्री गुरवे नमः॥''**

शिक्षाचार्यच्छात्रा

# प्राचीनार्वाचीनशिक्षायाः स्वरूपम्

बोलतीराम मीना

**भूमिका**-कस्यापि सुसंस्कृतस्य सभ्यमानवस्य च ज्ञानं तस्य शिक्षयैव भवति। यदि काऽपि जनजाति वा उन्नताऽस्ति तर्हि तस्य मुख्य कारणं शिक्षैव भवति। सत्यमेव कथितं यत्-"ज्ञानेन हीनाः पशुभिः समानाः" एवं स्पष्टो भवति यत् सामाजिक प्रगतयै वैयक्तिक-विकासस्य नितरामावश्यकता भवति। एतत् ज्ञानं शिक्षया एव सम्भवति।

अत्र प्रश्नोऽयमुपस्थितो भवति यत् का नाम शिक्षा? तस्योत्तरे 'शिक्षा' शब्द संस्कृतभाषायाः शिक्ष् धातुना निष्पद्यते। 'शिक्ष्' इत्यस्य हिन्दीभाषायामऽर्थोस्ति 'सीखना' वा शिक्षणम् अस्य शब्दस्य अध्ययापनम् इत्यस्यार्थे प्रयुक्तो भवति। अतः स्वकीयेमूलार्थे शिक्षाशब्दे भावद्वयं निहितं वर्तते। शिक्षायाः प्राप्तिकरणं शिक्षाप्रदानञ्च इति।

**प्राच्यदृष्ट्या-शिक्षायाः परिभाषा-**

१. सा विद्या या विमुक्ते - श्रीमद्भगवद्गीता।

२. शिक्षा नाम व्यक्तेः समाजस्य च निर्मात्री स्यात् - श्री सर्वोपल्ली राधाकृष्णन्।

३. ज्ञानं निःश्रेयसाधिगमः - महर्षि गौतमः।

**आधुनिक भारतीयविचारकानुसारं शिक्षा-**

**(I) गुरुदेव रवीन्द्रनाथटैगोर महोदयानुसारम्**-"शिक्षा सा एव अस्ति वा जीवनस्य सम्पूर्णतया सह समन्वयं स्थापयितुं शक्तिं प्रददाति।

**(II) स्वामीविवेकानन्द महोदयानुसारम्**- मनुष्येषु पूर्वमेव अन्तर्निहितपूर्णतायाः अभिव्यक्ति एव शिक्षा वर्तते।"

**भारतदेशे शिक्षा पद्धतिः** (I) परम्परागतशिक्षा (प्राचीन शिक्षा पद्धतिः) (II) आधुनिक शिक्षा पद्धतिः

**परम्परागतशिक्षा-**

प्राचीनशिक्षापद्धत्याः लक्ष्यमासीत्-मोक्षप्राप्तिः। कालोऽयं वैदिककालनाम्ना ज्ञायते। वैदिकशिक्षायाः सम्बन्धः धर्मेण आसीत्। धर्मानुप्राणिता शिक्षेयं प्रतिपादिता मनुस्मृतौवेदोऽखिलो धर्ममूलम् इति। धर्म दशलक्षणात्मकं मन्यते स्म-

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।"

तस्मिन् काले इयं शिक्षा नगरात् दूरे गुरुकुलेषु आश्रमेषु वा दीयते स्म। अत्र गुरुः एव

सर्वश्रेष्ठ मन्यते स्म। गुरूणां चरित्रमेव छात्राणां कृते आदर्शभूतमासीत्। गुरवः छात्राणां चरित्र-विकासोपरि अधिकं महत्त्वं दत्तवन्तः आसन्। अतः यजुर्वेदे चरित्रशुद्धय मन्त्र परिलक्ष्यते यथा-

वाचं ते शुन्धामि। प्राणास्ते शुन्धामि। चक्षुस्ते शुन्धामि। नाभिस्ते शुन्धामि। चरित्रांस्ते शुन्धामि। इति। आचारः परमो धर्म इति निगदितं मनुस्मृतौ। चरित्रं तु वित्तात् प्राबल्यं भजते यथा-अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो इतः। आचारहीनं न पुनन्ति वेदाः।

**गुरूणां कर्तव्यम्-**

छात्राणां सुदृढ़ाधारशिलानिर्माणं-सक्रियोत्तमशिक्षा-प्रदानं-शारीरिकं-मानसिक-चारित्रिक विकासश्च आसन्। गुरुणां परम कर्त्तव्यानि छात्राणामपि अहर्निशं गुरूणां सन्निधावासस्थितिः-अध्ययनं च आसीत् परमं कर्तव्यम्। समाजसेवा-राष्ट्रसेवा-विज्ञान-चिकित्सा-नीतिः-वेदः-युद्धकला, शास्त्रादीनां च अध्ययनं कृत्वा पञ्चविंशतिवर्षोपरान्तं छात्राः गृहस्थाश्रमं प्रति गच्छन्ति स्म।

**प्राचीनभारतीयशिक्षाक्रमः-**

प्राचीनभारतीयशिक्षा भारतीय सामाजिक परिवेशतः स्वरूपिता बभूव। अत्र आर्याणां सामाजिकव्यवस्थायाः प्रभावः प्रधानस्थानवाय। अतः गुरुकुलपद्धतिः-आश्रमवासः-पाठशाला परम्परा वा शिक्षणसंक्रमणार्थे प्रसिद्धिं प्राप। उपनयदीक्षानन्तरं द्वादशवर्षाणि वेदाध्ययनं, ततः वेदाङ्गानां शिक्षाव्याकरणच्छन्दोनिरुक्त ज्योतिषकल्पानां च अध्ययनं पुरस्क्रीयते स्म। सांख्ययोग-न्यायवैशेषिक पूर्वोत्तर-मीमांसानां दर्शनानां चान्तर्भावः कृतः। गच्छति काले क्रिस्तोः शतवर्षेभ्यः प्रागेव अन्यानि शास्त्राणि बह्व्यकला पाठ्यक्रमे प्रवेशं प्रापुः। शिल्पशास्त्रं वैद्यकीयं नाटकं, पुराणानि इतिहासः वाणिज्यं युद्धकला, गणितं, खगोलं, भूगोलं, श्रौतशास्त्रं भाषाशास्त्रं, नृत्यं, सङ्गीतमित्यादीनि पाठ्यक्रमे अन्तर्बभूवुः। ततो क्रमशः नैके विश्वविद्यालयाः प्रतिष्ठापिताः। यत्र विविधाः विद्याबोध्यन्ते स्म। तक्षशिला-वल्लभी-विक्रमशीला-शारदापीठं (काश्मीरे) वाराणसी नालन्दा इत्यादिषु विश्वविद्यालयेषु शिक्षा दीयते स्म। तत्र मौखिककार्य, स्मरणप्रक्रिया, चिन्तनप्रायोगिकपरीक्षणं, व्यक्तित्वभिवर्धनं गुरुशिष्यसम्बन्धः इत्यादयः विषयाः बहुमन्यत।

**आधुनिक शिक्षा-**

पूर्व भारतवर्षः सम्पूर्णविश्वस्य शिक्षा केन्द्रमासीत् तथा राष्ट्रभाषा संस्कृतमासीत्। भारतवर्षः क्रमशः यवनैः आङ्गलशासकश्च पराधीनं जातम्। उर्दू फारसी-आङ्गलभाषा च तत्काले राष्ट्रभाषास्थानं लेभिरे। प्रत्येकं देशस्य भाविनागरिकाः छात्राः एव भवन्ति तथा देशस्य उन्नत्यवनती तच्छिक्षायाः आधारेण एव भवतः। अस्माकं देशः स्वतंत्रः तथा राष्ट्रभाषा हिन्दीम् अमन्यत्। परन्तु अत्र शिक्षाप्रणाली आंग्लपद्धत्या एव दीयते। कथनस्य आशयो वर्तते यत्-आङ्गलविषस्य प्रधानता दृश्यते पाठ्यक्रमे।

**शिक्षायाः उद्देश्यम्-**

**(I) प्राथमिकस्तरे** - प्राथमिकस्तरीयच्छात्राणां कृते सामान्यज्ञानं मातृभाषा, हिन्दी, अंग्रेजी, गणित, पर्यावरणशिक्षा शारीरिकशिक्षा आध्यात्मिक शिक्षा मूल्यशिक्षा च प्रदीयते।

**(II) माध्यमिक स्तरे-** माध्यमिकस्तरीयच्छात्राणां कृते व्यवसायनुगुणं शिक्षा दीयते स्म। अस्मिन् स्तरे एव छात्राः स्वव्यवसायाधारित विषयान् चिन्वन्ति स्म। गणित-विज्ञान-इतिहास-भूगोल-नागरिक शास्त्र-कला सङ्गीत-कार्यानुभवः समाजसेवा, शारीरिकाध्यात्मिकमूल्य युक्ताश्च शिक्षाः दीयन्ते स्मः। एतेन छात्राणां सर्वाङ्गीणविकासः उद्दिष्टः आसीत्।

**(III) उच्चस्तरे-** स्तरेऽस्मिन् विषयाणां बाहुल्यं दृश्यते स्म, एवं स्वव्यावसायिकगुणं शिक्षा प्रादीयत। अस्मिन् स्तरे चारित्रिक-आध्यात्मिक-विकासानां न्यूनता दृश्यते स्म। यतोहि अस्मिन् पाठ्यक्रमे इमे विषयाः पाठ्यविषत्वेन नान्तर्भूताः। साम्प्रतिकशिक्षा प्रत्यक्षविधिमाध्यमेन प्रदीयते। अत्र छात्रशिक्षकयोः सम्बन्धः विद्यालयीय सम्बन्धः एव वर्तते। शिक्षेयं यंत्रवृद्धिभाति। अनेन कारणेन सम्प्रति छात्रेषु चरित्रहीनता, सांस्कृतिकनैतिक सामाजिकमूल्यानां ह्रासः च दृश्यते। राष्ट्रस्य यादृशी शिक्षा व्यवस्था भवति, तस्य स्थिति उन्नतिश्च तादृश्येव भवति। वर्तमानशिक्षा उदरपूर्तें एकं साधनमेव। ।इति।।

**सन्दर्भग्रन्थसूची-**


१. डॉ. दुर्गावती उपाध्यायः, ''संस्कृत शिक्षा की स्थिति'', प्रकाशनाधिकारी सर्म्पूणानन्द संस्कृत विश्वविद्यालय, वाराणसी-२२१००२

२. डॉ. एल.एन. वर्मा, ''भारतीय समाज में शिक्षा'', राजस्थान हिन्दी ग्रन्थ अकादमी प्लॉट नं. १, झालाना सांस्थानिक क्षेत्र जयपुर-३०२००४

३. डॉ. लोकमान्य मिश्र, भारतीया पुरातनीशिक्षा, मृगाक्षी प्रकाशनम् लखनऊ



शिक्षाशास्त्रविभागः
राष्ट्रि-संस्कृत-संस्थानं
जयपुर परिसरः

# आधुनिक-परमपरागतशिक्षाप्रणाल्योस्तुलना

राजेन्द्रप्रसादरैगरः

अज्ञानतिमिरान्धस्य ज्ञानाञ्जन शलाकया।
चक्षुरून्मिलितं येन तस्मै श्री गुरवे नमः॥

**शिक्षा–**

शिक्षा विषये कथ्यते यत् तादृशी शिक्षा श्रेयस्करी या संस्कृतिम् उत्कर्षञ्च सम्पादयेत्। शिक्षायां ज्ञानम् उचिताचरणं तकनीकीशिक्षा शिक्षणं विद्यागृहणं च समाविष्टमस्ति। शिक्षा मानवस्य अन्तर्निहित क्षमतायाः तस्य व्यक्तित्वस्य च विकसिता प्रक्रिया विर्तते। व्यापकार्थे शिक्षा समाजे सदैव गतिशीला सोद्देश्ययुक्ता सामाजिकप्रक्रिया विर्तते यया मानवस्य जन्मजातशक्तीनां विकासः, तस्य ज्ञाने कौशले वृद्धिः, व्यवहारे च परिवर्तनं क्रियते। संकुचितार्थे शिक्षा समाजे एकस्मिन् निश्चितसमये तथा च निश्चितस्थानेषु सुनियोजित गतिशील सोद्देश्यपूर्ण सामाजिक-प्रक्रिया विद्यते यया छात्रः निश्चित पाठ्यक्रमं पठित्वा अनेकाः परीक्षाः उतीर्णाः कर्तुं शक्नोति।

शिक्षा ज्ञानसम्पन्नत्वस्य चिन्तनशक्तेश्च विकासमपि करोति। ज्ञानेन सह संयम धारणाशक्तिञ्च महत्त्वं ददाति। शिक्षाविषये उक्तं कपिलमुनिना–

**सत्याचार** विचारशिक्षणपरम्परा सर्वाङ्गीकीमुन्नतिं,
**छात्राणां विदद्यद् विवेक** विनयाचार **प्रचारैकधीः।**
चारित्र्योन्नतिसाधिका **गुणगणैः** सारल्यसंसाधिका
**लोकेषु प्रचरेत्** सुशिष्यजनिदा **शिक्षा सदा कामधुक्॥**

एवमेव ज्ञायते यत् शिक्षा सदा कामधुक् भवति। शिक्षा प्रास्त्यर्थं शिक्षणस्य महत्वपूर्ण स्थानं विद्यते। मानवविकासस्येतिहासे शिक्षणस्य महत्वपूर्ण स्थानं विद्यते। इतः शिक्षणप्रक्रिया बालकस्य जन्मतः आरभ्य भवति। पशुमनुष्ययोः मध्ये इदमेव मूलभूतः भेदो विद्यते यत् मनुष्यस्य बालकः असाहाय्यो भवति तदा तं शिक्षणस्य आवश्यकता भवति। बालकस्य प्रथमा शिक्षिका माता भवति। मातुः अङ्के एव बालकस्य शिक्षणं प्रारम्भो भवति।

अनादिकालतः भारतदेशे शिक्षा स्वकीयस्य कृते न अपितु धर्माय आप्नोति स्म। इयं मुक्तेः आत्मबोधस्य च साधनमासीत। जीवनस्य च महत्लक्ष्यं मोक्षः आसीत्। मनुमहाराजः प्राचीनशिक्षा विषयेऽकथयत्–

**एतद्देश प्रसूतस्य सकाशादग्रजन्मनः॥**
**स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां** सर्वमानवाः॥

आदिकालादेव मानवः स्वजीवने मातृद्वारा एव जीवनस्य आवश्यकतानां पूर्त्यर्थं शिक्षणं प्राप्नोति। परिवारस्य रूपरेखा निर्मातुं पितुरपि योगदानं भवति। एवमेव परिवारसदस्यानां सहयोगेन परिवारस्य निर्माणं भवति। कस्यापि जनस्य अभिव्यक्तेः सशक्तसाधनं भाषा भवति तथा भाषा ज्ञानाधीनं ज्ञानञ्च शिक्षणेनेव आगच्छति। एवमेव वक्तुं शक्नुमः यत् यस्य जनस्य भाषाधिकारो भवति स निश्चित रूपेण स्वकीयानां विचाराणां आदानप्रदानम् उत्तमतया कर्तुं पार्यते। शिक्षणस्य मुख्यरूपेण धाराद्वयं अप्राचीनकालं प्रचलितमस्ति–

(१) परम्परागतशिक्षा (Traditional Education)

(२) आधुनिकशिक्षा (Modern Education)

सम्प्रति प्रथमायाः शिक्षायाः प्रयोगः प्राचुर्येण संस्कृतजगत्येव दृश्यते। द्वितीयप्रकारस्य प्रयोगः तु अन्येषु शैक्षिकक्षेत्रेषु पश्यामः। इदानीं विषयानुगुणं परम्परागतशिक्षायाः विचारः नितान्तमपेक्षितोऽस्ति। प्राचीनसमये शिष्यः गुरोः समीपम् उपविश्य विद्यां प्राप्नोतिस्म। अस्माकं ऋषीणां दृष्टौ सेव विद्या या मनुष्यं अज्ञानस्य बन्धनात् मुक्तं कारयेत्। भारतदेशः शिक्षाक्षेत्रे जगद्गुरुः आसीत तथा च विद्यते। यतोहि संसारे सर्वप्रथम सभ्यतायाः, संस्कृतेः शिक्षायाः च अभ्युदयः भारतस्य भूमौ अभवत्। छात्रः पञ्चविंशतिवर्षपर्यन्तं ब्रह्मचर्यस्य पालनं कुर्वन् एव गुरुजनानां सन्निधौ विज्ञान नीति-युद्धकला-वेद-शास्त्राणां च अध्ययनं करोति स्म।

महात्मागान्धिमहोदय उक्तवान्-यत् वर्तमानपरिवेशे समाजस्य आवश्यकतानुसारेणेव बालकं शिक्षां दातव्यम्। यतोहि बालकं यादृशी शिक्षा दास्यति चेत् स तादृशं एव भविष्यति। अधुना देशेऽस्मिन् शिक्षायाः यादृशं स्वरूपं विकसति तादृशं एवं जनानां चरित्रं पतति। सदाचारः आकाशेन न पतति अपितु मानवस्य अन्तःकरणे बाल्यकालेन जायते। अद्यत्वस्य शिक्षा बालकान् जीवनक्षेत्रे ज्ञातुं संबलाधरं न ददाति इति। अध्यापकः अध्यापने तुष्टः नैव विद्यते, छात्रः पठित्वा न तुष्टाः। विश्वविद्यालयः आयोगश्च स्वकीयकार्येण तुष्टं नैव। अपितु सम्पूर्णक्षेत्रे अवहेलना कर्त्तव्यहीनता च दृश्यते।

आधुनिक शिक्षा प्रणाली राष्ट्रम् असौ मार्गे आनीय अपातयत् तत्र केवलम् उदरपूत्यर्थं साधनं एवं दृश्यते इति। वाचो कर्मस्य विचारस्य च शुद्धर्यर्थं शिक्षायाः परमलक्ष्यमस्ति। परन्तु अद्य शिक्षा अधोपतति। विद्यार्थीन् शुद्धविचार-चरित्र नवीन चेतना-नवीन प्रेरणा तथा च दृष्टिकोण दानं शिक्षायाः मुख्य लक्ष्यं भवति।

शिक्षायाः उद्देश्य अनुशासनं, आदरसत्कारस्य भावना नम्रता तथा च चरित्रस्य निर्माणं भवति या मानवस्य सर्वोपरि धनमस्ति। दया, क्षमा, सन्तोष सहानुभूति-आत्मसंयम-परोपकारः स्वदेश भक्तेः च ज्ञानं शिष्येभ्यः अत्यावश्यकं वर्तते।

अन्ते संक्षेपेणं कथयितुं शक्यते यत् सम्पूणदेशे नवोदयविद्यालयानामिव छात्रावासं आवास-पठनव्यवस्था सुनिश्चितं कुर्यात् चेत् प्रतिदिनं रूप्यकाणां पर्यावरणप्रदूषणयं मानहानि-जनहानि-धनहानिं च दूरीकर्तुं शक्यते। उक्तव्यवस्था मूर्तरूपं धारयेत् तथा च कालिदासस्य शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणां वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्-यादृशानि वचनानि पुनः भारतदेशस्य मस्तिष्कस्य शृंगारं भविष्यति इति।

**संदर्भग्रथाः -**

१. डॉ. लोकमान्यमिश्र- भारतीय आधुनिकशिक्षा, मृगाक्षीप्रकाशनम् लखनऊ (उ.प्र.)।

२. रविन्द्र अग्निहोत्री- आधुनिक भारतीय शिक्षा समस्याएँ और समाधान राज. हिन्दी ग्रंथ अकादमी, जयपुर।

३. सुरेश भट्नागर- आधुनिक भारतीय शिक्षा और उसकी समस्याएँ, आर लाल बुक डिपो मेरठ (उ.प्र.)

४. अन्तर्जालमाध्यमेन

**शोधसंधाता**

राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः) जयपुरपरिसरः जयपुरम्

# 'विद्या परां देवता' इति विषये प्राच्यसाहित्यमतम्

ओमप्रकाश वर्मा

वेदेष्वस्माकं निहितं यज्ज्ञानं तस्य ज्ञानस्य प्रकाशनाय लोककल्याणाय च प्राच्यसाहित्यम्। आवैदिककालात् आधुनिककालपर्यन्तं मानवसभ्यतायाः विकासस्य ह्रासस्य च गाथां गायन्ति ग्रन्थाः मानवसभ्यतायाः विकासः तु सर्वदा विद्यायां निर्भरो वर्तते। अतः वक्तुं शक्यते यत् विद्या प्राक्कालादेव मानवजीवनस्य अभिन्नाङ्गं वर्तते। विद्यया एव इदानीं मानव सभ्यता स्वसफलतायाः चरमोत्कर्षे वर्तते। तथापि यादृशं ज्ञानम् अस्माकं वैदिकसाहित्ये समुपलभ्यते, तादृशं ज्ञानं जगतः अन्यसाहित्ये न लक्ष्यते। अतः अस्माकं संस्कृतजगति आर्यसाहित्यमन्यतमं स्थानं भजते।

उपनिषदामनुसारेण द्वे विद्ये परा अपरा च। यया विद्यया लौकिकं ज्ञानं जायते, सा अपरा विद्या। यया च अक्षर - ब्रह्मविषयकं ज्ञानं जायते, सा परा विद्या। लोकेऽस्मिन् विद्या एव सायोतिः या मानवे ज्ञानज्योतिं ज्वालयति, अविद्यान्धतमसं व्यपोहति, दुर्गुणगणं वारयति, सद्गुणततिं कीर्तिं प्रथयति, गौरवं स्थापयति, यशो वितनोति, भूभृत्सु च आदरम् आवहति। एषा मातृवत् संरक्षिका, पितृवत् सत्पथप्रदर्शिका, कान्तावत् सुखदा मनोरञ्जिका च, कीर्तिप्रदा, वैभवदायिनी, दुर्गुणगणनाशेन मनसः पावयित्री च। सर्वमनोरथपूर्णात् सेयं कल्पलतेति परिज्ञायते॥

ज्ञानार्थकाद् विद् धातोः विद्या शब्दः सिध्यति। यस्य कस्यचिदपि वस्तुनः सम्यक्तया ज्ञानं विद्या इति कथ्यते। वेददर्शनसाहित्यविज्ञानादीनां विषयाणां पाठनं सम्यग् ज्ञानं च विद्या इति अभिधीयते।

यद्यपि संसारे बहूनि वस्तूनि सन्ति परन्तु विद्येव सर्वश्रेष्ठं धनमस्ति। अत एव उच्यते विद्याधनं सर्वधनं प्रधानम्। विद्यया एव मनुष्यः स्वकीयं कर्तव्यं जानाति। विद्ययैव मनुष्यः जानाति यत् को धर्मः कोऽधर्मः, किं कर्तव्यम्, किम् अकर्तव्यम्, किं पुण्यं, किं पापम्, किं कृत्वा लाभो भविष्यति केन कार्येण वा हानिः भविष्यति। विद्यया एव मनुष्य मनुष्यः भवति। यः मनुष्यः विद्यया हीनोऽस्ति स कर्तव्याकर्तव्यस्य अज्ञानतः पशुवत् आचरति। अतः एव उच्यते विद्या विहीनः पशु इति। उक्तं च–

**विद्या नाम नरस्य रूपमधिकं प्रच्छन्नं गुप्तं धनं,**
**विद्या योगकरी यशः सुखकरी विद्या गुरूणां गुरुः।**
**विद्या बन्धुजनो विदेशगमने विद्या परा देवता**
**विद्या राजसु पूज्यते न हि धनं विद्या विहीनः पशुः।।**

अर्थात् कथ्यते यत् विद्यया विना मानवः पशुतुल्यं एव मन्यते इति। उक्तं च–

**धनहीनो न हीनश्च धनिकः स सुनिश्चयः।**
**विद्यारत्नेन हीनो सः हीनः सर्ववस्तुषु।।१।।**

विद्याविहीनः पशुः इत्युक्तं भर्तृहरिणा नीतिशतके तद्वदेव ज्ञानं मनुजस्य तृतीय नेत्रं कथितम्। विद्या सर्वेषु धनेषु श्रेष्ठं धनमस्ति यतोहि विद्यैव व्यये कृते वर्धते। अपरं धनं तु व्यये कृते क्षयं प्राप्नोति। अतएव उक्तम्–

**अपूर्वः कोऽपि कोशोऽयं**
**विद्यते तव भारती।**
**व्ययतो वृद्धिमायाति,**
**क्षयमायाति सञ्चयात्।।**

विद्यया एव मनुष्यः सर्वत्र सम्मानं प्राप्नोति, संसारस्य दुःखानि दूरी–करोति। अतः एव सर्वैरपि आलस्यं त्यक्त्वा विद्याध्ययनं अवश्यं कर्त्तव्यम्। उक्तं च– **ऋते ज्ञानान्न मुक्तिः।**

**'सा विद्या या वितुक्तये'** इति आसीत् ऋषिसमयः। **'अविद्यया मृत्युं तीर्त्वा विद्याऽमृतमश्नुते:'** इति खलु वेदघोषः। सा विद्या एव प्रकृष्टा या विद्या मुक्तिं प्रददाति। वेद–शास्त्र–विज्ञानादीनां साध्वनुशीलने तत्त्वार्थज्ञानं च विद्येति स्वीक्रियते।

गीतायामपि भगवता श्रीकृष्णेनैतदेव समर्थ्यते यद् वह्निः समिधो भस्मसात् कुरुते, तथैव ज्ञानाग्निः सर्वकार्याणि विनाशयति। भस्मावशेषं च विधत्ते। उक्तञ्च –

**विद्ययाऽमृतमश्नुते।**
**विद्यया विन्दतेऽमृतम्।**

विद्ययैव तत्त्व ज्ञानाधिगमाद् ब्रह्मरूपस्य अमृत–तत्त्वस्य च साक्षात्कारेण अमृततत्त्वावासिर्ब्रह्मज्ञानम् अमरत्वञ्च। ईश्वरभक्तेः धार्मिकभावनायाश्च विकासः पारम्परिकोद्देश्येषु तृतीयमुद्देश्यं सृष्टं व्यासञ्च। तत्र च श्रुतिः प्रमाणं तद्यथा –

**ईशावास्यमिदं सर्वं यत् किञ्चित् जगत्यां जगत्।**

एवञ्च यदा जगदिदं परमात्मनः व्याप्तम् इति ज्ञायते तदा ब्रह्मविषयके ज्ञाने मनुष्यः निमग्नः भवति। तेन ज्ञानेन प्रभावितः सन् जनेषु ईश्वरविषयकजिज्ञासां जागरयति।

यदा जनेषु ईश्वरविषयकजिज्ञासा ज्ञायते तदा एतेषु स्वतः धार्मिकविद्यायाः भावनायाश्चाङ्कुरं जायते। सुस्पष्टमिदं जायते यत् तदानीन्तनजनसमूहानां जीवनयापनं धार्मिकमर्यादया आबद्धमासीत्। यद्यपि प्राचीनकाले भिन्न – भिन्न धर्मावलम्बिजनाः आसन् तथापि धर्मस्योपरि सर्वेषामाग्रहः आसीदेव। धर्मविषयकपरिभाषा उदारपूर्णासीत्। या वेदे 'ऋतु' नाम्नाभिहिता।

तर्हि विद्या कति विधा ? इति जिज्ञासायां वदति महर्षि याज्ञवल्यक्यः -

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।**

**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशाः॥ इति।**

**सन्दर्भग्रन्थसूची–**

१. ईशावास्योपनिषद

२. याज्ञवल्यक्यस्मृतिः

३. चाणक्यनीतिः

४. नीतिशतकम्

साहू, डॉ. सोमनाथः; (२०१२) 'शिक्षायाः दार्शनिकाधारा' सुशीला प्रकाशन केरला।

शर्मा, डॉ.उमाशङ्कर ऋषि; (२०१२) 'संस्कृत साहित्य का इतिहास' चौखम्बा सुरभारती प्रकाशन वाराणसी २२१००१

मिश्रः, आचार्यः विश्वनाथः; (२००१३) "प्रौढनिबन्धसौरभम्" राष्ट्रियसंस्कृत साहित्य केन्द्र, जयपुर।

रमेशः, प्रो.वाई.एस.; (२०१२) "भारतीयसंस्कृतिः" हंसा–प्रकाशन जयपुरम्।

शोधच्छात्रः, रा.सं.सं.जयपुरपरिसरः,

जयपुरम्

# मानवमूल्याधारिता सम्पूर्णसंस्कृतशिक्षा

हनुमानप्रसादशर्मा

जीवने सफलतायाः प्रमुखाधारः शिक्षायां निहितो वर्तते। शिक्षा एव एतादृशी प्रक्रिया वर्तते, यया मानवं वस्तुतः मानवं कथयितुं शक्यते। श्रेष्ठमानवनिर्माणमिति शिक्षालक्ष्यं संसारस्य प्रत्येकं धर्मः स्वीकरोति। प्रत्येकं सामान्यजनः शिक्षया स्वयम् एकः आदर्शमानव स्यादिति अङ्गीकरोति। सन्दर्भेऽस्मिन् कार्टर वी. गुड महोदयेन कथितं यत्–

**शिक्षा तासां सम्पूर्णक्रियाणां समष्टि वर्तते, यया मानवः स्वस्य योग्यतानाम्, अभिवृत्तीनां, समाजस्य सकारात्मकमूल्यानाञ्च व्यावहारिकप्रतिमानं विकासयति।**

वर्तमाने मूल्यशिक्षण अथवा नैतिकशिक्षा इत्याख्यशिक्षा कुत्राऽपि विद्यालयेषु न दृश्यते। परिणामतः विद्यालयेषु समाज-देशविघटनकारीणि तत्त्वानि निरन्तरं परिवर्धमानानि सन्ति। युवानः मूल्यशिक्षाया अभावाद् विध्वंसात्मकप्रवृत्तौ संलग्नाः दृश्यते। प्रचलित मूल्यरहितशिक्षायाः कारणादेव अस्माकं मूल्यानि क्षणभङ्गुराणि अभवन्।

वर्तमाने अस्माकं शिक्षाप्रणाली एतादृशी स्यात् यया छात्रः नैतिकशिक्षान्वितं मूल्यपरकशिक्षान्वितं वा जीवनं यापयितुं सज्जः स्यात्। एतादृशाः मानवाः निर्मेयाः ये स्वयमेव अस्माकं शाश्वतमूल्यानां परिपालनाय प्रयत्नं कुर्वन्ति। यस्मात् मानवस्य समाजस्य च सुखं समृद्धिश्च स्यात्। वार्तमानिकशिक्षायाः दोषं स्वीकुर्वन् शिक्षायोगः (१९६४-६६) स्वप्रतिवेदने कथितम्–

"विद्यालयकार्यक्रमे एकः गभीरदोषो वर्तते। तस्याः पदे-पदे मूल्यशिक्षणं दृश्यते। संस्कृत भाषायाः अनेकं ग्रन्थाः सन्ति। यथा– वेदाः, उपनिषदानि, पुराणानि, ब्राह्मणग्रन्थाः, श्रीमद्भगवद्गीता, रामायणम्, पञ्चतन्त्रम् इत्यादयः।

**निन्दन्तु नीतिनिपुणाा यदि वा स्तुवन्तु**
**लक्ष्मी समाविशतु गच्छतु वा यथेष्टम्।**
**अद्यैव वा मरणमस्तु युगान्तरे वा**
**न्याय्यात् पथः प्रविचलन्ति पदं न धीराः।।**
**जयन्ति ते महाभागा जन-सेवा-परायणाः।**
**जरामृत्युभयं नास्ति येषां कीर्तितनोः क्वचित्।।**
**इष्टो यथात्मनो देहः, सर्वेषां प्राणिनां तथा।**
**एवं ज्ञात्वा सदा कार्या, दया सर्वासुधारिणाम्।।**

**अचेष्टा सर्वभूतानां भैत्रः करुणाः एव च।**
**निर्ममो निरहंकारा समदुःख सुखः क्षयो।।**
**सहनाभवतु सहनो भुनक्तु सहवीर्यं करवावहै।**
**तेजस्वीनावधीतमस्तु माविद्विषामहै।।**
**सर्वेभवन्तु सुखिनः सर्वे सन्तु निरामया।**
**सर्वेभद्राणि पश्यन्तु मा कश्चिद् दुःख भाग्भवेत।।**
**असतो मा सद्गमय**
**तमसो मा ज्योतिर्गमय**
**मृत्योर्मा अमृतम् गमय।।**

ऋग्वेदेऽपि मूल्यशिक्षायाः संवर्धने अनेकानि मन्त्राणि सन्ति। यथा–

**सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे संजनाना उपासते**
**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रममि मन्त्रये वः समानेन वो हविषा जुहोमि**
**समानी न आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मतो यथा वः सुसहासति।**

ऋग्वेद, १०.१०१.२,३,४

'न हि मानुषात् श्रेष्ठतरं हि किञ्चित्' इति दृष्ट्या अस्माभिः श्रेष्ठमानवनिर्माणाय सततं प्रयासः करणीय।

शोधच्छात्रः
शिक्षाविभागः, रा.सं.सं., जयपुरपरिसरः, जयपुरम्

# शिक्षक : बालमनोविज्ञानस्य ज्ञानादेव सम्यक्पथप्रदर्शकः

डॉ. बद्रीनारायणशर्मा

बाल्यावस्था मानवजीवनस्य मूलाधारो (foundation) वर्तते। यथा मूलाधारः, तथैव मानवजीवनं भवितुमर्हति। सन्दर्भेऽस्मिन् कथितं यत् "Child is the father of man." बाल्यावस्थायां बालकेन परिवारजनेभ्यः, मातृ-पितृभ्यां, शिक्षकेभ्यश्च यत् किञ्चिदपि अधिगम्यते, तत्तस्य जीवने स्थायित्वेन द्रक्ष्यते। फ्रायडमनोवैज्ञानिकेन मन्यते स्म यद् बालको भाविजीवने कीदृशो भविष्यति, तस्य निर्धारणं ४-५ वर्षीयावस्थायामेव सञ्जायते।

बालकस्य कृते शिक्षकस्य सर्वोत्कृष्टं स्थानमिति सर्वैरङ्गीक्रियते। शिक्षक एव एतादृशी शक्तिर्वर्तते, या प्रत्यक्षतोऽप्रत्यक्षतो वा भाविसन्ततिषु स्वात्मनः प्रभावः स्थापयति। वस्तुतः 'शिक्षकः राष्ट्रस्य भाग्यनिर्माता' इति कथने अतिशयोक्तिर्न दृश्यते। यथा दीपः स्वयं प्रज्वलति तथा च अन्यान् सहस्रदीपानपि स्वस्पर्शमात्रेण प्रकाशयति तथैव सद्गुरुः स्वयं ज्ञानज्योतिर्मयं भूत्वा अन्यान् शिष्यान् प्रकाशयति।

मानवरूपे शिक्षकः तथा व्यवसायरूपे शिक्षणकार्यञ्चेति द्वयं विश्वेऽस्मिन् श्रेष्ठं मन्यते। शिक्षाक्षेत्रे शिक्षकस्य महत्त्वं प्रतिपादयन् श्री एस. बालकृष्णजोशीमहाभागेनोक्तम्-

"एक आदर्शशिक्षको धनाभावादपि धनी, तस्य धनं द्रव्यं न, अपितु छात्रेषु प्रेम्णा यत् किञ्चिदपि ज्ञानं शिक्षकेन स्थापितं, तदेव तस्य वस्तुतः धनम्। स एव यथार्थतः सम्राट्, तस्य राज्यं शिष्याणां ज्ञानक्षेत्रञ्च मन्यते।[१]

शिक्षाक्षेत्रे प्रामुख्येन त्रयः स्तम्भाः-

१. शिक्षकः २. शिक्षार्थी ३. शिक्षा च

एतेषु त्रिषु स्तम्भेषु शिक्षाव्यवस्थाविद्यालयभवनं स्थितम्। एतेषां त्रयाणां परस्परं सामञ्जस्येन समाजस्योन्नतिं विकासञ्च भवितुमर्हति। परन्तु एतेषु त्रयेषु प्रमुखस्तम्भः - शिक्षक इति। विद्यादानप्रभावादेन गुरु देवेभ्यो गरीयः। उक्तञ्च-

**सर्वरूपो हि भगवान्परमात्मा स्वयं गुरुः।[२]**

गुरुः अज्ञानान्धकाराच्छन्नं प्राणिनं स्वात्मनः ज्ञानदीपनेत्रेण सर्वाणि वस्तूनि दर्शयति। यथा-

**अज्ञानतिमिराच्छन्नं ज्ञानदीपेन चक्षुषा।**
**यः सर्वार्थं दर्शयति तत्परो नैव बान्धवः।।[३]**
**सर्वं जयति सर्वत्र विद्यया गुरुदत्तया।**
**तस्मात्पूज्यो हि जगति को वा बन्धुस्ततोऽधिकः।।[४]**

सन्दर्भेऽस्मिन् ख्यातिलब्धः दार्शनिकः ह्वाईटहेडमहाभागः कथितवान् यत् "Everything Depends upon the teacher."[5]

गुरोर्महत्तां प्रतिपादयता हेनरीएडम्स महाभागेन कथितं यत्–

"A Teacher affects eternity : It can never tell where his influence stop."

शिक्षा आयोगोऽपि स्वप्रतिवेदनस्य प्रथमपङ्क्तौ शिक्षकं प्रति स्वाभिव्यक्तिं प्रकटयति–

''भारतवर्षस्य भाग्यः तेषां कक्षासु निर्मितो भवति। वस्तुनः कस्यचिद् देशस्य भविष्यः, विभिन्नराष्ट्रेषु तस्य देशस्य स्थानं मानवसेवायां तैः प्रदत्तं योगदानञ्चेति सर्वे तेषां गुणवत्तायामाधारिता भवन्ति, ये देशस्य शिक्षणसंस्थासु शिक्षणकार्यं कुर्वन्ति।''[६]

निष्कर्षतः यदा शिक्षक एव देशस्य भविष्यः, तदा तु स वार्तमानिक्यावश्यकतानुसारेण ज्ञान-विज्ञान-तकनीकी इत्यादिक्षेत्रे निपुणः कुशलो वा भवेत्।

राष्ट्रीयशिक्षानीत्यां (१९८६) स्पष्टतयोल्लेखो वर्तते यत् ''शिक्षकं विना कोऽपि देशः, समाजः, शिक्षातन्त्रञ्चोन्नतिमधिगन्तुं न शक्नुवन्ति। परन्तु अधुना यया तीव्रगत्या ज्ञान-विज्ञानयोः तकनीकीक्षेत्रे च यावती वृद्धिर्जाता। तदनुसारेण मानवाभियन्ता शिक्षकोऽपि आधुनिकविषयाणां ज्ञाता भवेत्। शैक्षिकजगति नूतनपरिवर्तमानानां ज्ञानमपि संस्कृतशिक्षकाणाम् अन्यविषयशिक्षकाणां वा कृते अपेक्षितम्।[७]

एतद्दृष्ट्या शिक्षकचयनस्य मानदण्डोऽनिवार्यः करणीयः–

१. शिक्षणकार्यं प्रति अभिरुचिः।
२. शिक्षणकार्यं प्रति अभिक्षमता।
३. नूतनपरिवर्तनानां सामान्यज्ञानम्।
४. समायोजनात्मकप्रवृत्तिः।
५. विषयसम्बन्धिनं पूर्णज्ञानम्।
६. नूतनविधि-प्रविधीनां ज्ञानम्।
७. सरलजीवनयापनम्।
८. सुहृदभावः।
९. प्रभाविव्यक्तित्वम्।
१०. निष्पक्षदृष्टिः।
११. नवाचारप्रयोगस्य नैपुण्यम्।
१२. अध्ययनशीलता।
१३. मृदुव्यवहारः।
१४. सदाचारिता।

१५. कर्तव्यनिष्ठा।

१६. आदर्शचरित्रः।

१७. उत्तमस्वास्थ्यः।

१८. उत्तरदायित्वभावना च।

"राष्ट्रस्य भविष्यं दृष्ट्वा सर्वे शिक्षकाः स्वात्मानं धन्यं मन्यमानाः शिक्षणकार्यं कुर्युः। तेषां शिक्षणप्रभावशीलतानामपि परीक्षणमनिवार्यं भवेत्।"[८]

प्रभावशीलतायाः परीक्षणानन्तरं तेषामभिक्षमता अपि विचारणीया। विषयेऽस्मिन् रायन्स (Ryans) महोदयः शिक्षकाणां गुणान् विवेचयन् कथितवान् यत्–

"Good teachers those who are skillful in developing understanding of the ways of the world in which man lives, insightful with respect to the ways and means of stimulating intellectual oppetites and capable of patience, understanding and sincere feeling for others – may pave the way for enlightened and productive society. Poor teaching contrariwise, would seem to be a significant contributor of its unfortunate share to the perpetuation of ignorance misunderstanding and intellectual and cultural stagnation.[9]

वस्तुतः अधुना स्वस्थाः, बुद्धिमन्तः, चरित्रवन्तः नागरिकाः स्युरित्यस्माकं देशे अस्य परमावश्यकता। "वार्तमानिकशिक्षकः निरङ्कुशः शासको नाऽस्ति, अपितु स तु वस्तुतः कलाकारः शिल्पकारो वा, यः स्वहस्तेन बालकानां जीवनं साफल्यं कर्तुं सदैव प्रयतति। तदैव स बालकानां यथार्थतः पथप्रदर्शको भविष्यति।"

**सन्दर्भः–**

१. बैस, एच.एस., शिक्षा की रूपरेखा, पृ.सं. ५०

२. ब्रह्मवैवर्तपुराणम् (तृतीयं गणपतिखण्डम्) ३/४४/७१

३. तत्रैव, ३/४४/६४

४. तत्रैव, ३/४४/६५

५. www.braingquote.com

६. edusanchar.com

७. shodhganga.inflibnet.ac.in

८. पटेल, एम.एस., द एजुकेशनल फिलॉसफी

९. रायन्स, ब्राउप एजुकेशन सोशियालॉजी

शोधच्छात्रः

# वर्तमानकाले श्रुतिस्मृतिपरकधर्मस्य स्वरूपम्

डॉ. कृष्णा शर्मा

संपूर्णवाङ्मयस्य परमोद्देश्यं धर्मसंस्थापनमेव प्रतिभाति। आचारेषु व्यवहारेषु च पवित्रता, सत्यता च धर्मेणैव संभवति। सम्पूर्णस्य जगतः धर्ता धर्म एव कथ्यते। कालानुसारं सूर्यचन्द्रनक्षत्रादयः षड् ऋतवः अन्यानि च प्रकृतेः रूपाणि धर्मेणैव निष्पद्यन्ते। अतएव एतानि प्रकृति धर्माणि कथ्यन्ते। यदा एतेषु प्रकृतिकर्मसु विकृतिर्भवति तदा प्रजायामशान्ति-रोग-दुर्भिक्षादयः व्युत्पद्यन्ते। ये चाधर्मस्य वृद्धेः द्योतकास्सन्ति। अस्य जगतः अणु-परमाण्वादिषु धर्मः व्याप्तः। जगति समुपलब्धपदार्थे कोऽपि धर्मरहितः न दृश्यते। स्वरुपस्य रक्षायै पदार्थैः धृतं धारणमेव धर्मः। धृतो धर्म एव पदार्थान् रक्षति। ऋग्वेदे उक्तञ्च-

**धर्मो रक्षति रक्षितः धारणाद् धर्ममित्याहु।**
**धर्मो विश्वस्य जगतः प्रतिष्ठा अतो धर्माणि धारयन्।।**

प्राणिना कल्याणाभ्युदयाभ्यां धर्मस्योपदेशः तस्य प्रवर्तनं वाऽभूत्, ईदृशी शास्त्राणां मान्यताऽस्ति। धर्मस्य मर्मज्ञानां कथनमस्ति यत् धर्मः सर्वजनान् धारयति पोषयति च। अस्योपदेशः प्राणिनां हिंसानिषेधायाभवत्। अतः अहिंसा एव धर्मः कथ्यते। धर्मशब्दः शक्ति-गुण-स्वरूप-स्वभावानां वाचकः। यश्च सर्वपदार्थेषु विद्यमानः भवति यथा - अग्नौ उष्णतारूपे, जले शीतलतारूपे, अक्ष्णि दृष्टिरूपे। सृष्ट्यामस्यां सर्वश्रेष्ठः जीवोऽस्ति, जीवेषु बुद्धिजीवाः, बुद्धिजीवेषु च मनुष्याः। अतएव सृष्ट्यां सर्वत्र मनुष्याधारितधर्मस्यैव चर्चा विहिता। मनुष्यः जन्मतः मृत्युपर्यन्तं सांसारिकप्रपञ्चेषु सन्निहितोऽस्ति। एतेषु प्रपञ्चेषु जागृतावस्थायामपि सुषुप्तोऽस्ति संसारेऽस्मिन् मानवः। अतः परमलक्ष्यप्राप्त्यर्थं श्रुतिस्मृतिविहितधर्माणां पालनमावश्यकम् एवं अस्माभिः आध्यात्मिकदृष्टिं प्राप्य मानवजीवनफलसिद्धिहेतुः पुरुषार्थचतुष्टयं प्राप्तव्यम्।

धर्मशास्त्रे वर्णाश्रमधर्मस्वरूपे व्यवस्थितजीवनचर्या विहिता। यदि प्रचलितकालक्रमानुसारेण जनैः स्वधर्मं पालयेत् तदा अवश्यमेव पुरुषार्थानां प्राप्तिः संभवति। एतेषु पुरुषार्थेषु मुख्यरूपेण धर्मस्य महती आवश्यकता वर्तते। येन धर्मः लभ्यते तेन सर्वे पुरुषार्थाः लभ्यन्ते। अतः प्रयत्नपूर्वकं धर्मः रक्षितव्यः। मनुनापि उक्तं यत् -

**धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।**
**तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत्।।** ८/१५

अर्थात् विनष्टधर्मेण स्वयं हतः तथा रक्षितधर्मेण स्वयं रक्षितः। अस्मात् कारणात् सदैव धर्मस्य रक्षणं कुर्यात्। यतोहि धर्मरक्षया एव भुवि सर्वेषां प्राणीनां रक्षणं सम्भवं नान्यथा। धर्मस्वरूपज्ञानार्थं दशलक्षणकधर्मस्य परिभाषा मनुनोक्तं यत् -

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।६/९२**

ये विप्रा एतानि दशविधधर्मस्वरूपाणि पठन्ति, पठित्वा चात्यज्ञानसाचिव्येनानुतिष्ठन्ते, ब्रह्मज्ञानसमुत्कर्षात्परमां गतिं मोक्षलक्षणां प्राप्नुवन्ति। एतादृशैः जनैः दशलक्षणकधर्मलक्षणानि धारयित्वा जगति व्यवह्रियन्ते। आचारस्य पालनम्, व्यवहारस्य दर्शनम्, प्रायश्चित्तेन तपः कृत्वा स्वजीवनं कृतपरिष्कृतं धर्मपथे प्रवर्तन्ते। एवं प्रकारेण धर्मनिष्ठं भूत्वा जीवनयात्रां चरेयुः तदा धर्मरूपमित्रस्य सामीप्यं सदैव अनुभवन्ति इहलोके परलोके च। मनुनोक्तं यत् –

**एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।**
**शरीरेण समं नाशं सर्वमन्यद्धि गच्छति।।८/१७**

अर्थात् यः निधनेऽप्यनुयाति स एक एव सुहृद् धर्मोऽस्ति। अन्यत् सर्वं शरीरेण समं हि नाशं गच्छति। अतः कदापि अधर्मपथं नाचरेत्, अधर्मफलेन सर्वं नश्यति। न निष्फलमधर्मं, तेन मूलं नश्यते। उक्तं यत् –

**यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु।**
**न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः।।४/१७३**

यदि स्वयं कर्तृदहनादिनाशं फलं न जनयति तदा तत्पुत्रेषु नोचेत्पौत्रेषु जनयति कदापि तु निष्फलम् एव भवति। यतोहि कर्मफलं न नश्यति यथोक्तम् –

**नाधर्मश्चरितो लोके सद्यः फलति गौरिव।**
**शनैरावर्तमानस्तु कर्तुर्मूलानि कन्तति।।४/१७२**

अर्थात् शुभाशुभकर्मणां फलं यदि तत्कालरूपेण न फलति तदा अधर्मेण शनैः शनैः कर्तु मूलानि कृन्तति। यथा गौः भूमिश्च शीघ्रफलप्रदाने सक्षमे न स्तः, शनैः शनैः कालपरिपक्वानन्तरं फलं प्रदत्तः। तथैव कृताधर्मस्य फलमपि शीघ्रमथवा कालान्तरे कालपक्वं भूत्वा शनैः शनैः अवश्यमेव प्राप्यते। अतः अधर्मेण मूलं छिद्यते, मूलच्छेदेन सर्वनाशो लक्ष्यते।

सर्वप्रथमं प्रश्नः उपस्थितोऽस्ति यत् अस्मिन् कलियुगे श्रुतिस्मृतिविहितधर्माणां पालनं कथं करणीयम्? अतः अस्य प्रश्नस्य सन्दर्भे एतत् ज्ञानमावश्यकं यत् देशकालपरिस्थित्यनुसारं धर्मः रक्षणीयः। चतुर्युगाः स्ववैशिष्ट्यनुसारं भिन्नाः सन्ति। तेषु प्रथमे सत्ययुगे धर्मस्वरूपे प्रगाढ़ताऽऽसीत्। जनाः स्वजीवनस्य दैनिकक्रियां, प्रायश्चित्तं च धर्मानुसारमेव संपादितं कुर्वन्ति स्म। सतयुगस्यापरनाम कृतयुगमस्ति। युगेऽस्मिन् प्रत्येकं कार्यं पूर्णमेव भवति स्म अतः कृतयुगमुच्यते। महाभारते उक्तं च – "कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे।" श्वेत–पीत–लोहित–कृष्ण एते क्रमशः चतुर्युगानां वर्णाः उक्ताः। धर्मः वृषरूपेण कृतयुगे पादेषु स्थित आसीत्, मनुनोक्तं च –

**वृषो हि भगवान्धर्मस्तस्य यः कुरुतेह्यलम्।**
**वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत्।।८/१६**

अनन्तरं प्रतियुगे पादस्यैकस्य क्षयेन अस्मिन् कलियुगे केवलं चतुर्थपाद एवावशिष्टः। पादत्रयम् अधर्मे समाविष्टं जातम्। कृतयुगस्य धर्मस्य चतुर्थभागः एव अवशिष्टः कलियुगे। यथा मनुना निगदितम्-

**अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।**
**अन्ये कलियुगे नृणाम् युगह्रासानुरूपतः।।**
**तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।**
**द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे।।१/८५-८६**

ऐतरेयब्राह्मणे वर्णितं यत् -

**कलि शयानो भवति संजिहानस्तु द्वापरः।**
**उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन्।।**

अतः कृतयुगे तपसः, त्रेतायां दार्शनिकज्ञानस्य, द्वापरे यज्ञानां, कलियुगे च केवलं दानस्यैव महिमाऽस्ति। मनुष्यः शयानः कलि, उत्थानसन्नद्धसमये द्वापरः, उत्थाय त्रेता तथा च यदा भ्रमणं करोति तदा कृत भवति। शयनसमये धर्मं प्रति जागरूकता आवश्यकम्। अतएव स्व-स्वकर्त्तव्यानां निष्ठापूर्वकपालनमावश्यकम्। यथा - बालकानां मुख्यकर्त्तव्यं पठनपाठनमस्ति, तेषां धर्मपालनं पठनपाठने निहितमस्ति। एवमेव सर्वेषां जनानां स्वकर्त्तव्यपालनमेव स्वधर्मपालनं वर्तते। देशकालपरिस्थित्यनुसारं धर्मस्य परिवर्तनं संभवति। कर्त्तव्यपालनमपि देशकालपरिस्थित्यनुसारं भाव्यते। परन्तु स्वकर्त्तव्यात् पलायनमधर्मः उच्यते। अतः प्रयत्नपूर्वकं स्वधर्मपालनं कर्त्तव्यम्।

प्राचीनकालादेव धर्मविषयोपरि विविधानां संगोष्ठीनामायोजनं प्रचलति स्म। कालगत्यनुसारं वारं-वारं अस्मिन् विषये चर्चा भवति भविष्यति च। यदा यदा धर्मसभानाम् आयोजनम् अभवत् तदा तदा धर्मविषयोपस्थापनमपिकालानुसारम् अभवत्। परन्तु धर्मस्वरूपपरिवर्तनस्य कारणं किम्? अस्य कारणमस्ति प्रचलितकालक्रमे सामाजिकव्यवस्थायां, आर्थिकव्यवस्थायां, राजनैतिकव्यवस्थायां परिवर्तनम्। अस्मात् कारणात् धर्मस्वरूपेऽपि परिवर्तनं जातम्। परन्तु धर्मस्य मूलस्वरूपं नित्यं शाश्वतञ्च भवति। अर्थात् आधुनिकयुगे धर्मविषयककर्मसु प्रवर्तमानानां जनानां कर्मरूपं परिवर्तनं सम्भवति न तु धर्मस्य मूलस्वरूपम्। मनुनापि उक्तं यत् -

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।१/६**

तथा वैशेषिकदर्शनेऽपि उक्तं यत् -

**"यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्मः।।१/१/२**

अर्थात् येन कर्मणा निश्रेयसः सिद्धिर्भवति अर्थात् मोक्षप्राप्तिर्भवति स धर्मोऽस्ति। धर्मपालने आचारस्य महती प्रधानता वर्तते। उक्तं च –

**आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।**

तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः।। १/१८

आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।

**आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत्।।१/१०९**

अर्थात् श्रुतियुक्तः स्मार्तकर्मस्वरूप आचारः परमो धर्मोऽस्ति मानवानाम्। तस्मात् कारणात् आचरणेन आत्मवान् द्विजः सदा नित्ययुक्तो भवेत्।

संक्षिप्तरूपेण कथ्यते यत् धर्मशास्त्रस्य विषयस्तु मानवस्य कर्त्तव्याकर्त्तव्यविवेचनमस्ति येन मानवः इहलौकिकं पारलौकिकं च सुखं प्राप्नोति।

**दाराः पुत्रः धनं वा परिजनसहितो बन्धुवर्गः प्रियो वा,**

**माता भ्राता पिता वा श्वसुरकुलजनाभृत्य ऐश्वर्यविन्ते।**

**विद्यारूपं विमलभवनं यौवनं यौवतं वा,**

**सर्वं व्यर्थं मरणसमये धर्म एकः सहायः।।**

सहायकाचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
जयपुरपरिसरः, जयपुरम्

# अधिगमान्तरणं शिक्षा च

चरनसिंहः

**अधिगमान्तरणस्य अर्थः-**

अधिगमस्य अन्तरणविषये शिक्षाशब्दकोषे कथितमस्ति-"प्रत्यक्षप्रशिक्षणं विना निश्चित्तेऽधिगमे विकासः, वृद्धिः संशोधनम्, कस्याः अपि क्रियायाः अभ्यासेन सम्बन्धितक्रियायाः आदान-प्रदाने संशोधनमेव अधिगमस्य रूपान्तरणमस्ति।" अस्यार्थोऽयमस्ति यत् अतधिगतक्रियायाः अन्यसमानपरिस्थितिषु उपयोगकरणमेव अधिगमान्तरणं कथ्यते।

**अधिगमान्तरणस्य परिभाषाः-**

अधिगमान्तरणं शिक्षामनोविज्ञानस्य महत्वपूर्णः अंशोऽस्ति यदि कथयामः यत् शिक्षामनोविज्ञानेऽधिगमान्तरणं कुत्रचित् तु अवश्यमेव प्रत्यक्षपरोक्षरुपेण विद्यते। एतस्य स्पष्टीकरणम् अधोलिखितपरिभाषादिभिः सन्ति-

**सोरेन्सन**महोदयानुसारम्-"अधिगमान्तरेण मनुष्यः तत् सीमापर्यन्तं अधिगच्छति यावत् एकपरिस्थित्या प्राप्ताः योग्यताः द्वितीयपरिस्थितौ साहाय्यं कुर्वन्ति।"

**कॉलसनिक**महोदयानुसारम्-"अधिगमान्तरणं प्रथमपरिस्थित्याः प्राप्तज्ञानस्य नैपुण्यस्य, स्वभावस्य, अभियोग्यतायाः द्वितीयपरिस्थितौ प्रयोगकरणमेव।"

**शैक्षिकानुसन्धानविश्वकोशः**- "अधिगमशब्दः विशिष्टविधेः अन्तरणरूपेण निवेशितो भवति। यत्र अधिगमस्य तथा परीक्षणस्य दशासु बहुसामञ्जस्यं भवति।'

**क्रो**महोदयानुसारम्-"यदा अधिगमस्य एतस्मिन् क्षेत्रे प्राप्तानां विचाराणाम् अनुभवस्य कार्यस्य स्वभावस्य ज्ञानस्य नैपुण्यस्य वा अन्यपरिस्थितौ प्रयोगः क्रियते तर्हि सः अधिगमान्तरणं कथयते।"

**अधिगमान्तरणं शिक्षा च-**

अन्तरणं शिक्षायामधिगमस्य प्राणोऽस्ति। अध्यापकस्योद्देश्यम् इदमेव भवति यत् तस्य शिष्याः जीवने प्रत्येकं परिस्थितेः समाधानं कर्तुं समर्थाः स्युः। अतएव शिक्षायामन्तरणस्य महत्वं वर्तते। तन्महत्वं वर्णयितुं शक्नुमः:-

(i) यदि अध्यापकः छात्रेभ्यः विद्यालये कक्षायां वा जीवनस्य समस्यानां वस्तुस्थितेश्च ज्ञानं पृच्छेत् तर्हिव्यावहारिकजीवने ते स्वसमस्यानां समाधानं करिष्यन्ति। अध्यापकस्य कर्तव्यमस्ति यत् सः क्रियायाः अधिगमं तादृशरीत्या प्रस्तुयात् यः छात्राणां कृते काल्पनिकः न स्यात्। समस्यानां समाधाने विशिष्टं बलं दातव्यम्।

(ii) पाठ्यक्रमनिर्माणसमये छात्राणां शारीरिकमानसिक स्वास्थ्यस्य उपरि अवश्यमेवावधानं दातव्यम्। बालकस्य वातावरणस्य पारिवारिकपृष्ठभूमेरपि अवधानं मस्तिष्के स्थापनीयम्।

(iii) अध्यापकः कस्यचित् विशिष्टविषयस्य साम्यानि छात्राणां समक्षं स्पष्टीकुर्यात्। इदमपि स्पष्टीकुर्यात् यत् अन्येषु केषु-केषु विषयेषु तद्विषयस्य लाभार्जनं कर्तुं शक्यते।

(iv) शिक्षणे साहचर्यस्य नियमानां संवेगात्मकविकासस्य चावधानम् अवश्यमेव धारणीयम्।

(v) शिक्षणविधयः तादृशाः स्युः, यैः सामान्यीकरणस्यावसराः अधिकतया प्राप्ताः स्युः।

(vi) अध्यापकः छात्रेभ्यः तादृशीं शिक्षां यच्छेत् यथा तेषां भविष्यस्य निर्माणं भवेत्। यथा- चिकित्साक्षेत्रे कार्यकरणस्येच्छुकस्य छात्रस्य कृते जीवविज्ञानस्य रसायनविज्ञानस्य च शिक्षा दातव्या।

(vii) मर्सेलमहोदयानुसारम्- शिक्षायाः अन्तरणं प्रति अस्माकमभिवृत्याध्ययनं प्रति अस्माकमभिवृत्तेः निश्चयो भवति।

(viii) विद्यालयस्य संचालकाः निश्चिनुयुः यत् विद्यालयस्यान्तः बहिश्च केषां मूल्यानाम् आदर्शाणाञ्च प्राप्तिः करणीया। तत्पश्चात् इयं योजना निर्मितव्या यत् उद्देश्यानां पूर्तये कानि-कानि ज्ञानानि कौशलानि च आवश्यकानि सन्ति।

अन्ते वयं शिक्षायामन्तरणस्य मैकगियोमहोदयानुसारं महत्वमेवम्प्रकारेण स्वीकुर्मः-'जटिलानाम् मूर्तानाम् अर्थपूर्णानाञ्च पाठ्यवस्तूनाम् अधिगमनम्, प्रत्ययैः समस्यानां समाधानं प्रायः अन्तरणस्य कार्याणि सन्ति। यत्र मनुष्यः समस्यायाः आधारभूतसम्बन्धानां गूढतां पश्यति यत्र वा सः तासामन्तर्दृष्टिः प्राप्यते, तत्रान्तरणं योदानार्थं एका बृहत् परिस्थितिः भवति।

**सन्दर्भग्रन्थानुसूची-**

१. पाठक, पी.डी. - शिक्षा मनोविज्ञान, विनोद पुस्तक मन्दिर, आगरा, २००९
२. सिंहः, फतेह - शिक्षामनोविज्ञानम्, आदित्य प्रकाशनम्-जयपुरम्, २०१३
३. मंगलः, एस.के. - शिक्षा मनोविज्ञान, PHI Learning Private Limited Delhi, 2016

शोधार्थी
रा.सं.संस्थानम्, जयपुरम्

# शिक्षाशास्त्रं व्यावसायिकदक्षता च

## ( संस्कृतशिक्षायाः सन्दर्भे )

प्रो. सन्तोषमित्तलः

वर्तमानप्राविधिकीयुगे वैश्वीकरणस्य प्रारम्भो जातः अतः अधुना अस्माकं चिन्तनमपि वैश्विकस्तरे स्यात् इदं शिक्षाशास्त्रिणः अपि स्वीकुर्वन्ति। अद्य शिक्षायाः मुख्यमुद्देश्यं मोक्षप्राप्तिकरणस्थाने मानवेषु आत्मनिर्भरतासम्पादनम् अस्ति, यया मानवाः समाजस्य कृते भाररूपाः न भवेयुः उन्नतिपथं स्पृशेयुः परिणामतः समाजोऽपि उन्नतिपथे गमिष्यति। डॉ. सर्वपल्लीराधाकृष्णन्महाभागेनोक्तम्- ''शिक्षा सूचनाप्रदानात् तथाच कौशलानां प्रशिक्षणप्रदानात्पर्यन्तं सीमिता नास्ति, अपितु सा मानवाय मूल्यानां विचारोऽपि प्रददाति। येन सः स्वसामाजिकोत्तरदायित्वमपि सहजभावेन वोढुं शक्नोति 2004 तमे वर्षे यदा असमबिहारराज्ययोः व्यवसायसमस्यां स्वीकृत्य गृहसंघर्षः सञ्जातः तदा भूतपूर्वप्रधानमन्त्री श्रीमान् अटलबिहारीवाजपेयीमहोदयः जनसमाजम् उद्बोधयन् उक्तवान् यत् सर्वकारीयव्यवसायानां कृते किमर्थं कोलाहलः? व्यवसायाः न सन्तीति, शिक्षां प्राप्य स्वीयसमस्यां स्वयं दूरीकुर्वन्तु। स्वयमेव व्यवसायानां सर्जनं कुर्वन्तु। अद्यापि सर्वकारेण स्वयमेव व्यवसायानां सर्जनस्य आवश्यकता अनुभूयते। कुशल भारतम् (Skill India) Start Up अनेन विचारेण सह वर्तमानप्रधानमन्त्रिनरेन्द्रमोदीमहोदयस्य अपि चिन्तनम् इदमेव वर्तते। प्राचीनकाले चतुर्णां पुरूषार्थानां सम्पादनमेव शिक्षायाः - उद्देश्यमासीत् अनेन एव बालकानां सर्वांगीणविकासो भवति स्म यथोक्तम्-

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिं च साधु काव्य निषेवणम्।।**[1]

'सा विद्या या विमुक्तये'[2] इति आसीत् ऋषिसमयः। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[3] इति खलु वेदघोषः। सा विद्या एव प्रकृष्टा या विद्या मुक्तिं प्रददाति। किन्तु वर्तमानपरिस्थितिषु मोक्षस्य कल्पना अपि दुष्करा अतः 'सा विद्या या नियुक्तये' इदमेव वाक्यम् उपयुक्तम्।

शुक्रनीतिसारेऽपि[4] नृपस्य कार्यम् उल्लिखितमस्ति-

**सर्वविद्याकलाभ्यासे शिक्षयेद् भृतिपोषितान्।**
**समाप्तविद्यं तं दृष्ट्वा कार्ये तं विनिवेशयेत्॥**

शिक्षां प्राप्य ये तस्याः प्रयोगे सफलाः भवन्ति, सदाचरणं कुर्वन्ति ते एव सारल्येन व्यवसायं प्राप्नुवन्ति, यथोक्तम्-

**शास्त्राण्याधीत्यापि भवन्ति मूर्खाः यस्तु क्रियावान् पुरूषः स विद्वान्।**
**सुचिन्त्यमप्यौषधमातुराणां न नाममात्रेण करोत्यरोगम्।।**[5]

यदि संस्कृताध्ययनार्थं समुचितः अवकाशः न कल्प्येत तर्हि अस्माकं सांस्कृतिकधारा शुष्का भविष्यति। संस्कृताध्ययनं विना भारतीयदर्शनानाम् आन्तर्ये प्रवेशः सर्वथा असम्भवः। यतः संस्कृतं भारतीयसांस्कृतिकसम्पत्तेः अभिन्नमङ्गं, तस्याः सम्पत्तेः श्रेष्ठा. कुञ्चिका चापि। स्वतन्त्रभारतस्य प्रथमप्रधानमन्त्रिणा **पं. जवाहरलालनेहरूवर्येण** अपि संस्कृतस्य महत्त्वम् अङ्गीकृतम् आसीत्। तेनोक्तम् यत् ''भारतीया पैतृकी सम्पत्तिः का इति, यदि कोऽपि मां पृच्छेत् तर्हि अहम् अविलम्बेन वदामि यत् संस्कृतं संस्कृतवाङ्मयश्चेति।''

संस्कृतं केवलम् एका भाषा एव नास्ति। भारतस्य मनीषा अनया एव देववाण्या विकसिताऽभवत् एवञ्च अद्य सा अस्या एव वाण्याः अंके विश्राम्यति। अस्याः विशालवाङ्मये विश्वस्य प्राचीनसाहित्यं विज्ञानञ्च राराजते अन्ताराष्ट्रियस्तरेऽपि एतस्याः भाषायाः सुमहान् प्रभावः परिदृश्यते।

संस्कृताध्ययनम् अनेकव्यवसायेभ्यः लाभदायकम् अस्ति। वर्तमानयुगः अर्थयुगः अतः अद्य अर्थकरी विद्यायाः महत्त्वमस्ति तथा च शिक्षायाः उच्चशाखानाम् अध्ययनाय अयं साधनमात्रविषयोऽस्ति किन्तु व्यावहारिकविषयाणां मूलाधारोऽपि अस्यां भाषायां वर्तते। यथा एते विषयास्सन्ति भारतीयदर्शनशास्त्र-भौगोलिकशास्त्र-खगोलशास्त्र-गणित ज्योतिष-चिकित्सा-समाजशास्त्र-राजनीति-अर्थशास्त्र-भौतिकविज्ञान-रसायनशास्त्र-वनस्पतिविज्ञान-जीवविज्ञान-तन्त्रविज्ञान-कामशास्त्र-संगीतशास्त्र-आयुर्वेद-वास्तुकला-मूर्तिकला-पौरोहित्यकर्म-विधिशास्त्र-शिक्षादयः। एतेषां विषयाणाम् अध्ययनं कृत्वा छात्राः बहूनां व्यवसायानाम् अवसरं लभेरन्।

अतः अद्य नैकैः पाठ्यक्रमैः सहसंस्कृतं योज्य समन्वयात्मकपाठ्यक्रमस्य आवश्यकता वर्तते। केन्द्रीयमाध्यमिकशिक्षापरिषदा एका अधिसूचना प्रसारिता यत् उच्चमाध्यमिक स्तरे 2019-2020 सत्रतः कृत्रिमबुद्धिः (Artificial intelligence) योगशिक्षा-बालशिक्षा-आदिविषयाणां पाठ्यक्रमे समावेशः करणीयः। यतो हि कृत्रिमबुद्धिः एतादृशी शक्तिः वर्तते यया वैश्विक डिजीटल-अर्थव्यवस्थायां वृद्धिर्भविष्यति। राजनीतिक्षेत्रे आचार्यचाणक्यस्य नाम को न जानाति ? एवमेव ज्योतिषशास्त्रे आर्यभट्टभास्कराचार्यश्चेत्यादि सर्वमान्याः सन्ति। सुप्रसिध्दहिन्दुविधिमर्मज्ञाः समाजशास्त्रिणश्चरूपे महाराजमनुः विख्यातोऽस्ति। अर्थशास्त्रीयक्षेत्रे आचार्यचाणक्यस्य प्रशंसां के न कुर्वन्ति? चिकित्साशास्त्रस्य क्षेत्रे धन्वन्तरी महाभागः प्रसिद्धाचार्यः सञ्जातः। शल्यचिकित्साविज्ञःचरकः अद्य सर्वैः पठ्यते। साहित्यक्षेत्रेष्वपि कालिदास-भवभूति-भास-श्रीहर्ष-बाणभट्टादीनां यशो कीर्तिरालोकः अप्रतिमो विद्यते। अखिलेऽपि विश्वे संस्कृतभाषायाः महत्वपूर्णं स्थानम् अद्यापि सुरक्षितमस्ति, वैज्ञानिकदृष्ट्या अस्याः गौरवम् अप्रतिममस्ति अत्र निबद्धं विस्तृतमनुपमञ्च संस्कृतवाङ्मयवैशिष्ट्यं न कैश्चिदपि तिरोहितं, प्रायशः एतदेव कारणं यत् विश्वस्य पाश्चात्यसंस्कृतिसम्बध्दाः चिन्तकाः अप्यास्माकीनैः संस्कृतसाहित्यैः प्रभाविताः अभूवन्। किन्तु अस्माकं देशे उचितवृत्तेरभावे प्रतिभावन्तः युवानः विदेशगमनं कुर्वन्ति व्यवसायानाम् उदात्तभावनायाः व्यापकता अस्माकं नीतौ अपि उल्लिखिता अस्ति-

**यस्मिन् देशे न सम्मानं न वृत्तिर्न च बान्धवः।**
**न च विद्यागमः कश्चित् तं देशं परिवर्जयेत्॥**

अद्य आधिभौतिकतायाः प्राधान्यमस्ति। अतः समन्वयात्मकचिन्तनस्य आवश्यकता वर्तते।

यथोक्तम्- 'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्षान्यतरद् भजन्ते मूढः परप्रत्ययनेय बुद्धिः।।१।

संस्कृतविषयं स्वीकृत्य वर्तमानकाले सर्वकारीयक्षेत्रेषु असर्वकारीयक्षेत्रेषु च बहवः व्यवसायाः सन्ति। येषां प्रदर्शनं रेखाचित्रेण अत्र प्रस्तूयते



**अन्यानि क्षेत्राणि–** अनुसन्धानसहायका:
जल–थल–वायुसेनासु धर्मगुरव:
अनुवादक:, योगशिक्षक:, पत्रकार:
सम्पादक: लिपिक:, वैदिकगणितविषयस्य शिक्षक:, संस्कृतभाषया सह संगणकप्रयोगस्य विशेषज्ञ:

**सर्वकारीय-असर्वकारीयक्षेत्रेषु लेखका:** – मुद्रितमाध्यम: – पुस्तकानि, लेखा:
कवय: – विद्युतीयमाध्यम:– पुस्तकानि, लेखा: विज्ञापनप्रकाशक:

**सर्वकारीय- असर्वकारीय क्षेत्रेषु–**

आकशवाणी– उद्घोषक:, वार्ता प्रवाचका:

दूरदर्शनम्– संस्कृतकार्यक्रमस्य संचालका:, वार्ताकार:

**ज्योतिषशास्त्रे–**

भविष्यद्रष्टा

वास्तुपरामर्शक:

पौरोहित्यकर्मसम्पादका:, कथा प्रवाचका:, शिक्षाशास्त्रिण:, दार्शनिका:, समाजसुधारका:, नेतार:, अन्वेषका: (अनुसन्धानकर्तार:) उद्योगपतय: यथा–बाबारामदेव:,योगाध्यापका:, संस्कृतभारती द्वारा प्रशिक्षणात्परं संस्कृतभाषाबोधनवर्गस्य संचालका: सञ्चालिकाश्च, पाण्डुलिपिसंग्रहालयानामाधीक्षक:, विभिन्नसंस्कृतअकादम्या: अध्यक्ष:, सहायकाश्च

**वैद्या:– आयुर्वेदानुगुणं चिकित्सका:**

आयुर्वेदचिकित्सा एका जीवनपद्धति: वर्तते। भारतीयचिकित्साया एका प्राचीना पारम्परिका च प्रणाली वर्तते।[११] आयुर्वेदमधिकृत्य नूतनविज्ञानस्य साहाय्येन चिकित्साशास्त्रस्य अध्ययनं कर्तुं शक्यते, आयुर्वेदस्य अष्टाङ्गानि व्यव्सायात्मकमष्टविधं प्रदर्शयन्ति–

शल्यचिकित्सा, शालाक्यचिकित्सा, कायचिकित्सा, भूतचिकित्सा, कौमारभृत्यम्, अंगतन्त्रम्, रसायनतन्त्रम्, वाजीकरणम् आदय:। चिकित्साशास्त्रमधीत्य छात्रै: स्वयमेव स्वव्यवसायसम्बद्धविषयेषु अनुसन्धानं करणीयम्। तेन च तत्र सिद्धि प्राप्तुं शक्येत्।[१२]

मनुमहोदय: उद्घोषयति:–

**अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।**
**यद्यद्धि कुरुते किंचित्तत्कामस्य चेष्टितम्।**
**तेषु सम्यग्वर्तमानो गच्छत्यमर लोकताम्।**
**यथा संकल्पितांश्चेह सर्वान् कामान् समश्नुते॥**

अर्थात् लोके या काचिद् भोजनगमनादिक्रिया साप्यनिच्छतो न कदाचिद् दृश्यते। तत् च सर्वकर्म

लौकिकं वैदिकं च यद्यत्पुरूषः कुरुते तत्तदिच्छाकार्यम् नात्रेच्छा निषिध्यते किन्तु शास्त्रोक्तकर्मसु सम्यग्वृत्तिर्विधीयते।

किं शिक्षणमेकः व्यवसायोऽस्ति? किमयं शिक्षणव्यवसायः अन्य व्यवसायानामिव केवलं धनार्जनं यावत् परिसीमितमस्ति? एतेषामुत्तराणि आवश्यकानि शिक्षणं मानवनिर्माणस्य व्यवसायोऽस्ति। अस्य परम्परा अपि पृथगेवास्ति। अस्मिन् सम्बन्धे राष्ट्रियशिक्षासङ्घटनस्य क्षेत्रीयसेवाविभागेन अष्टसूत्राणि प्रस्तुतानि-[१४]

1. व्यवसायः बौध्दिकस्तरीय प्रवृत्यनुसारं भवितव्यम्।
2. व्यवसाये विभिन्नानां विशेषयोग्यतानामवसराः स्युः।
3. व्यवसाये तदर्थमुपयुक्तवैशिष्ट्यावसरो भवितव्यः॥
4. व्यवसाये क्रमबद्धरीत्या सेवाकाले प्रगतेरावसरो भवितव्यः।
5. व्यवसायः सम्पूर्णजीवनस्य कृते एकं कार्यं स्थायी सदस्यता च प्रददाति।
6. व्यवसायः स्वकीयं जीवनस्तरं निर्धारयति।
7. व्यवसायः वैयक्तिकलाभादधिक सेवाभावनां निर्माति॥
8. व्यवसाये दृढव्यवसायिकसङ्घटनं भवति।

शिक्षणव्यवसाये उच्चस्तरीयं कौशलं तदगुणं वैशिष्ट्यञ्च शिक्षकस्य अभिक्षमतायाम् आश्रितं भवति। अतः व्यवसायचयनकाले एतान् प्रति ध्यानं देयम्। डॉ. सुपरमहोदयेन व्यवसायचयनस्य व्यावसायिकविकासाय च निम्नलिखितानि तत्त्वानि निश्चितानि[१५]-

1. प्रत्येकमपि मनुष्यस्य व्यक्तित्वे, योग्यतायां, रूचौ च भिन्नताः भवन्ति।
2. विविधव्यवसायेषु पृथक्- पृथक् योग्यातानां, दक्षतानां, व्यक्तित्वगुणानाञ्च आवश्यकता भवन्ति।
3. समयेन अनुभवेन सह व्यवसायिकाभिरुचिषु परिवर्तनं भवति।
4. व्यावसायिकदिशानिर्धारणे परिवारस्य सामाजिकी-आर्थिकी-स्थितिः-व्यक्तेः मानसिकयोग्यता-व्यक्तित्ववैशिष्ट्यानां, परिवारस्य अन्यसदस्यानां, व्यवसायानाम् अवसरादितत्त्वानां प्रमुखम् अवदानं भवति।
5. कार्यसन्तोषः जीवनसन्तोषश्च तदैव आगच्छति यदा व्यक्तिः तस्मिन् व्यवसाये स्वयोग्यतानां, रुचीनां, व्यक्तित्वशीलगुणानां, मूल्यानां मान्यतानाञ्च पूर्णोपयोगं करोति।

व्यवसायचयनस्य कृते शैक्षिकं व्यावसायिकञ्चनिर्देशनम् अत्यावश्यकम्। वर्तमानकाले एतदर्थं विद्यालयेषु परामर्शदातृणां व्यवस्था वर्तते व्यवसायचयनस्य प्रक्रिया कथं प्रचलति अनेन रेखाचित्रेण अत्र प्रस्तूयते-




शैक्षिक-व्यावसायिकनिर्देशनयोश्च आवश्यकता संस्कृत शिक्षायाः क्षेत्रेऽपि अस्ति। यथासमये उचितनिर्देशनेन संस्कृतछात्राअपि उचितव्यवसायस्य चयनं कर्तुं शक्नुवन्ति यतोहि संस्कृतक्षेत्रेऽपि व्यवसायानां न्यूनता नास्ति।

**अल्बर्ट आइंसटीन महाभागेनोक्तम्-** तथ्यानामवबोधमात्रमेव शिक्षात्वेन न स्वीक्रियते परं मस्तिष्काय चिन्तनपरकप्रशिक्षणमेव वास्तविकशिक्षात्वेन अङ्गीक्रियते।

निष्कर्षतः वर्तमानकाले व्यावहारिकशिक्षामुपरि अधिकं बलं प्रदीयते केवलम् उपाधीनां संग्रहकरणमेव शिक्षाया उद्देश्यं नास्ति अपितु तस्याः प्रयोगे छात्राः सफलाः स्युः, अनेन चिन्तनेन सह प्रशिक्षुतायाः(Internship) विचारः शिक्षणक्षेत्रेऽपि आगतः।

अन्तःवृत्याभ्यासेन भावीशिक्षकेषु व्यावसायिकदक्षतायाःविषयेषु सहसम्बन्धस्थापनस्य योग्यातायाश्च विकासो भवति। व्यावहारिकज्ञानेन सह विद्यालयस्य ज्ञानं भवति। शोधोन्मुखी चिन्तनस्य विकासो जायते। नवाचाराणां प्रयोगेऽपि ते दक्षाः भवितुं शक्नुवन्ति।

**एपीजे अब्दुल कलाम** महाभागेनापि उक्तम्:-

"शिक्षणं तादृशः व्यवसायः येन कस्यचिदपि चरित्रस्य सामर्थ्यस्य भविष्यस्य च निर्माणं भवति।"

**सन्दर्भग्रन्थाः**

1. विश्वनाथः 'साहित्यदर्पणम्' भामहमहाभागेनोक्तम्, प्रथम- परिच्छेदः पृ.सं. 5, दहालः लोकमणि द्विवेदी त्रिलोकीनाथ, चौखम्बा सुरभारती प्रकाशन, वाराणसी, संस्करण-2015
2. विष्णुपुराणम् -1/19/41
3. ईशावास्योपनिषद्- श्लोक सं.11, 'कल्याण उपनिषद् अंक, विशेषांक, तेइसवें वर्ष का, गीताप्रेस गोरखपुर, पृ सं-168, संवत 2071, तेहरवाँ संस्करण

4. द्विवेदी विश्वक्सेन दत्त- 'संस्कृत वाङ्मय एवं शिक्षा व्यवस्था' चतुर्थ अध्याय संस्कृत वाङ्मय में शिक्षालय प्रबन्धतन्त्र पृ.सं 96 कला प्रकाशन, वाराणसी, प्रथम संस्करण 2015 शुक्रनीतिसार-368, 369
5. पण्डित नारायण - हितोपदेशः मित्रलाभः श्लोक सं 128 पृ.सं 34, सम्पादक पीटर पीटरसन, 1999, भारतीय बुक कॉरपोरेशन, दिल्ली
6. चौधरी नवल किशोर 'आधुनिक परिप्रेक्ष्य में संस्कृत शिक्षण की उपादेयता भारतीय आधुनिक शिक्षा(पत्रिका) प्रकाशक एन.सी.ई.आर.टी 1996 पृ 20 अंक-4
7. पाण्डेय कुञ्जबिहारी- भारतीय संस्कृति की अमूल्य थाती संस्कृत भाषा शिविरा पत्रिका अगस्त 1998 अंक -2 पृ.30-31
8. पण्डित नारायण- हितोपदेशः मित्रलाभः श्लोक सं 108 पृ.सं.24 सम्पादक-पीटर पीटरसन 1999 भारतीय बुक कॉरपोरेशन, दिल्ली
9. कालिदास- 'मालविकाग्निमित्रम् 1/2।
10. बलूनीश्रीधर- व्यवसायिकसंस्कृतशिक्षणस्य स्वरुपं तस्य विकासस्योपायाः संगमनी पत्रिका, संस्कृत साहित्य परिषद्, प्रयाग, वर्ष-26 अंक-4, 1997 पृ.4
11. घोष जयन्ती- 'वैकल्पिकचिकित्सा' रोजगार समाचार, नई दिल्ली 2-8 जून 2001 पृ.सं-1
12. ब्लूनी श्रीधर - व्यावसायिकसंस्कृतशिक्षणस्य स्वरुपं तस्य विकासस्योपायाः 'संगमनी' पत्रिका अंक-4, वर्ष 26, 1997, पृ. 28
13. मनुस्मृतिः - द्वितीय अध्याय, श्लोक सं.4 एंव 5, चौखम्भा संस्कृत भवन वाराणसी, पृ.सं.36-37 संस्करण -2009
14. भटनागर सुरेश आधुनिक भारतीय शिक्षा और उसकी समस्याएँ, सूर्या पब्लिकेशन्स, मेरठ 1995 पृ.127
15. वर्मा रामपाल सिंह- 'व्यावहारिक मनोविज्ञान' शर्मा देवदत्त विनोद पुस्तक मन्दिर, आगरा 1983 पृ.118
16. चतुर्वेदी शिखा शर्मा.आर.ए. - शैक्षिक एवं व्यावसायिकनिर्देशन तथा परामर्श, प्रकाशक-आर.लाल बुक डिपो, मेरठ 2007, पृ.सं.-320

# अध्यापकशिक्षा व्यावसायिक दक्षता च

प्रो. फतहसिंहः

प्राचीनकाले अध्यापनं शिक्षणं वा सेवारूपेण भवति स्म। तदानीं ज्ञानदानेन तात्पर्यमासीत् परमं पवित्रञ्च कर्त्तव्यं, समाजहितकार्यम् इत्यादयः। किन्तु आधुनिकसमये कर्त्तव्यमेतद् व्यवसायरूपं गतम्। अधुना अध्यापकाः वेतनादिकं प्राप्य ज्ञानप्रदानं कुर्वन्ति। आधुनिककाले एतदेकमुद्यमं प्रतिभाति, अस्ति च। एतद् स्वरूप प्रदाने विश्वविद्यालयायोगेन अपि स्वसहमतिः प्रदत्तास्ति। अनन्तरं राष्ट्रिय-अध्यापक-शिक्षापरिषदाऽपि अध्यापनं व्यवसायरूपेण स्वीकृतम्। तथा ''एतस्य गुणात्मकविकासाय स्तरोन्नयनाय च प्रयासः करणीयः'' इत्यत्राऽपि तेन बलं दत्तम्। व्यवसाये मूलभूततथ्येषु न्यूनतमकौशलदक्षतासु, प्रतिबद्धतासु च ध्यानं दातव्यम्। अस्याभावे व्यक्तिः न तु व्यवसाये सफलतां प्राप्नोति न वा तस्मिन् गुणात्मकस्तरः आगच्छति। यथा कश्चन चिकित्सकः चिकित्सामाध्यमेन सामाजिकीमार्थिकीञ्च प्रतिष्ठामवाप्य व्यवसायगतदक्षतां प्राप्नोति, न तथा कश्चन अध्यापकः एतस्मिन् कार्ये सक्षमः भवति।

राष्ट्रिय-अध्यापक-शिक्षा-परिषदा ''अध्यापकशिक्षायाः क्षेत्रे गुणवत्तां स्तरोन्नयनकार्यञ्चानुभवता दक्षा प्रतिबद्धा च अध्यापकीययोजना आवश्यकीति'' स्वीकृतमस्ति। प्राथमिकस्तरे सर्वशिक्षायै स्वीकृत्यनन्तरमधिगमकर्तॄणां संख्यावृद्धिः जाता। अतः भविष्ये अस्य विस्तारं भविष्यतीति स्वीकरणीयमेव। इयं विस्तृतिः अवश्यमेव शिक्षणगुणवत्तास्तरं प्रभावयिष्यति। अधिगमवातावरणम्, विद्यालयसमुदायसम्बन्धः, अध्यापकीयभूमिका अधिगमप्रारूपम् परिवर्तनं भवितेति निश्चितम्। अधिगमाय समानावसरप्राप्तिः तथा न्यूनतमाधिगमसीमाप्राप्तिः प्रत्येकस्याऽपि अधिगमकर्तुरधिकारः।

दक्ष-प्रतिबद्धाध्यापकीयाः विशेषताः– एतस्मिन् सन्दर्भे राष्ट्रिय-अध्यापक-शिक्षा-परिषदा स्पष्टीकृतं यत् स एव कुशलः प्रतिबद्धश्चाध्यापकः यः–

- विद्यार्थीप्रियः, तेषां सहयोगी, तत्समुदायप्रशंसितः सम्मानितश्च।
- अनुकूलप्रियव्यवहारप्रदर्शनकर्त्ता, राष्ट्रनिर्माणप्रक्रियायां स्वांशदानं प्रति, आवश्यकतात्मवधारणा सहैव आत्मविश्वासी अपि स्यात्।
- ज्ञानं, जनसंख्याक्षेत्रविस्फोटं, शिक्षाऽऽकांक्षावृद्धिं प्रति जागरूकः।
- उपर्युक्तस्त्रोतमाध्यमेन नवसूचना संग्रहेण अध्यापनाधिगमव्यूहरचनानुसरेण च तेषां संसाधने विज्ञः स्यात् इत्यादयः।

**प्रमुखदक्षताक्षेत्राणि–**

**सन्दर्भितदक्षता–** इयमेका प्रमुखा दक्षतायाः स्थितिरस्ति यस्यां जायते यत् यावत् वयं

पाठ्यवस्तोः सन्दर्भितबिन्दुभिः परिचिताः न भवामः तावत् तस्यारून्नयनं न भवति। अतः सामाजिकार्थिकसांस्कृतिकधार्मिकभावसम्बन्धीनां विषयाणां ज्ञानं अध्यापके भवितव्यम्। देशकालपात्रादिसन्दर्भे परिवर्तनेन सहैव तथ्यानामर्थेषु महत्त्वेषु च परिवर्तनं स्वाभाविकमस्ति। उदाहरणाय– यदा कस्मिन् देशे जनसंख्यायां न्यूनता भवति तदा बृहत्परिवारः न घातकः, किन्तु अधिकघनत्वशीले देशे बृहत्परिवारः तेभ्य मान्यताप्रदानञ्च नोचितम्। अध्यापकेषु विविधसामुदायिकसंगठनानां सामाजिकन्यायानां शैक्षिकसमानावसराणाञ्च बिन्दूनां ज्ञानमावश्यकम्।

**संकल्पनात्मकदक्षता–** अध्यापकेभ्यः शिक्षाध्ययनाधिगमसंकल्पनानां परिचयः आवश्यकः तथा चैतान् प्रभावयन्तः सामाजिकार्थिकसांस्कृतिककारकाणां प्रभावविषये ज्ञानमपेक्षितम्। शारीरिक-मानसिक-सांस्कृतिक-विकासाय अधिगमकर्तृणां काः आवश्यकताः? इत्यादीनामपि ज्ञानमपेक्षितम्। केवलं पाठ्यक्रमसंकल्पनानां विषये दक्षताप्राप्तिः पर्याप्ता न, अपितु शिक्षणविधीनां संकल्पनायामपि दक्षता स्यात्। संकल्पना एव स आधारः यस्मिनधिगमः स्थापितः भवति तथा च विकासस्याऽपि प्रयासः एतेनैव सम्भवमस्ति।

**विषयवस्तुगतदक्षता–** कस्मिन्नपि अध्यापके स्वविषयस्य पूर्णाधिकारः तथैव अपेक्षितः यथा कर्मकाण्डिने ब्राह्मणाय मन्त्रेषु [illegible] र्णाधि[illegible]रः भवति। तेभ्यः आवश्यकं यत् ते पाठ्यक्रमविश्लेषणं अवबोधान् यथानुक्रमं सज्जयेयु.[illegible]धिगमान्तरालस्य ज्ञानं तदैव सम्भवं यदा अध्यापकस्य विषये अधिकारः स्यात्। तेनैव सह परामश[illegible]दकार्येऽपि सः सार्थकरूपेण जागृतः स्यात्। अधिगमस्य सानन्दप्रक्रियारूपेण स्थापनं तद्शिक्षकाय कठिनं न भवति, यः विषयस्य पूर्णज्ञाता स्यात्। विषयस्पष्टीकरणाय कस्य विधेः प्रयोगः करणीयः वा एतस्मिन् सन्दर्भे कः शिक्षणविधिः उपयुक्तः भविष्यति? एतादृशानि चिन्तनानि तदैव सम्भवानि यदा शिक्षकः योग्यः विधिज्ञश्च भवेत्। एतदर्थमेव पाठयोजनानिर्माणे छात्राध्यापकाः शिक्ष्यन्ते यत् पाठयोजनायां सर्वेऽपि बिन्दवः स्पष्टाः भवेयुः। यथा अत्र कस्य विधेः प्रयोगः क्रियते, केषां सहायकसामग्रीणां प्रयोगः क्रियते इत्यादि।

**सम्प्रेषणसम्बद्धदक्षता–** शिक्षणं केवलया विषयगतदक्षतया एव न सम्भवमपितु तस्य सम्प्रेषणमपि आवश्यकम्। यतः अध्यापकस्य प्रमुखं कार्यं भवति ज्ञानस्य हस्तान्तरणम्। तात्पर्यमिदं यत् यदि अध्यापके विषयगतज्ञानमस्ति किन्तु तद् ज्ञानं सः छात्रेभ्यः प्रदाने अक्षमः, तर्हि तत् विषयगतं ज्ञानं निरर्थकमेव। पाठनियोजनस्य व्यावाहारिकरूपप्रदानं तथा उपलब्धिस्तरस्याकलनं अत्र निहितमस्ति। सम्प्रेषणक्रियायां गहनज्ञानाभावे शिक्षणविधौ सम्प्रेषणान्तरालस्याधिक्यं स्वाभाविकं यत् शिक्षणं स्मृतिस्तरात् अग्रेचिन्तनस्तरं व्यावहारिकस्तरं नेतुं बाधकः भवति। निरन्तरमूल्याङ्कनं तथा परिमार्जनात्मकशिक्षणाभावे पाठ्यक्रमान्तर्गताः हस्तान्तरणन्यूनताः न दूरीभवितुं शक्याः। एतदर्थं विविधतकनीकिविधिव्यूरचनादीनां प्रयोगे शिक्षकेण दक्षः भवितव्यः येन सः यथावश्यकविधीनां प्रयोगेण अधिगमकर्माणि सकलः स्यात्।

**मूल्याङ्कनदक्षता–** मूल्याङ्कनं शिक्षणस्यैव एकम् अविभाज्यमङ्गमस्ति। अतः अध्यापकेषु मूल्याङ्कन दक्षताऽपि स्यादेव। वर्तमानशिक्षाप्रणाली अधिगमप्रतिफले न्यूनतां तथा मानसिकं भयमुत्पादयति। किन्तु मूलरूपेण मूल्याङ्कनस्य कार्यं उद्देश्यं वा अधिगमदक्षतायाः स्पष्टीकरणम् अथवा छात्राधिगमस्तरपरिक्षणमस्ति। तेषां विशिष्टाधिगमाय प्रोत्साहनप्रदानं चाऽस्ति। एकेन दक्षाध्यापकेन आधुनिकमापनमूल्याङ्कनयोः पद्धतीनां तकनीकीनां च ज्ञानेन परिपुष्टेन भाव्यम्, येन आवश्यकतानुसारम् उचितोपागमाय तस्य प्रयोगः सार्थकः स्यात्।

**प्रबन्धसम्बन्धीदक्षता–** उत्तमाय प्रभावोत्पादकाय च शिक्षणाय अध्यापकेषु कक्षानुशासनस्य, प्रबन्धकौशलानाञ्च ज्ञानमत्यन्तं आवश्यकमस्ति। विभिन्नेषु शैक्षिककार्यक्रमाणामायोजनेषु एतादृशानां प्रबन्धकौशलानां शिक्षकेभ्यः आवश्यकता भवति। सामूहिकशिक्षणेन सह अध्यापकेन मार्गदर्शने सक्षमः भवितव्यः, मार्गदर्शञ्च प्रबन्धस्यैवाङ्ग। कुशलप्रबन्धने दक्षः अध्यापकः कक्षायाः कस्मिन्नपि स्तरे सामूहिकक्रियाकलापेषु छात्रान् संयोजयितुं योग्यः भवति।

**आजीविकां प्रति प्रतिबद्धता–** यदि कश्चन अध्यापकः स्वजीविकां (अध्यापनं) प्रति गर्वशीलः स्यात् तथा आजीविकागतविकासाय आग्रही स्यात् तदा अवश्यमेव सः तस्मिन् क्षेत्रे स्वपरिचयं प्रदातुं शक्तः। प्रायः व्यवसायाभावात् अध्यापनम् आजीविकारूपेण ग्रहणबाध्यतास्थितौ एतद् न सम्भवम्। यदि सः स्वात्मानं वास्तविकराष्ट्रनिर्मातृरूपेण न स्वीकरोति तदा प्रायः प्रतिबद्धतायाः न्यूनता दृश्यते। नैव राष्ट्रनेतारः नवाधिकारिणः यूनां निर्माणे सक्षमाः। कियन्तोऽपि उच्चाधिकारी स्यात् शिक्षायै सः स्वपुत्रपुत्रीम् विद्यालये एव प्रेषयति यत्र अध्यापकः तस्य सर्वांगीणविकासे सहायकः भवति। शिक्षकेनैव तस्य बालकस्य व्यक्तित्वनिर्माणं, व्यक्तित्वह्रासं वा कर्तुं शक्यते। तदा सः बालकस्य सर्वांगीणविकासाय एव प्रयतते। एतादृशेनाधिकारेण युक्तः शिक्षकः वस्तुतः राष्ट्रनिर्माता एव, सा कथा भिन्ना यत् समाजः एनां मर्यादां प्रदातुं सक्षमः न स्यात्।

एकः प्रतिबद्धः अध्यापकः अवश्यमेव आजीविकागतनैतिकतां कर्त्तव्यञ्च पालयति, सामाजिकं प्रतिदानं प्राप्नुयात् न वा। यः मानवं संस्कारवान् मानवः करोति न तु दानवः, एषः प्रभावः शिक्षायाः शिक्षकस्यैव च। यद्यपि शिक्षणं आजीविकारूपेण दृश्यते किन्तु ज्ञानदायिनीविद्यायाः आधारभूतं शिक्षणं केनऽपि धनेन तुल्यं नास्ति।

**अभिभावकसहकार्यदक्षता–** दक्षतेयं विशेषतः प्राथमिकस्तरे अधिकोपयोगी अस्ति। किन्तु अन्येषु स्तरेष्वऽपि दक्षतेयं तथैवोपयुक्ता यथा प्राथमिकस्तरे। अभिभावकः अद्याऽपि अधिगमाय तादृशः न जागरुकः यादृशेन तेन भाव्यम्। तथा स न हि अधिगमे नियमिततां, सम्बद्धतां सहयोगितामाचरणसंशोधनञ्च तेभ्यः रुचिकरं भवति।

**समाजं प्रति प्रतिबद्धता–** अध्यापने सफलतायै सामाजिकप्रतिबद्धताः न त्यक्तुं योग्याः। मानवः यस्मिन् समाजे निवसति तं प्रति अवश्यमेव तस्य किमपि कर्त्तव्यं भवत्येव। अतः अधिगमकर्ता

केनाऽपि समाजेन आगतः स्यात्, अध्यापकस्य दायित्वं भवति यत् सः सर्वेभ्यः समानां शिक्षां दद्यात्। सामाजिकरूपेण ये अनग्रसरिताः तेभ्यः विशेषावसरप्रदानस्य व्यवस्था शिक्षकेन करणीया, न तु तस्मिन् तिरस्कारभावना स्थापनीया। शिक्षकः यथा अधिगमकर्तृभ्यः प्रतिबद्धः तथैव सः समाजस्यान्यजनेभ्योऽपि अस्ति।

**अन्यशैक्षकक्रियाकलापगतदक्षता–** उपर्युक्तदक्षताः पाठ्यक्रमगतक्रियाकलापैः सम्बन्धिता आसीत्। एतैः ज्ञानात्मकपक्षः सुदृढः भवति। किन्तु भावनात्मकविकासाय, मनोगामकविकासाय च पाठ्यक्रमेतरक्रियाकलापानामावश्यकता भवति। विभिन्नानि राष्ट्रयानि तथा सामाजिकानि पर्वाणि, घटनासम्बन्धितिथिनामनुपालनम्, सामुदायिकजीवनस्य सहकार्याणि (यथा– ग्रामस्वच्छता, श्रमदानं, भ्रमणं, राष्ट्रिय-सेवा-योजना, स्काउट, समाजसेवा) इत्यादीनामनुप्रयोगेण तथा दैनिकप्रार्थना, सभा, विचारः, चिन्तनम् इत्यादिविषयैः तेषां शारीरिकोऽपि विकासः जायते।

**सेवापूर्वकालीनाजीविकागताध्यापकशिक्षा–** इयमेकया रूपान्तरप्रक्रिया रूपेण स्वीकृता। यत्र एकस्याकुशलस्य व्यक्तेः परिवर्तनं प्रतिबद्धाऽऽजीविकाशिक्षकरूपेण भवति। अत्र उपयुक्तशिक्षणस्य, प्रबन्धकौशलानां विकासस्य, अभिवृत्तेनिर्माणस्य, सकलधिगमाय मूल्यात्मसात्करणस्य च विशेषं महत्त्वमस्ति। अध्यापकशिक्षकाय आदर्शभूमिकाप्रतिमानम्, अनुभवहीनं व्यक्तिमपि प्रशिक्षणेन आजीविकायां संलग्नकरणे सक्षमः। उपयुक्तपाठ्यक्रमाभावे आजीविका सम्बन्धिनं शिक्षण-प्रशिक्षणं प्रदाने आजीविका प्रदानं कठिनं भवति।

**सेवाकालीनव्यवसायगताध्यापकशिक्षा–** सेवाकालीनायाः अध्यापकशिक्षायाः कार्यक्रमाणां माध्यमेन विद्यालयप्रणाल्यां निरन्तरजायमानेन सह परिचयं तथा सशक्तीकरणं संरक्षियितुं सहायतां प्रददाति। विषयवस्तुना सहैव प्रविधिसम्बद्धानि तकनीकिसम्बद्धानि च परिवर्तनानि निरन्तरं जायन्ते। अभिवृत्तेः अभिप्रेरणात्मकस्य च परिवर्तनाय सुनियोजितः सेवाकालीनः अध्यापकशिक्षाकार्यक्रमः। वर्तमानसमाजस्य उत्पद्यमानानां आवश्यकतानां तथा महत्त्वाकांक्षानामनुरूप एव अध्यापकेभ्यः उपयुक्तश्च।

**निरन्तरस्वनिर्देशिताधिगमः–** व्यवसायगतकौशलान् निरन्तरं नवीनीकर्तुम् आजीविकागतवृद्धये मुख्यरूपेणावश्यकतास्ति। यदि प्रत्येकः अध्यापकः वाञ्छति यत् सः आजीवनमधिगमकर्त्ता स्यात् वा आजीवनं तस्मिन् ज्ञानागमः स्यात् तदा तेन निरन्तरं स्वनिर्देशिताधिगमस्य प्रयोगः करणीयः। एतस्मिन् क्षेत्रे मुद्रितमाध्यमानां सहैव संचारमाध्यमानां (इन्टरनेट, मल्टीमीडिया) अपि ज्ञानमावश्यकं भवति यदि कश्चन नवाचारिकोपागमः व्यवहारे आनेतुमिच्छति अथवा तेषामुपादेयता विषये ज्ञातुमिच्छति तदा निश्चयेन अध्यापकेन एतादृशीनां प्रणालीनामनुसरणं करणीयम्। अवश्यमेतदर्थम् आर्थिकव्ययः तथापि सुविधानामुपलब्धये शिक्षासंस्थानां दायित्वं महत्त्वपूर्णमस्ति।

अध्यापकशिक्षाकार्यक्रमे परिमार्जनावश्यकता– स्पष्टमस्ति यत् वर्तमानाध्यापकशिक्षाकार्यक्रमः स्वल्पाध्यापकानां निर्माणे सक्षमः, किन्तु अध्यापनाजीविकाक्षेत्रे दक्षेन कुशलव्यक्तिरूपेण तेषां स्थापनं, तेषां कृते सरलं नास्ति, यस्याभावे च आजीविकारूपं न सम्भवम् एतदर्थमनेकानि कारणानि उत्तरदायीनि सन्ति–

- पाठ्यक्रमप्रारूपे राष्ट्रिय-अध्यापक-शिक्षा-परिषदा परिवर्तनाय परामर्शाः।
- अध्यापकशिक्षाकार्यक्रमस्वरूपनियन्त्रणाय प्रयासः।
- दक्षताक्षेत्रेषु शिक्षणप्रशिक्षणाय आयोजनम्।
- मूल्याङ्कनस्य आधुनिके योग्यतकनीकिसु शिक्षण-प्रशिक्षणस्यावश्यकता।
- सामुदायिक संसोधनोपयोगाय कुशलतायां शिक्षणप्रशिक्षणम्।
- प्रतिपुष्टिनियन्त्रणप्रणाल्याः व्यावहारिकोपादेयता, अनुप्रयोगाय तदपेक्षाश्च।
- अध्यापकशिक्षायां गुणवत्तानियन्त्रणं, स्तरनियन्त्रणञ्च।
- शिक्षणगतकौशलेषु, शिक्षणेतरकौशलेषु च भाषी तथा सेवारताध्यापकीयप्रशिक्षणाय व्यवस्थानम्।
- आजीविकागतदक्षता, प्रतिबद्धता तथा निष्पादनं इत्यादिषु वांछितस्य शिक्षणप्रशिक्षणस्याऽपरिहार्यता।

सन्दर्भग्रन्थसूची–

१. भावी शिक्षकों के लिए आधारभूत कार्यक्रम, पुरोहित, व्यास एवं शर्मा (२००८) राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर
२. Teacher Education, B.N. Panda & AD Tewari, A.P.H. Publishing Coorporation, 5, Ansari Road, Darya Ganj, New Delhi-110002 (1997)
३. अध्यापक शिक्षा में प्रायोगिक कार्य, प्रो. एम.के. शर्मा एवं डॉ. रामेश्वरी शर्मा, रचना प्रकाशन, जयपुर
४. अध्यापन विधि के सिद्धान्त (१९८१), प्रो. वी.जी. झींगरन एवं डॉ. जयदेव विद्यालंकार, हरियाणा हिन्दी ग्रन्थ अकादमी, चण्डीगढ़।
५. मानव मूल्य एवं शिक्षा (२०११), आर.ए. शर्मा, आर. लाल बुक डिपो, मेरठ
६. अध्यापक शिक्षा, आर.ए. शर्मा एवं शिखा चतुर्वेदी, (२००३), लाल बुक डिपो, मेरठ

# संस्कृतशिक्षायां व्यावसायिकसमस्याः परिहारश्च

## (Sanskrit Education Vocational Problem and Solvings)

प्रो. सोहनलालपाण्डेयः

पुराकाले भारतीय शिक्षायाप्रमुखमुद्देश्यमासीत्– ''मोक्षस्यप्राप्ति''। अनेनैव उक्तमस्ति ''सा विद्या या विमुक्तये''। मुक्त्यर्थं विविधाः धार्मिकक्रियाकलापानाम् आचरणं प्रचलति स्म। बौद्धानां मते कैवल्यस्य प्राप्ति शिक्षाया प्रमुखमुद्देश्यमासीत् तथैव निर्वाणस्य अथवा महानिर्वाणस्य प्राप्ति जैनमतावलम्बीनां मते महनीयमुद्देश्यमासीत्। पौराणिककाले अस्मिन् विचारे परिवर्तनमागतम् तदा चरित्रनिर्माणं शिक्षायाः प्रमुखमुद्देश्यमभवत्। तदुद्देश्यम् आधुनिककाल पर्यन्तं शिक्षाया उद्देश्येषु प्रमुखमुद्देश्यमभवत्। प्रजातन्त्रस्य प्रभावेण शिक्षाया उद्देश्येषु विस्तारमभवत्। प्रजातन्त्रात्मकसमाजे चरित्रनिर्माणेन सह नागरिकसामाजिकगुणानां विकासस्यावश्यकता अनुभूता। किन्तु औद्योगिकीकरणस्य, वैश्वीकरणस्य प्रभावेण सर्वाङ्गीणविकासः अर्थात् शारीरिकमानसिकाध्यात्मिक–नैतिकसामाजिकनागरिक गुणानां विकासः शिक्षाया प्रमुखमुद्देश्यं स्यात् इति सर्वेषां शिक्षाशास्त्रीणां मतमभवत्।

अस्मिन् प्रतिस्पर्धात्मकयुगे अकस्मादेवसर्वाङ्गीणविकासापेक्षया व्यावसायिकदक्षतायाः व्यावसायिककौशलस्य प्राप्तिः शिक्षाया अन्तिममुद्देश्यमभवत्। यश्च व्यावसायिकरूपेण दक्षः सः सर्वगुण सम्पन्नः। शिक्षाया सम्बन्धः व्यवसायेन स्यात् इति गान्धि महाभागस्य "Basic Education" मध्ये विचारः मिलति। माध्यमिकशिक्षायोगस्य संस्तुतीषु ''मल्टीपरपजहाईस्कूल'' अस्य विचारस्य प्रथम सर्वकारीय प्रतिवेदनम् अस्ति। शनैः–शनैः प्रतिस्पर्धायाः कारणेन आधुनिकयुगे सर्वाणि उद्देश्यानि विस्मृति–पथे अगच्छन्, केवलं व्यावसायिकदक्षता शिक्षायाः कृते आवश्यकी इति अस्य विचारस्य समावेशेन सह व्यावसायिकशिक्षा संस्थानानां स्थापना अभवत्। आकादमिकविद्यालयानां महाविद्यालयानां छात्रेषु न्यूनतायाः आगमनमभवत्। उच्चोपलब्धिछात्रा विषयचयनस्यावसरे व्यावसायिकविषयाणां चयनं कुर्वन्ति। गणितविज्ञानादिषु विषयेषु छात्राः अधिकसंख्यायां व्यावसायिककारणात् अधिक–संख्यायां समविष्टाः भवन्ति। परिणामतः कलामानविकी इत्यादिषु भविष्यगतव्यावसायिकसम्भावनायाः अभावे छात्रेषु न्यूनता समागता।

साम्प्रतम् अनुभूयते यत् सर्वेविषयाः व्यवसायेषु सम्बद्धा स्युः। यतोहि बालकानां भविष्यस्य अयं प्रश्नः? संस्कृतशिक्षायामापि अस्या समस्यायाः समावेशः अनुभूयते। पूर्वं संस्कृतशिक्षाप्राप्ताः सर्वेछात्राः यथायोग्यम् अध्यापक–प्राध्यापक पदं प्राप्नुवन्ति स्म। अथवा पाम्परिक पाण्डित्यपौरोहित्य ज्योतिषस्य व्यवसायं कुर्वन्ति स्म। किन्तु यथा–यथा संस्कृतशिक्षासंस्थानानां स्थापना अभवत्। छात्राणां समक्षे व्यावसायिकसमस्यायाः आगमनमभवत्। छात्राणां समक्षे अध्यापकस्य व्यवसायादतिरीच्य अन्येषु

व्यवसायेषु 'संलग्नतायाः अभावः प्रतीयते। ते चिन्तयन्ति यत् पठित्वा अन्ये जनाः विभिन्नेषु सर्वकारीय-निजी क्षेत्रेषु कार्यार्थं गच्छन्ति किन्तु वयं किं कुर्मः?

अस्माकं नियोजनं कुत्र स्यात्?

साम्प्रतम् इयं समस्या सार्वलौकिकी समस्या वर्तते। संस्कृत शिक्षायामपि अस्या समस्यायाः समावेशः अभवत्। यतोहि संस्कृत शिक्षायां पूर्वं नियोजनस्य व्यवसाय चयनस्य समस्या नासीत् किन्तु यथा- यथा संस्कृतशिक्षासंस्थानानां विस्तारः अभवत् नियोजनस्य, व्यवसायचयनस्य, व्यावसायिकदक्षतायाः समस्या आगच्छत्। अस्याः समस्यायाः परिहारार्थमुपायानां चिन्तनमपि आवश्यकम्। उपायेषु च सर्वप्रमुखोपायः वर्तते निर्देशनस्य परामर्शस्य च व्यवस्था निर्देशनं नाम एका सहायतावर्तते या च बालकाय/छात्राय बुद्धिमत्तापूर्वकं निर्णायाय समायोजनाय च दीयते।

प्रायः स्वतन्त्रताप्राप्त्यानन्तरमेव प्रत्येकं राज्ये निर्देशन ब्यूरो इत्यस्य स्थापना अभवत्। तेषु च छात्राणां शैक्षिकव्यावसायिकनिर्देशनस्य कार्यक्रमाणामायोजनं भवति च। अनेन छात्राणां शैक्षिक-व्यावसायिकसमस्यानां समाधानं मिलति स्म। किन्तु दौर्भाग्येण निर्देशनब्यूरो स्वस्योत्तरदायित्वां प्रतिपूर्त्यर्थम् असफलतां प्राप्तवान्। तथैव प्रत्येकं विश्वविद्यालये परामर्शकाणां नियुक्ति भवति स्म परामर्शकाणां नियुक्ति छात्राणांा शैक्षिकव्यावसायिकसमस्यानां निवारणार्थमासीत् किन्तु परामर्शकेन्द्राणि अपि समुचितं निर्देशने तथा सफलाः नैव सन्ति यथा तेषां विषये आशा आसीत्। संस्कृतशिक्षायां तु स्थिति दयनीया वर्तते। भारते नैके संस्कृतमहाविद्यालयाः, विद्यालयाः, प्राच्यशाला, पाठशाला च स्थापिता सन्ति। निर्देशेन परामर्शेण तेषां न कोऽपि सम्बन्धः। वस्तुतः बालकस्य कृते निर्देशनमावश्यकम्। प्रत्येकं छात्रस्य कृते निर्देशनमावश्यकम्। निर्देशनं च छात्रं प्रदर्शयति यत् के के गुणाः, का-का क्षमता, कश्च गुणः कस्यचित् विषयस्य कृते आवश्यकः, कश्च गुणः कस्यचित् व्यवसायस्य कृते आवश्यकः? छात्रस्य बौद्धिकस्तरः कीदृशः? व्यक्तित्वं कीदृशम्? उपलब्धिस्तश्च कीदृशः? तदानिर्देशनस्य माध्यमेन परामर्शः दीयते यत् स च छात्रः कस्य विषयस्य चयनं कुर्यात् एकस्मिन् च व्यवसाये कस्मिन् च विषये तस्य अभिरुचि अभिक्षमता चास्ति।

संस्कृतस्य छात्राः संस्कृतस्य शिक्षायां कार्यरताः जनाः बालकान् निर्देशनाय तत्पराः एव न दृश्यते। ते केवलं ज्ञानं प्राप्नुवन्ति, ज्ञानं ददति, ज्ञानाय प्रेरयन्ति, ज्ञानार्जनाय तत्पराः भवन्ति अथवा तत्परताया कृते प्रेरयन्ति। किन्तु इदं ज्ञानं किम् तस्य बालकास्याभिरुचि अभिक्षमता योग्यतादीनामनुरूपमस्ति न वा? इदं न तु बालकाः जानन्ति न च अध्यापकाः जानन्ति न च तेषां बालकानाम् अभिभावकाः एव जानन्ति। बौद्धिकभिन्नतानुरूपं बालकाः विभिन्नाः भवन्ति ते व्यक्तित्वस्य दृष्ट्या, अभिरुचीणां दृष्ट्या, अभिक्षमताणां दृष्ट्याः बालकाः वैयक्तिकभिन्नतां धारयन्ति। अतः संस्कृत-शिक्षायामपि शिक्षणं वैयक्तिकभिन्नतानुरूपं भवेत्। इदं केवलं शैक्षिकदृष्ट्या एव न स्यात् अपि व्यावसायिकदृष्ट्या अपि भवेत्।

संस्कृतशिक्षायां विविधपारम्परिकशिक्षणविषयाः भवन्ति यथा व्याकरणम्, साहित्यम्, दर्शनम्, वेदः, ज्योतिषम्, धर्मशास्त्रं च ऐते विषयाः परस्परम् असम्बद्धाः अथवा ऐतेषां सर्वेषां विषयाणां कृते पृथक्-पृथक् योग्यता आवश्यकी। तस्याः योग्यताया कृते तादृशी बौद्धिकक्षमता-व्यक्तित्वम्-अभिरुचि-अभिक्षमताणामपेक्षा भवति। निर्देशनस्य माध्यमेन प्रत्येकं शैक्षिकविषयस्य चयनकाले योग्यतानुरूपं निर्देशनं प्राप्तुं शक्यते। तथैव प्रत्येकं विषयस्य अध्ययनानुरूपं व्यावसायिक निर्देशनमपि प्राप्नोति छात्रः।

संस्कृतशिक्षायां निर्देशनस्य आवश्यकता अधोलिखित रूपेणस्ति–

१. परिवर्तितसामाजिकार्थिकदशाया अनुरूपं संस्कृतशिक्षायामपि निर्देशनमावश्यकम्।

२. औद्योगिकव्यावसायिकक्षेत्रेषु परिवर्तितायाः दशायाः कारणेन संस्कृतशिक्षायां निर्देशनम् आवश्यकम्।

३. जनसंख्यावृद्धेः कारणेन संस्कृतशिक्षायामापि निर्देशनमावश्यकम्।

४. सामाजिकसांस्कृतिकनैतिकमूल्येषु परिवर्तनस्य कारणेननिर्देशनमावश्यकम्।

५. धार्मिकविचारधारायां वृद्धेः कारणेन संस्कृतशिक्षायामपि निर्देशनस्यावश्यकता वर्तते। यतोहि अधुना भारतं हि सर्वधर्मसमभावस्यावश्यकता प्रतीयते।

६. समुचितस्यनियोजनस्य समस्याया समाधानार्थं संस्कृतशिक्षायां निर्देशनं परमावश्यकम्।

७. प्रजातन्त्रस्य लोकतान्त्रिकप्रणाल्याः रक्षार्थमपि संस्कृतशिक्षायां निर्देशनमावश्यकम्।

८. राष्ट्रस्यरक्षायाः कृते सैनिकानां चयनार्थमपि संस्कृतशिक्षायां निर्देशनमावश्यकम्। यतोहि संस्कृत शिक्षाया क्षेत्रे ये सैन्यसेवायां गन्तुमिच्छन्ति तेषां रुच्यादीनामनुरूपं चयनं स्यात्।

९. धर्मनिरपेक्षतायाः रक्षार्थमपि संस्कृतशिक्षायां निर्देशनमावश्यकम्।

१०. संस्कृतशिक्षायामपव्ययः अवरोधनं न स्यात्। अपव्यय-अवरोधनयोः निवारणार्थम् अपि निर्देशनस्यावश्यकताऽस्ति।

११. छात्रसंख्यायां वृद्धिसर्वत्रदृश्यते। सर्वे छात्राः स्वस्वयोग्यतारुच्यादीनामनुरूपं विषयाणां चयनं कुर्युः इत्यस्य कृते संस्कृतशिक्षायां निर्देशनमावश्यकम्।

१२. अनुशासनस्य समस्यायाः समाधानार्थं संस्कृतशिक्षायां निर्देशनमावश्यकम्।

१३. वैयक्तिकभिन्नतानुरूपं बालकाः विभिन्नविषयाणां चयनं कुर्युः, तदनुरूपं संस्कृतशिक्षायां निर्देशनमावश्यकम्।

१४. समायोजनस्यसमस्याा सार्वभौमिकसमस्या अस्ति। संस्कृतशिक्षायामपि छात्रेषु इयं समस्या दृश्यते। अस्या समस्यायाः समाधानार्थं निर्देशनस्यावश्यकता वर्तते।

१५. अवकाशकालस्य उपयोगं संस्कृतस्य छात्राः कुर्युः इतिमत्वाऽपि संस्कृतशिक्षायां निर्देशनमावश्यकम्।

१६. बालकानां व्यक्तित्वस्य विकासः संतुलितमात्रायां समुचितमात्रायां स्यात् इति विचार्य संस्कृत शिक्षायामपि निर्देशनस्य व्यवस्था स्यात्।

सर्वेषां पक्षाणाम् सर्वासाम् आवश्यकतानां परिप्रेक्ष्ये संस्कृतशिक्षायाः क्षेत्रे निर्देशनस्य समुचित-व्यवस्था स्यात्। यतोहि निर्देशनं सर्वेषां बालकानां कृते भवति केवलं औद्योगिक्याक्षेत्रे, केवलं विज्ञानस्यक्षेत्रे, केवलं व्यापारिकवाणिज्यिकक्षेत्रे च निर्देशनस्य आवश्यकता नास्ति। संस्कृतस्य शिक्षायां यानि अध्ययनस्य क्षेत्राणि सन्ति, यानि च व्यावसायिकक्षेत्राणि सन्ति तेषां सर्वेषां क्षेत्राणां विषये बालकेभ्यः छात्रेभ्यः निर्देशनमावश्यकम्। निर्देशनं च देयम् स्यात्। निर्देशनस्य व्यवस्था करणीया। निर्देशनकार्यक्रमाणां संचालनं स्यात्।

अस्य परिणामेन योग्याः छात्राः तेषु तेषु क्षेत्रेषु अध्ययनरताः भविष्यन्ति ते च सम्बन्धितानां व्यवसायानां चयनं करिष्यन्ति।

**सन्दर्भसूचीः–**

१. चौबे, सरयूप्रसादः (१९७९) ''निर्देशन एवं परामर्श'', विनोद पुस्तक मन्दिर, आगरा।

२. पाठक, पी.डी. (१९८३) ''निर्देशन एवं परामर्श के सिद्धान्त'', विनोद पुस्तक मन्दिर, आगरा।

३. सारस्वत मालती, (१९९) ''शिक्षामनोविज्ञान की रूपरेखा'', आलोकप्रकाशन, लखनऊ।

शिक्षाशास्त्रविभागः

राष्ट्रियसंस्कृत संस्थानम् जयपुरम्।

# संस्कृतशिक्षकाय शैक्षिकाभिकरणानां नियमानाञ्चपरिज्ञानम्

## (Knowledge of Educational Agencies and Rules for Sanskrit Teacher)

डॉ. शीशरामः

शिक्षकस्य स्थानं गौरवपूर्णमादर्शानुरूपञ्च भवति। यतोहि शिक्षकः न केवलं समाजस्य भाग्यनिर्माता, पथप्रदर्शकः, मनोवैज्ञानिकः दार्शनिकः, वैज्ञानिकः अपितु बालकस्य मित्रमपि भवति।

बालका स्वीयां समस्यामध्यापकस्य समक्षे प्रस्तुवन्ति, कदाचित् ताः समस्याः शिक्षणप्रक्रियया सम्बन्धिताः न भवन्ति अपितु प्रशासनिकनियमानां सम्बन्धिताः भवन्ति चेद् प्रायशः भाषाध्यापकाः तासां समस्यानां समाधाने समर्थाः न भवन्ति यतोहि तेषां ज्ञानं केवलं भाषायामुपरि भवति। तेषां चिन्तनं भवति यत् भाषाध्यापकस्य कृते भाषायाः ज्ञानमावश्यकम्, बालमनोविज्ञानस्य, शिक्षादर्शनस्य च ज्ञानमपि आंशिकरूपेण स्यात्, परं सामान्यतः शैक्षिकाभिकरणां नियमानाञ्च परिज्ञानं सम्यक्तया न भवति, येन ते प्रशासनिक प्रबन्धनदृष्ट्या च तादृशाः निपुणाः न भवन्ति यादृशाः अन्यविषयाध्यापकाः।

भाषाध्यापकेषु अपि संस्कृताध्यापकाः शैक्षिकाभिकरणां नियमानाञ्च ज्ञाने प्रायशः उदासीनाः एव भवन्ति यतोहि तेषां रुचिः संस्कृतसाहित्ये, व्याकरणे, कर्मकाण्डे, भाषाशास्त्रे, नीतिशास्त्रे, दर्शने, नक्षत्रशास्त्रे च भवति कदाचिद् वार्तालापे, संवादे, भाषणे, लेखने च भवति, परं प्रशासनिककार्येषु नियमेषु, संस्थासु च तेषां रुचिः न्यूना एव भवति, कारणं भाषां प्रति अनुरागः। अनेन कारणेन केचन अध्यापकाः नियमानां ज्ञानाभावे भाषानिपुणाः भूत्वापि सम्मानजनकं पदं न प्राप्नुवन्ति। कदाचित् शिक्षणसंस्थासु एतादृशानां शिक्षकाणां शारीरिक, मानसिक, आर्थिकशोषणमपि भवति। यतोहि उच्चाभिकरणानां नियमानाञ्च विषये तेषां ज्ञानं न भवति। कुत्र, केन प्रकारेण, कथञ्च परिवादं। कार्यवाही च करणीया, इति ते न जानन्ति, येन अन्ये जनाः तेषामुपहासं कुर्वन्ति। अतः स्वकीयाधिकराणां रक्षणाय, स्वाभिमानाय च भाषया सह शैक्षकाभिकरणानां नियमानाञ्च परिज्ञानमावश्यकम्।

संस्कृतशिक्षकाय सामान्यतः राष्ट्रिय अध्यापकशिक्षापरिषद् (NCTE) राष्ट्रिय शैक्षिकानुसन्धानप्रशिक्षणपरिषद् (NCERT), विश्वविद्यालयानुदानायोगः (UGC), राष्ट्रिय शैक्षिकयोजनाप्रशासनिकविश्वविद्यालयः (NUEPA), राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषद् (NAAC), जिलाशिक्षाप्रशिक्षणसंस्थानम् (DIET), शिक्षकशिक्षामहाविद्यालयः (CTE), शिक्षकप्रशिक्षणमहाविद्यालयाः (CTT), केन्द्रीयविद्यालयसंगठनम् (KVS), जवाहरनवोदयविद्यालयसमितिः (JNVS), शिक्षोच्चाध्ययनसंस्थानम् (IASE), राज्यशिक्षापरिषद्

(SBE), केन्द्रीयमाध्यमिकशिक्षणपरिषद् (CBSE), अखिलभारतीय तकनीकीशिक्षापरिषद् (AICTE) इत्यादीनामभिकरणानां ज्ञानमावश्यकम्।

एवेषामभिकरणानां कार्यक्षेत्रस्य, उत्तरदायित्वस्य नियमानाञ्च सामान्यज्ञानमावश्यकम्, येन यदा छात्राः इच्छन्ति तदा समुचितपरामर्शदाने अध्यापकः सक्षमः स्यात्। एतदतिरिच्य कार्मिकविभागस्य ये नियमाः सन्ति तेषां परिज्ञानमपि आवश्यकम्। यथाः– मातृत्वावकाशः(M.L.), पितृत्व-अवकाशः (P.L.), बालसुरक्षा-अवकाशः (CCL), चिकित्सावकाशः (ML), विशेषावकाशः (S.L.), उपार्जितावकाश (Earned Leave), अर्द्धवैतनिकावकाश (HPL), परिवर्तितावकाशः (C.L.), असाधारणावकाश (Extraordinary Leave), अध्ययनावकाश (S.L.), राज्यसेवा आचरणनियमाः(SCS Rules), अनुशासननियमाः (DR), केन्द्रीयलोकसेवा आचरणनियमाः (CCS Rules), वित्तीयनियमाः (FRS), अन्यनियमानाञ्च ज्ञानमपि संस्कृताध्यापकाय आवश्यकम्।

प्रायशः अध्ययनरताः छात्राः विभिन्नेषु अभिकरणेषु उच्चशिक्षायै नियोजनाय च आवेदनं कुर्वन्ति। कदाचित् ते अभिकरणस्य विषये सम्यक्तया न जानन्ति, एतदर्थं स्वीयाः समस्याः स्वकीय-अध्यापकस्य समक्षे प्रस्तुवन्ति। यदि अध्यापकः तस्य अभिकरणस्य स्थापनायाः, ऐतिहासिकपृष्ठभूमेः, उद्देश्यानां विषये, औचित्यविषये च जानाति तर्हि सः छात्राणां जिज्ञासायाः समस्यायाश्च समाधानं कर्तुं शक्नोति। सः तस्याः संस्थायाः विशेषतानां विषये छात्रान् परामर्शयति एवञ्च तस्याः संस्थायाः प्रवेशनियमाः, चयननियमाश्च के सन्ति तान् विषयेऽपि छात्राणां मार्गदर्शनं कर्तुं शक्नोति।

इदानीं जनाः व्यावसायिकपाठ्यक्रमाणां विषये सम्यकतया न जानन्ति, छात्राऽपि अनभिज्ञाः सन्ति। ते अन्यं दृष्ट्वा अनुकरणं कुर्वन्ति, येन यदा ते बालकाः पाठ्यक्रमे प्रविशन्ति तदा तेषां शोषणं भवति। यथा– शिक्षकप्रशिक्षणमहाविद्यालयाः, तकनीकी-अभियान्त्रिकी महाविद्यालयाः, आयुर्विज्ञानमहाविद्यालयाः, औद्योगिकप्रशिक्षणसंस्थानानि, निजिमहाविद्यालयाः, पब्लिकविद्यालयाश्च बालकानां शोषणं कुर्वन्ति। तस्य प्रमुखं कारणं शैक्षिकाभिकरणां नियमानां च ज्ञानस्याभावः। अतः शिक्षणसंस्थासु ये अध्यापकाः सन्ति तेषामुत्तरदायित्वं वर्तते यत् यथोचितावसरेषु छात्राणां मागदर्शनं कुर्युः। शिक्षणसंस्थासु के-के नूतननियमाः आगताः? कथञ्च तेषां नियमानां पूर्तिं कर्तुं शक्यते? इत्यादीनां विषये छात्राणां समक्षे परिचर्चा स्यात्, येन छात्राः अध्यापकाश्च जागरुकाः स्युः, तेषां शोषणं न स्यात्।

सम्प्रति बहवः विश्वविद्यालयाः महाविद्यालयाश्च अवैधरूपेण प्रचलन्ति। तेषां मान्यता सम्बद्धता च विश्वविद्यालयानुदानायोगेन (UGC), राष्ट्रियाअध्यापकशिक्षापरिषदा (NCTE), अखिलभारतीयतकनीकीशिक्षापरिषदा (AICTE), अखिलभारतीयायुर्विज्ञानसंस्थानेन (AIIMS), सह च न सन्ति तथाऽपि ते अवैधरूपेण छात्राणां प्रवेशं कृत्वा तेषां भविष्यं अन्धकारमयं कुर्वन्ति। इत्यस्य प्रमुखं कारणमस्ति जाग्रतेः अभावः, इयं जाग्रतिः अध्यापकानां सहयोगेन समाजे प्रसारिता

भविष्यति। अतः भाषाध्यापकाः शैक्षिकाभिकरणां नियमानाञ्च विषये जागरुकाः स्युः, यदि तेषां परिज्ञानं अस्मिन् क्षेत्रे भविष्यति चेद् कदापि छात्राणां कर्मचारिणां स्वकीयञ्च शोषणं न भविष्यति।

संस्कृतशिक्षाक्षेत्रे इदानीमपि एतादृशाः बहवः अध्यापकाः सन्ति, ते संस्कृताभिकरणानामतिरिच्य अन्याभिकरणानां विषये सम्यकृत्या न जानन्ति न च सेवानियमानां विषये तेषां दक्षता भवति, येन तेषां शोषणं शिक्षासंस्थासु अन्यविभागेष्वपि भवति। तस्य प्रमुखं कारणं आङ्गलभाषायामुल्लिखिताः नियमाः सन्ति, कदाचित् भाषान्तरणे अनुवादे च दोषः भवति, येन नियमानां सम्यक्ज्ञानं न जायते। अतः संस्कृतशिक्षकाय अधोलिखितानां ज्ञानमावश्यकम्–

१. संस्कृतेन सह हिन्दीभाषायाः आङ्गलभाषायाश्च ज्ञानं स्यात्।
२. अध्यापनेन सह प्रशासनिककार्याणामनुभवं स्यात्।
३. संस्कृताभिकरणैः सह अन्याभिकरणानां ज्ञानमपि स्यात्।
४. भाषानियमैः सह सेवानियमानामपि ज्ञानं स्यात्।
५. प्रमुखाणां शैक्षिकाभिकरणां विषये परिज्ञानं स्यात्।
६. विषयप्रबन्धनेन सह शैक्षिकप्रबन्धनस्यापि ज्ञानं स्यात्।
७. प्रमुखाभिकरणानां विशेषतानां मान्यतादीनाञ्च ज्ञानं स्यात्।
८. विभिन्नैः अभिकरणैः सह सम्पर्कः स्यात्।
९. स्वकीयाधिकारणां दायित्वानां (कर्त्तव्यानां) च ज्ञानं स्यात्।
१०. आधुनिकतकनीकीविषये ज्ञानं स्यात्।

उपर्युक्ताधारेण वक्तुं शक्यते यत् छात्राणां मार्गदर्शनाय, तेषां समस्यानां समाधानाय, जागरावर्द्धनाय, स्वस्य च कल्याणाय संस्कृतशिक्षकाय शैक्षिकाभिकाणानां नियमानाञ्च परिज्ञानमावश्यकम्।

**संदर्भग्रन्थाः–**

१. पाठक, पी.डी. (१९७४) : भारतीय शिक्षा और उसकी समस्याएँ, विनोद पुस्तक मन्दिर, आगरा-२
२. भटनागर, सुरेश (२००५) : आधुनिक भारतीय शिक्षा और उसकी समस्याएँ, आर.लाल. बुक डिपो, मेरठ
३. पाठक एवं त्यागी (१९७९, द्वितीय संस्करण), आधुनिक भारतीय शिक्षा का इतिहास, विनोद पुस्तक मन्दिर, आगरा-२
४. Swamy's Hand Book, 2019- Mathuswamy & Brinda

सहायकाचार्यः, शिक्षाशास्त्रविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
जयपुरपरिसरः, जयपुरम्

# संस्कृतशिक्षकः व्यावसायिकदक्षता च

डॉ. कुलदीपशर्मा

वृत्तेः चयनं जीवनस्य सर्वाधिकमहत्त्वपूर्णपक्षेषु भवति। अद्यतने प्रतियोगिताप्रधानेऽस्मिन् युगे सुखदभविष्यनिर्धारणाय प्रत्येकं जनः स्वयोग्यतानुसारेण व्यवसायविशेषस्य चयनं करोति। वृत्तेः चयनेन अस्माकं मूल्यानि, दृष्टिकोणः, प्रवृत्तयः इत्येतत्सर्वमपि प्रभावितं भवति। पुरा संस्कारवशादपि वृत्तेः चयनं विधीयते इत्यपि मन्यते स्म, यथा हि उक्तम्-

**तस्मिन् काले स्थापयेत् तत्पुरस्ताद्, वस्त्रं शस्त्रं पुस्तकं लेखनीं च,**
**स्वर्णं रौप्यं यच्च गृह्णाति, बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा।।**[१]

उत्तमशिक्षा, जीविका, जीवनस्तरः इत्येतेषां त्रयाणां कश्चन विशेषः सर्वज्ञातः सह-सम्बन्धो वर्तते। काव्यप्रयोजनेषु अर्थकृते इत्यनेन वचनेन विद्यया सह अर्थस्य नियोगः निर्दिष्ट एव। पञ्चतन्त्रादिग्रन्थेष्वपि विविधवृत्तीनां वैशिष्ट्यं बहुशः प्रतिपादितम्। 'अविद्यस्य कुतः सुखमि'ति वचननिर्देशात् उत्तमजीविकायै प्रत्येकं जनः महदध्ययनमाचरति। कठिनस्पर्धात्मके युगेऽस्मिन् 'नास्ति विद्यार्थिनः सुखम्', 'अर्थातुराणां न सुखं न निद्रा' इत्येतौ भिन्नप्रसङ्गौ अपि एकतानतां भजेते। 'अर्थकरी च विद्या' इति षट्सु सुखेषु चूडान्तसुखरूपेण वृत्त्यर्थं विद्या निगदितास्ति। उत्तमवृत्त्यर्थं व्यक्तौ केचन गुणाः अत्यन्तम् अनिवार्यतः स्युः। तद्यथा आचार्यविदुरेण भणितम् -

**वृद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च।**
**व्यवसायश्च यस्य स्यात् तस्य वृत्तिभयं कुतः।।**[२]

अर्थात् व्यक्तौ यदि उन्नतेः उत्कटेच्छा भवेत्, तस्मिन् प्रभावः, तेजः, वीरता, उद्योगः दृढनिश्चयश्चेत्येते गुणाः भवेयुस्तर्हि जीविकायाः अप्राप्तेः भयं कथं भवितुमर्हति?

किन्तु, परिवर्तिते काले यत्र प्रथमतः बालाः शिक्षां प्राप्य वृत्तिविषये चिन्तनं कुर्वन्ति स्म, तत्रैव अद्यत्वे प्रथमतः वृत्तिविषये चिन्तनं कृत्वा तदनुरोधेन शिक्षां प्राप्नुवन्ति। एवमेव आदौ जनाः वृत्तिपरिवर्तनं न कुर्वन्ति स्म, किन्तु साम्प्रतं तु निजीकरणस्य प्रभावे व्यावसायिकवृद्ध्यर्थं वृत्तिपरिवर्तनं जनानां सामान्यप्रवृत्तिरूपेण दृश्यते। अद्यत्वे बहुभिः परामर्शविशेषज्ञैः मनोविज्ञानिभिश्च बालकानां प्रवृत्ति-स्वभाव-सामर्थ्यादिकं परीक्ष्य तेभ्यः वृत्तिचयनार्थं परामृश्यते।

संस्कृतशिक्षायाः क्षेत्रमपि अस्मात् परिदृश्यात् नास्ति भिन्नतरम्। किन्तु, अद्यत्वे प्रमाणपत्रावाप्तिपरायणं शिक्षातन्त्रं छात्रान् निरुद्योगिरूपेण उत्पादयत्तिष्ठति। वस्तुतः अद्यत्वे ज्ञानशून्यः युववर्गः कञ्चिदुपाधिं प्राप्य नियुक्त्यर्थम् उच्चस्वरेण अभियाचनां करोति। किन्तु, उपाधिमात्रेण योग्यतायाः निर्धारणं साम्प्रतिके

युगे किञ्चिद् दुष्करमेव। अद्यत्वे प्रमाणपत्रेण नियोजनं दुर्लभमस्ति, तत्स्थाने कार्यनिष्पादनसामर्थ्यस्य (Performance) महत्त्वं वर्धितम्। विषयेऽस्मिन् गुणवत्तासंधारणस्यापि विषयः स्वतः समायाति। अत एव उपार्जिता विद्या सद्विद्या अर्थात् उत्पादिका (Productive) स्यात्, यथा हि पूर्वत एव परम्परायां दृश्यते-

सद्विद्या यदि का चिन्ता वराकोदरपूरणे।
शुकोप्यशनमाप्रोति राम रामेति च ब्रुवन्।।

शिक्षणवृत्तिः सर्वेषु व्यवसायेषु उत्तमा मन्यते, यतो हि एषा वृत्तिः वस्तुतः सेवाकार्यमस्ति। कीदृशः शिक्षकः स्यादित्यस्य प्रश्नस्य उत्तरे शिक्षकशिक्षायै राष्ट्रियपाठ्यचर्याप्रारूपम् (२००९) इत्यस्य केन्द्रीयभावे एव शिक्षकशिक्षायाः उद्देश्यं कथितमस्ति - Towards Preparing Professional and Humane Teacher अर्थात् व्यावसायिकरूपेण दक्षः मानवीयतान्वितः शिक्षकः निर्मातव्यः इति। आङ्ग्लभाषायां शिक्षकस्य कृते Teacher इत्यस्य शब्दस्य प्रत्येकमक्षरमादाय तस्य आवश्यकगुणानां सङ्केतग्रहं कर्तुं शक्यते, यथा हि-

| | | | | |
|---|---|---|---|---|
| T | - | Talented | - | प्रतिभाशाली |
| E | - | Energetic | - | ऊर्जावान् |
| A | - | Accurate | - | सटीकज्ञानवान् |
| C | - | Creative | - | सर्जनात्मकः |
| H | - | Helpful | - | सहायकः |
| E | - | Educated | - | शिक्षितः |
| R | - | Role-model | - | आदर्शः |

भारते तावत् डॉ. सर्वेपल्ली राधाकृष्णन्-महोदयस्य ०५ सितम्बर इति जन्मदिनं शिक्षकदिवसरूपेण सम्मन्यते, किन्तु विश्वशिक्षकदिवसः संयुक्तराष्ट्रसङ्घस्य तत्त्वावधाने १९९४ तः आरभ्य ०५ अक्टूबर इति दिनाङ्के समायोज्यते। यतो हि १९६६ तमे वर्षे अस्मिन्नेव दिनाङ्के यूनेस्को इत्यस्यां संस्थायां शिक्षकाणां स्थितौ चर्चा सञ्जाता। प्रसिद्धशिक्षाविदा डब्ल्यू. ए. वार्ड महोदयेन कथितमासीत् यत् - साधारणः शिक्षकः विषयं वदति। निपुणः शिक्षकः व्याख्याति। उत्कृष्टः शिक्षकः प्रदर्शयति। महान् शिक्षकः प्रेरयति।[3]

कथनस्यास्य प्रकाशे सुतरां ज्ञातुं शक्यते यत् शिक्षकस्य कार्यं केवलं कक्षायां विषयशिक्षणमेव नास्ति, अपि तु सन्नागरिकं निर्मातुं यत् किमपि करणीयम्, तत् सर्वमपि शिक्षकस्य दायित्वे समायाति।

**गुरुशिष्यसम्बन्धः**

वैदिकसंस्कृतेः गुरुशिष्यसम्बन्ध एव अभिमतोऽस्ति। अनयोः पूर्वापररूपे एकरूपतोच्यते, यथा-

**आचार्यः पूर्वरूपम् अन्तेवास्युत्तररूपम्।**
**विद्या सन्धिः। प्रवचनं सन्धानम्।**[४]

तथैव विवाहसंस्कारे **'मम व्रते हृदयं ते दधामी'**त्यस्य प्रजापतिदेवं प्रति लक्षितस्य मन्त्रस्य, विद्यारम्भसंस्कारे विद्यादेवं बृहस्पतिं प्रति परिवर्त्य गुरुशिष्ययोरेकमनोभावस्य सुन्दरं कल्पनं विहितमस्ति, यथा हि-

**मम व्रते हृदयं ते दधामि, मम चित्तमनुचित्तं ते अस्तु।**
**मम वाचमेकमना जुषष्व, बृहस्पतिष्ट्वा नियुनक्तु मह्यम्।।**[५]

एवमेव छात्रेभ्यः मातृवत् वात्सल्यभावस्य अपि अद्वितीयकल्पना द्रष्टव्या, यथा हि –

**आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।**
**तं रात्रीस्तिस्र उदरे बिभर्ति, तं जातं द्रष्टुमभिसंयन्ति देवाः।।**[६]

अर्थात् आचार्यः प्रथमतः जिज्ञासुं छात्रम् उपनयनसंस्कारमाध्यमेन रात्रित्रयं यावत् उदरे स्थापयित्वा पुनः प्रसूते, तं (अन्तेवासिनं विद्यार्थिनम्) द्रष्टुं देवाः अपि आगच्छन्ति। अत्र रात्रिः अज्ञानस्य प्रतीकरूपेण वर्तते। तिस्रः रात्र्यः अर्थात् आधिभौतिकम् अज्ञानम्, आधिदैविकम् अज्ञानम् आध्यात्मिकञ्च अज्ञानम् इत्येवंरूपेण कल्पयितुं शक्यते। यथा मधुलुब्धः भृङ्गः पुष्पात् पुष्पान्तरं गच्छति तथैव ज्ञानस्य अभिवृद्ध्यर्थं शिष्यः अपि एकस्मात् गुरोः अन्यं गुरुं गच्छेत्। यथोक्तम् –

**मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत्।**
**ज्ञानलुब्धस्तथा शिष्यः गुरोर्गुर्वन्तरं व्रजेत्।।**[७]

**संस्कृतशिक्षकस्य प्रकाराः**

प्रत्येकमपि शिक्षकः आत्मनि अद्वितीयः भवति। तस्य तुलना अन्येन केनापि शिक्षकेण कर्तुं न शक्यते। तथापि कार्यदृष्ट्या गुरूणां वर्गीकरणाय अधोनिर्दिष्टस्य श्लोकस्य आलोकं स्वीकर्तुं शक्नुमः, यथा हि-

**प्रेरकः सूचकश्चैव, वाचको दर्शकस्तथा।**
**शिक्षको बोधकश्चैव षडेते गुरवः स्मृताः।।**[८]

अर्थात् गुरवः षड्धा भवन्ति। यः प्रेरणां ददाति, सः प्रेरकगुरुः। यः सूचनां ददाति सः सूचकः गुरुः। यः उक्त्वा ज्ञापयति सः वाचकः गुरुः। यः अस्मासु परिष्काराय अस्मान् पश्यति तत्त्वं वा दर्शयति सः दर्शकः गुरुः। यः शिक्षां ददाति सः शिक्षकः गुरुः। यश्च बोधं कारयति सः बोधकः गुरुः इति। एवमेव शिष्यस्य वित्तस्य अपहारकाः गुरवः अधिकाः भवन्ति, तेषां चित्तस्य अपहारकाः अथवा चित्तापस्य अपहारकाः गुरवः दुर्लभाः सन्ति इत्यपि कथितम्, यथा हि-

**गुरवो बहवः सन्ति शिष्यवित्तापहारकाः।**
**दुर्लभोऽयं गुरुर्देवि शिष्यचित्तापहारकाः।।**[९]

**संस्कृतशिक्षकस्य व्यक्तित्वम्**

पवित्रा शिक्षकवृत्तिः अन्यव्यवसायानां तुलनायां धनदृष्ट्या तथा अतिशयरूपेण धनदात्री नास्ति। किन्तु अत्र यादृशः सम्माननं प्राप्यते, तत्तु अतुल्यमेव। वस्तुतः शिक्षकवृत्तिः सेवाकार्यं वर्तते। अतः शिक्षके नैतिकतायाः गुणस्य पराकाष्ठा भवेदेव। महाभारतेन ज्ञायते यत् आचार्यद्रोणेन अर्जुनाय स्वपुत्रस्य अश्वत्थाम्नः तुलनायाम् अधिकं कौशलं प्रदत्तम्। 'पुत्रात् शिष्यात् पराजयेत्' इति भावनया संस्कृतस्य शिक्षकः ज्ञानक्षेत्रे आत्मनः पराजयं पुत्रात् शिष्यात् च काङ्क्षति। पक्षपातेन विना शिष्यं पुत्रबुद्ध्या पाठयितुमपि शास्त्रस्य आदेशः समवलोकनीयः –

**अध्यापयेत् पुत्रबुद्ध्या शिष्यान् सन्मार्गवर्तिनः।**
**सर्वलोकहितैषी स्यात् पक्षपातविर्निमुखः।।**[१०]

**संस्कृतशिक्षकस्य शिक्षणकौशलम्**

संस्कृतशिक्षकः सर्वविधशिक्षणकौशलैः पुष्टः भवेत्। संस्कृतशिक्षणवेलायां शिक्षणेन सह तस्य आग्रहः भाषामाध्यमस्य रक्षायै अपि स्यात्, यथा हि उच्यते –

**नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया।**
**कथां गोष्ठीषु कथयन् लोके बहुमतो भवेत्।।**[११]

प्रारम्भे छात्राणां स्तरानुरूपं देशभाषया संस्कृतेन च मिश्रितभाषया पाठयेत्। शनैः शनैश्च संस्कृतमाध्यमस्य मात्रायां वृद्धिं कृत्वा छात्रेभ्यः संस्कृतं श्रोतुम् अवसरं कल्पयेत्। ततः यदा छात्राः संस्कृतभाषणे प्रेरिताः स्युः तदा स्वयम् अधिकं न उक्त्वा तेभ्यः वक्तुम् अधिकान् अवसरान् दद्यादिति। शिक्षकः समस्तशिक्षणविधीनां ज्ञाता विवेकशीलश्च भवेत्, येन सः शिक्षणे आवश्यकतानुरूपम् उपयुक्ततमं विधिं चेतुं शक्नुयात्। एवमेव शिक्षकस्य उत्तममूल्याङ्कनविधीनाम् अपि ज्ञानं स्यात्, यतो हि उत्तमतया मूल्याङ्कनेनैव शिक्षकः छात्रस्य स्तराभिवर्धनाय शिक्षणे गुणवत्तामानेतुं यत्नं करिष्यति।

**संस्कृतसंवर्धने शिक्षकस्य भूमिका**

**न ददात्याशिषं कोपात्प्रणताय च यो द्विजः।**
**विद्यार्थिने च विद्यां वै स गोहत्यां लभेद् ध्रुवम्।।**[१२]

प्रायशः अधिकांशविद्यार्थिनां संस्कृतभाषया सह औपचारिकः परिचयः संस्कृतभाषायाः कक्षायां भवति। अध्यापकं श्रुत्वैव छात्राः संस्कृतस्य व्यवहारमुखं परिचिन्वन्ति। अतः संस्कृतस्य विकासाय यावदधिकं संस्कृतशिक्षकः उद्यमं कर्तुं प्रभवति, तावत् अन्यः कश्चिदपि कर्तुं नार्हति। केचन शिक्षकाः आद्योपान्तरूपेण संस्कृतपाठ्यपुस्तकस्य विषयरूपेण पाठनमेव संस्कृतशिक्षणस्य सफलतां चिन्तयन्ति। इदं चिन्तनं पाक्षिकमेवेति। वस्तुतः संस्कृतं भाषा अपि अस्ति, अतः यावत् पर्यन्तं छात्राणां भाषार्जनं न जायते, तावत् शिक्षणस्य अभीष्टलक्ष्यस्य प्राप्तिः नैव भवितुमर्हति। अतः एतत् सुतराम् आवश्यकं यत् संस्कृतशिक्षकः

अध्येतृणां भाषार्जनाय विशिष्टरूपेण यत्नान् कुर्यादिति। एतदर्थं संस्कृतशिक्षकः अधोलिखितान् उपायान् कर्तुं प्रभवति, यथा हि –

१. शिक्षकः कक्षायाः अन्तः बहिश्च छात्रैः सह संस्कृतेन व्यवहारं कुर्यात्।

२. ये छात्राः संस्कृतभाषणे रुचिं प्रदर्शयन्ति, तेभ्यः अधिकं प्रोत्साहनं दद्यात्।

३. पाठ्यसहगामिगतिविधिषु संस्कृतभाषया कार्यक्रमाणाम् आयोजनं सम्पादयेत्।

४. दैनन्दिनजीवने उपयुक्तानां संस्कृतवाक्यानाम् अभ्यासं कारयेत्।

५. प्रतिदिनं संस्कृतस्य सुभाषितानि, वाक्यानि, सूचनाश्च सूचनापट्टे स्थापयेत्।

६. संस्कृतनाटकानि, दृश्य-श्रव्योपकरणानि च दर्शयित्वा वातावरणं कल्पयेत्।

७. संस्कृतसम्बद्धं सकारात्मकं वृत्तान्तं सूचयेत्।

८. दूरदर्शनेन, आकाशवाण्या सङ्गणकेन च संस्कृतं श्रोतुं वातावरणं निर्मायात्।

९. संस्कृतपाठ्यपुस्तकैः संस्कृतपत्रिकाभिश्च संस्कृतं पठितुं वातावरणं कल्पयेत्।

**सन्दर्भाः**

१. मुहूर्तचिन्तामणिः, ५-२२

२. विदुरनीतिः, ५/४१

३. The mediocre teacher tells. The good teacher explains. The superior teacher demonstrates. The great teacher inspires. William Arthur Ward, Thoughts of a Christian Optimist, Droke House, 1968 p. 16

४. तैत्तिरीयोपनिषद्, ७.३.२-३

५. पारस्करगृह्यसूत्रम्, २.२.१६

६. अथर्ववेदः, ११/५/३

७. कुलार्णवतन्त्रम्, १३/१३३

८. कुलार्णवतन्त्रम्, १३/१२८

९. कुलार्णवतन्त्रम्, १३/१०८

१०. महानिर्वाणतन्त्रम्, ८/११५

११. सरस्वतीकण्ठाभरणम्, २/१२

१२. ब्रह्मवैवर्तपुराणम्, प्रकृतिखण्डः १८७

सहायकाचार्यः, शिक्षाशास्त्रविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
जयपुरपरिसरः, जयपुरम्

# व्यावसायिकदक्षतायै संस्कृतशिक्षायां नियोजनम्

डॉ. दिवाकरमिश्रः

व्यावसायिकदक्षतासवर्धनाय संस्कृतशिक्षाया अस्याः नियोजनप्रक्रियायाश्च मीमांसाक्रमे - शिक्षणं किमिति? नियोजनम् नाम किम्? किम् अस्य स्वरूपम्? संस्कृतशिक्षकशिक्षायाः किं वैशिष्ट्यम्? कया रीत्या चात्र नियोजितकार्यक्रमाणाम् आयोजनम् इत्यादयाः प्रश्नाः अस्माकं सम्मुखे आपतन्ति।

भारतीयशिक्षणसरणीम् अनुश्रुत्य आधुनिक शिक्षाशास्त्रसरणीञ्चानुश्रृत्य एतेषां प्रश्नानां समाधानाभावे वयं संस्कृतशिक्षायां व्यावसायिकदक्षतां कल्पयितुं न शक्नुमः। अतो एतेषां प्रश्नानां समाधानव्याजेन क्रमशः प्रस्तूयते विवेच्य विषयः - तत्र सर्वप्रथमं **शिक्षा, शिक्षणम्, प्रशिक्षणञ्चेति** त्रयो परिभाषिकशब्दाः समासेन शिक्षाशास्त्रदृष्ट्या स्पष्ट्यते -

**शिक्षा - 'शिक्षते यया सा शिक्षेति'** अनया व्युत्पत्त्या शिक्षा शब्दो अद्यत्वे साधनत्वेनाङ्गीक्रियते।

**शिक्षणम्** - शिक्षणं एका अन्तः क्रिया वर्तते। इयं ही अन्तःक्रिया समाजिकदर्शनाश्रिता आयोजनप्रणाल्याश्रिता च भवति।

**प्रशिक्षणम्** - कस्यापि प्रदत्तकार्यस्य युक्तियुक्तरीत्या सम्पादनाय व्यक्तिविशेषस्य अभिवृत्तेः (दृष्टिकोणस्य), ज्ञानस्य, कौशलस्य, व्यवहारस्य च क्रमबद्ध विकासः प्रशिक्षणामिति उच्यते।

अत्रेदं ध्यातव्यमस्ति यत् शिक्षायाः प्रमुखतमं कार्यं छात्राणां ज्ञान - अवबोध-कौशलादिषु अभिवृद्धिं कुर्वता तेषां व्यवहारपरिवर्तनमस्ति। एवं सामान्यदृष्ट्या शिक्षा प्रशिक्षणयोर्मध्ये साम्यं अवलोक्यते। परं च उद्देश्यवैशिष्ट्यं व्यक्तिगतविभेदञ्चावलोक्य उभयोर्मध्ये सुस्पष्टं तात्विकञ्चान्तरं कर्तुं शक्यते। अत्रेदमपि अवधेयं यत् शिक्षा-प्रशिक्षणयोः साफल्याय या अन्तःक्रिया अस्माभिः क्रियते तामेव शिक्षणनाम्ना शिक्षाविद्भिः सम्बोध्यते। अतो अस्यां अन्तःक्रियायां उद्देश्यलेखन-विधि-प्रविधि-मूल्यांकनादिसम्बद्धाः सर्वाः क्रियाः अनिवार्यरूपेण संपृक्ताः स्युरिति। आसाम् अभावे न तु छात्राणां व्यवहारपरिवर्तनं कल्पयितुं शक्नुमः, नहि संस्कृत शिक्षायां व्यावसायिकदक्षतासंवर्धयितुं शक्नुमः।

शिक्षणं किमिति? जिज्ञासायां सामान्यतया विविधविषयानां उपदेशः, ज्ञान-प्रदानम्वा स्वीक्रियते। परं च शिक्षाशास्त्रदृष्ट्या शिक्षणम् एकः सामाजिकः सम्प्रत्ययः अस्ति। अत्र सामाजिक दार्शनिक-प्राशासनिक-मनोवैज्ञानिक-तत्वानि सन्निहितानि भवन्ति। इमानि तत्वानि शिक्षायाः संकुचितस्वरूपं जनयति। अत्र शिक्षणं पूर्वनियोजितशिक्षणाय च औपचारिक-साधनानां प्रयोगो भवति।

भारतीय-चिन्तने शिक्षाशब्दस्य पर्यायत्वेन विद्या. ज्ञानमित्यनयोः शब्दयोः प्रयोगो भवति । परमत्रापि केवलेन पाठेन उपदेशेन वा विद्योपयुक्ता न मन्यते। **महाभाष्यकारेण भगवता पतंजलिना** उक्तं महाभाष्ये - **'चतुर्भिश्च प्रकारे विद्योपयुक्ता भवति** -आगमनकालेन, स्वाध्यायकालेन,

प्रवचनकालेन, **व्यवहारकालेनेति।'** शिक्षणायोजनस्य अत्यन्तं तार्किक प्रणालीयुतं, वैज्ञानिकं चैतत् भारतीयं निदर्शनम्।

एवमेव पाश्चात्य – विदुषा **'मानेनापि'** (Mann) उक्तम् – Teaching is not telling, but training. शिक्षणस्य स्वरूपं प्रतिपादयन् **'जोसेफ लैण्डन'** (Joseph Landon) महोदयो कथयति– There is much more in teaching that more method of presentment of knowledge

अनेनेदं स्पष्टं भवति यत् व्यावसायिकदक्षतायै पूर्वं संस्कृतशिक्षकैः शिक्षणस्य ततः नियोजनस्य च वास्तविकस्वरूपम् अवगन्तव्यम् यतः, कस्यापि वस्तुनः क्रियाया वा स्वरूपज्ञानं विना तस्य वस्तुनः क्रियाया वा विवेचनम् आयोजनभ्वा युक्तियुक्तरीत्या कर्तुं न शक्यते। वस्तुतः, शिक्षणं केवल ज्ञान-प्रदानं नहि, शिक्षणं तु – **सम्बन्धस्थापनम्, सूचनाप्रदानम्, वातावरणेन सह** अनुकूलनम्, **प्रेरणा प्रदानम्, संवेगानां प्रशिक्षणम्** क्रियाशीलतायाः **अवसरः, अधिगमसंगठनम्,** मार्गदर्शनञ्चास्ति। एवं वि/द्मस्य व्यापकस्य शिक्षणस्वरूपस्य व्यावहारिकज्ञानाय अत्र शिक्षणप्रक्रियायां विविधक्रियाणां नियोजनम् आयोजनं च क्रियते। अतो संस्कृतशिक्षकशिक्षायां व्यावसायिकदक्षतायै संस्कृतशिक्षकेभ्यः नियोजनप्रक्रियायाः आयोजनप्रविधेश्च ज्ञानं नितान्तमावश्यकमस्ति। एतदर्थं **बालप्रकृतेः, स्वस्य, विषयस्य, रूचेः, स्वप्रभावस्य, जीवनदर्शनस्य विषयप्रतिपादनस्य** च ज्ञानं संस्कृतशिक्षकेभ्यः अपरिहार्यम् भवति। एतेषाम् अभावे स्वछात्रैः सह सम्बद्धस्थापने ते सक्षमाः न भविष्यन्ति। एवं परस्परसम्बन्धाभावे व्यावसायिकदक्षतां कल्पयितुं न शक्यते।

शिक्षणं एका कला अस्ति। कलासु नैपुण्याय अभ्यासस्य आवश्यकता भवति अभ्यासाय च कलासम्बद्धसोपानानां युक्तियुक्तरीत्या नियोजनम् उपयुक्तविधिना चैतेषाम् आयोजनमपरिहार्यमिति। अतो संस्कृतशिक्षकशिक्षायां **व्यावसायिकदक्षतायै पूर्व शिक्षणक्रियाणां नियोजनं ततश्च नियोजितानां क्रियाणाम् उद्देश्यानुगुणम् आयोजनं कर्तव्यम्।** एतत् नियोजनं संस्कृतशिक्षकाः क्रमशः संस्कृतभाषाप्रकृत्यागुणं **शिक्षणकार्य विश्लेष्य, शिक्षणाधिगमोद्देश्यानि च व्यावहारिकस्वरूपे विलिख्य** कर्तुं शक्नुवन्ति। एतत् कार्यविश्लेषणं त्रिधाकर्तुं शक्यते– **पाठ्यवस्तुविश्लेषणम्, कार्यविश्लेषणम्, कौशलविश्लेषणञ्चेति।** तत्र पाठ्यवस्तुविश्लेषणे बौद्धिकपक्षस्य, कार्यविश्लेषणे क्रियात्मकपक्षस्य कौशलविश्लेषणे च **कलापक्षस्य** समावेशः कर्तव्यः। अतो पाठ्यपुस्तकविश्लेषणानन्तरं

अत्रेदमवधेयमस्ति यत् शिक्षणं एका सोद्देश्या प्रक्रियास्ति। अतो संस्कृतशिक्षकैः शिक्षणोद्देश्यानां निर्धारणं कर्तव्यम्। एतद्धि शिक्षणोद्देश्यं द्विधा भवति – शैक्षिकोद्देश्यं शिक्षणोद्देश्यञ्च। शैक्षिकोद्देश्यानां सम्बन्धः **शिक्षाया विविधैः स्तरैः** सह भवति तु शिक्षणोद्देश्यानां **कक्षाशिक्षणेन** सह। वस्तुतः शिक्षणोद्देश्यानां साहाय्येन शैक्षिकोद्देश्यानि प्राप्तयन्ते यतः, शिक्षणोद्देश्यानां सम्बन्धः छात्राणां व्यवहारपरिवर्तनेन सह भवति। शिक्षणोद्देश्यं **प्रत्यक्षं, विशिष्टं, व्यवहारिकञ्च** भवति। अपरेषु शब्देषु शिक्षणोद्देश्यानां प्रत्यक्षसम्बन्धः अधिगमोद्देश्यैः सह भवति अधिगमोद्देश्यानां च छात्राणां व्यवहारपरिवर्तनेन सह। एतदर्थ **'बी.एस. ब्लूम'** महोदयैः स्वीये 'Texonomy of Educational

objectives of cognitive domain' इत्याख्ये पुस्तके **ज्ञानात्मक-भावात्मक क्रियात्मकभेदेषु** अधिगमोद्देश्यानि त्रिधा विभज्य, **ज्ञान-बोध-प्रयोग-विश्लेषण-संश्लेषण-मूल्यांकनादिषु** षट्सु स्वरूपेषु ज्ञानात्मकोद्देश्यस्य व्यापक स्वरूपमुपस्थापितम्। एवमेव 'रॉबर्ट मेगर' महोदयैः शिक्षणस्य ज्ञानात्मक-भावात्मकपक्षयो उद्देश्यानां व्यावहारिक लेखनस्य, रॉबर्ट मिलर महोदयैश्च शिक्षणस्य क्रियात्मकपक्षसम्बद्धानाम् उद्देश्यानां व्यावहारिकलेखनस्य यत् उपमानमुपस्थापितं तमनुगम्य क्षेत्रीयशिक्षामहाविद्यालयमैसूरुद्वारा शिक्षणोद्देश्यलेखनस्य R.C.E.M. System इति यः भारतीयः प्रारूपः प्रतिपादितः तस्य मूलभावनां स्वीकृत्य संस्कृतभाषाप्रकृत्यानुगुणं तन्नियोज्य च शिक्षायोजनं कर्तव्यमिति।

अत्रेदम् अवधेयमस्ति यत् वर्तमानसमये संस्कृतं जनभाषा नास्ति, जनभाषायै अस्माभिः प्रयतते। सम्प्रति सांस्कृतिकभाषारूपेण इयं भाषा पठ्यते पाठ्यते च। संस्कृतभाषाया इयं सांस्कृतिकी मान्यता न केवलं अस्याः **प्राचीनतायाः** प्रतिफलमपितु, अस्याः **विपुलवाङ्मयस्य, वैज्ञानिकतायाः, सातत्यतायाश्च** प्रतिणामो वर्तते। अतो **अद्यत्वे संस्कृताध्ययनं प्रति जनेषु अभिरूच्योत्पादनाय विषय-सहसम्बन्धम् आश्रित्य अन्तर्विषयीयोग्यतासम्पन्नानां संस्कृशिक्षाकाणां सर्जनम् आवश्यकमस्ति।** केवलेन भाषाध्यापकसर्जनेन न तु संस्कृतशिक्षायां व्यावसायिकदक्षतां आगमिष्यति नहि संस्कृतस्य सर्वतान्त्रिकी स्वीकृतिः। अतः संस्कृतशिक्षायां व्यावसायिकदक्षतायै शिक्षणायोजनस्य भारतीयसरणीम् आधुनिकशिक्षाशास्त्रसरणीञ्च विज्ञाय **समाहारविधिना** संस्कृतशिक्षणाधिगमप्रक्रियायां कार्यक्रमाणां क्रियाणाम्वा आयोजनं कर्तव्यम्।

विंशति शताब्द्यां मनोवैज्ञानिकाध्ययनैः तत्त्वमिदं प्रकाशे आगतं यत्, **ज्ञानं अविभाज्यं भवति।** अतो **विविधविषयेषु सहसम्बन्ध स्थाप्य ज्ञानं प्रदातव्यम्।** विषयानां पृथक्-पृथक् ज्ञान-प्रदानं अमनोवैज्ञानिकम् अव्यावहारिकञ्चास्ति।

वस्तुतः, संस्कृतशिक्षायां व्यावसायिकदक्षतासंवर्धनाय सहसम्बन्धाश्रितं 'जिल्लर' (Ziller) प्रतिपादितं केन्द्रीयकरणसिद्धान्तम् (Principal of Cancentretion) उपयुज्य कृतं शिक्षणायोजनं नूनं फलप्रदं भविष्यति। सिद्धान्तेऽस्मिन् कमपि विषयमेकं केन्द्रबिन्दुं मत्वा सहसम्बन्धमाश्रित्य अन्येषां विषयानां शिक्षणं केन्द्रीयविषयानुगुणं क्रियते। **अस्य सिद्धान्तस्य प्रयोगाय संस्कृतभाषा, अस्याः साहित्यञ्च उपयुक्ततमं वर्तते।** यतः, संस्कृतभाषया सह न केवला अन्या भारतीय-भाषा सम्बद्धास्ति, अपितु संस्कृतवाङ्मयवर्णिताः विषया अपि विविधविद्यालयीयविषयैः सह सम्बद्धितास्सन्ति। **यदि वयं संस्कृतवाङ्मयवर्णितानां ज्ञान-विज्ञानानां विविधविद्यालयीयविषयैः सह सहसम्बन्धं संस्थाप्य स्तरानुगुणं पाठ्य-पुस्तकानि च निर्माय भारतीयपद्धत्या, आधुनिकशिक्षाशास्त्रपद्धत्या च समाहारविधिना शिक्षणायोजनं** कुर्मस्तु नूनं संस्कृतशिक्षायां व्यावसायिकदक्षतायाः विकासः भविष्यति।

**यथा :–**

- विविधभारतीयभाषाभिः सह सहसम्बन्धं संस्थाप्य संस्कृतभाषायाः शिक्षणं कर्तव्यम्।

- भूगोल इति विषयेन सह सहसम्बन्धं संस्थाप्य आर्यभट्टीय-सिद्धान्तशिरोमणि-सूर्यसिद्धान्त-मेघदूत-कादम्बरीत्यादीनां ग्रन्थानां शिक्षाणायोजनम्।
- आधुनिविद्यालयीयविषयेन इतिहासेन सह सहसम्बन्धं संस्थाप्य राजतरंगिणी-हर्षचरित दशकुमारचरित-मृच्छकटिकादीनां शिक्षणायोजनम् कर्तव्यम्।
- प्रबन्धनविषयेन सह सुसम्बद्ध्य गीतायाः शिक्षणम् कर्तव्यम्।
- विज्ञानविषयेन सह सहसम्बन्धं विधाय आयुर्वेदस्य, ज्योतिषशास्त्रीयग्रन्थानां च शिक्षणायोजनम् कर्तव्यम्।

एवमेव अर्थशास्त्रविषयेन सह कौटिल्यकृतम् अर्थशास्त्रम्, गणितविषयेन सह सिद्धान्तशिरोमणीम्, किं बहुना हस्तकला-चित्रकला-प्राकृतिकविज्ञान-राजनीतिविज्ञान-नागारिकशास्त्रादिभिः विद्यालयीयविषयैः सह तत्सम्बद्धं संस्कृतवाङ्मयं सुसम्बद्ध्य यदि शिक्षाशास्त्ररीत्या शिक्षणायोजनं करिष्यते चेत्, नूनं संस्कृतशिक्षायां व्यावसायिकदक्षतायाः विकासः भविष्यतीति।

**संदर्भाः-**


१. पतञ्जलिः, महाभाष्यम्-पश्पशाह्निकम्।
२. पाठक पी.डी., सफल-शिक्षण-कला, प्रथम-खण्डः, त्यागी जी.एस.डी. द्वितीयोऽध्यायः- 'शिक्षणस्यार्थः स्वरूपश्च'।
३. Landon Joseph : The Principles and Practices of Teaching P.25
४. Bloom B.S. : Texonomy of Educational objectves of Cognitive domain
५. मेगर रॉबर्ट : प्रतिपादितं उद्देश्यलेखनोपमानम्।
६. मिलर रॉबर्ट : प्रतिपादितं उद्देश्य लेखनोपमानम्।
७. क्षेत्रीयशिक्षामहाविद्यालयमैसूरद्वारा प्रतिपादितः - R.C.E.M. System
८. राष्ट्रीय पाठ्यचर्या-प्रारूपः-२००५ : - २.४.४ नियोजनोपागमाः, ५.५.२ नवाचारवर्धनम् २.९ विकासमूलकविचाराश्च।
९. NCTE (Curriculum Frame work 2014)
१०. डॉ. ओबराय एस.सी., शैक्षिक तथा व्यावसायिक निर्देशन एवं परामर्श
११. डॉ. शर्मा आर.ए., शैक्षिक एवं व्यावसायिक निर्देशन तथा परामर्श
१२. डॉ. जायसवाल सीताराम, शिक्षा में निर्देशन और परामर्श
१३. डॉ. शर्मा, आर.ए., शिक्षण तकनीकी
१४. UGC Guidelines on Adoption of Elective Course and Foundation Course.



सहायकाचार्यः, (शिक्षाशास्त्रविभागः)
जगद्गुरुरामानन्दाचार्यराजस्थानसंस्कृतविश्वविद्यालयः,
जयपुरम्

# न्यायशास्त्रस्य शिक्षणेऽधिगमे चोपकारकत्वम्

डा. देवदत्त सरोदे

**प्रस्तावना** – प्राचीनकालादारभ्य मानवस्य जिज्ञासा, सत्यान्वेषणप्रवृत्ति: विद्यत एव ,तस्यादिमं प्रमाणं ऋग्वेदस्य नासदीयसूक्तं, यत्र मानवस्य स्वाभाविकी जिज्ञासा, गूढ़दार्शनिकविचारा:, सत्यान्वेषणशीलता, ब्रह्माण्डरहस्यविषये कुतुहलता च दृश्यन्ते। सत्यज्ञानं, यथार्थबोधो वा ज्ञानसाधनं प्रमाणमन्तरेणाशक्यम्, अत एव भाष्यकार: वात्स्यायन: आह प्रमाणैरर्थपरीक्षणं न्याय: इति सर्वमेतत् न्यायशास्त्रे विस्तरेण प्रपञ्चितम्।

सनातनवैदिकपरम्परायां सर्वा: विद्या: सर्वज्ञानं वेदादेव निष्पन्नमिति आमनन्ति विपश्चिद्वरा:, मनुरप्याह सर्वज्ञानमयो हि स:, अत:वेदेभ्य: वेदाङ्गानि, दर्शनशास्त्राणि नानाशास्त्राणि नैके विद्या: कला: शिल्पानि विकसितानि। तदेतद् ज्ञानस्य, कलानां शिल्पानां नानाविद्याशाखानामुत्कर्ष: शिक्षणपरम्परां विना शिक्षणव्यवस्थामन्तरेण सर्वथा दु:शकम्। शिक्षणव्यवस्थायां शिक्षणाधिगमप्रक्रियायां न्यायशास्त्रस्य न्यायबीजानामपि असाधारणमहत्त्वमस्ति इति प्रतिभाति, अस्मिन् पत्रे न्यायशास्त्रस्य शिक्षणेऽधिगमे चोपकारकत्वमधिकृत्य विचारो विधीयते।

न्यायशास्त्रं षट्सु वैदिकदर्शनेषु अन्यतमं दर्शनं विद्यते। अस्य प्रणेता अक्षपादगौतम: अस्ति। एतत् शास्त्रं पञ्चसु अध्यायेषु विभक्तमत्र प्रत्यध्यायं आह्निकद्वयमस्ति एवमाहत्य दशाह्निकानि, ५२२ सूत्राणि च सन्ति। अस्य प्रसिद्धं प्रामाणिकं भाष्यं वात्स्यायनभाष्यमस्ति। न्यायो नाम नीयते विवक्षितार्थ: अनेन इति न्याय:। प्रत्यक्षागमाश्रितमनुमानम्, साऽन्वीक्षा। प्रत्यक्षागमाभ्यामीक्षितस्यार्थस्यान्वीक्षणमन्वीक्षा तया प्रवर्तते इत्यान्वीक्षिकी अत: अनुमानप्रमाणप्रधानं न्यायशास्त्रम् एतदेव न्यायविद्या, वाकोवाक्यम्, आन्वीक्षिकी, तर्कशास्त्रम्, हेतुविद्या, वादविद्या, प्रमाणशास्त्रम् इति नाना नामभि: अभिधीयते। न्यायविद्याया: महत्त्वं ख्यापयन् भाष्यकार: एवमाह...

**प्रदीप:सर्वविद्यानामुपाय:सर्वकर्मणाम्।**
**आश्रयसर्वधर्मणां विद्योद्देशे प्रकीर्तिता॥**

अनेन सुतरामेतत् प्रतीयते यत् इयं न्यायविद्या सर्वज्ञानप्रकाशाय, सकलकलाविद्याशिल्पप्रकाशाय प्रदीप इव राजते, यथा सुदीप्त: प्रदीप: स्वीयप्रकाशेन सर्ववस्तुग्रामं प्रकाशयति तद्वद् इयम् आन्वीक्षिकी सर्वविद्या: प्रकाशयति। सर्वकर्मणाम् उपाय अथवा साधनीभूतमिदम्। इदं तर्कशास्त्रम् सर्वधर्माणामाश्रयस्थानं विद्यते, धर्मकर्मादिषु सति संशये सदसद्विवेकाय न्यायविद्यैव कल्पते। तथा च मनुराह–यस्तर्केणानुसन्धत्ते स धर्म: नेतर:, गीतायां भगवान् उवाच–

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**

**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ गीता .१६.२४**

**न्यायशास्त्रे षोडशपदार्थाः** परिकीर्तिताः ते च प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानि इति। एतेषां षोडशपदार्थानां लक्षणपुरस्सरं सामान्यपरिचयस्तावत्–

**प्रमाणम्** – प्रमीयते अनेन इति प्रमाणम्। तथा च भाष्यम् – **उपलब्धिसाधनानि प्रमाणानीति प्रमीयतेऽनेनेति** करणार्थाभिधानो **हि प्रमाणशब्दः चत्वारि प्रमाणानि, तानि प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः** इति

**प्रमेयम्** – प्रमाणैर्यत् प्रमीयते तत् प्रमेयम् तथा च भाष्यम्– **किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति? तदुच्यते आत्माशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफ़लदुःखापवर्गास्तु प्रमेयम्।**

**संशयः– समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषाक्षेपो विमर्शः संशयः।**

संशयः उभयकोटीस्पृग्ज्ञानं संशयः इदम् वा स्यात् तद् वा इति योगशास्त्रे।

शिक्षाशास्त्रे छात्रस्य अधिगमः प्रधानप्रयोजनम्, अधिगन्तुः अधिगमावसरे छात्रः क्वचित् संशेते, तस्य संशयनिवारणम् आवश्यकं तदर्थं छात्रस्य संशयं विज्ञाय संशयो निवारणीयः।

**प्रयोजनम्** – यमधिकृत्य प्रवर्तते तत्प्रयोजनम्।

**दृष्टान्तः**– लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः।

शिक्षणावसरे विषयसुखबोधाय लोकप्रसिद्धोदाहरणं प्रस्तौति अध्यापकः, येनच्छात्राःत्वरितं पाठ्यविषयं, कठिनांशं वा जानीयुः।

**सिद्धान्तः– तन्त्राधिकरणाभ्यामभ्युपगमसंस्थितिः सिद्धान्तः।**

**अवयवाः – प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः।**

साध्यनिर्देशः प्रतिज्ञा।

उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः।

साध्यसाधर्म्यात्तद्धर्मभावि दृष्टान्तः उदाहरणम्।

उदाहरणाक्षेपस्तथेति उपसंहारो न तथेति वा साध्यस्य उपनयः

हेत्वदेशात्प्रतिज्ञाया; पुनर्वचनं निगमनम्

**तर्कः – अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः**

**निर्णयः – विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः**

**वादः** - प्रमाणतर्कसाधनोपालम्भःसिद्धान्ताविरुद्धपञ्चावयवोपपन्नः **पक्षप्रतिपक्षपरिग्रहो वादः**
**जल्पः** - यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपलम्भो **जल्पः**
**वितण्डा** - **स** प्रतिपक्षस्थापनाहीनो **वितण्डा**
**छलम्**- वचनविघातोऽर्थविकल्पोपपत्त्या **छलम्**
**जातिः** - साधर्म्यवैधर्म्याभ्यां **प्रत्यवस्थानं जातिः**
**निग्रहस्थानम्** - विप्रतिपत्तिरप्रतिपत्तिश्च **निग्रहस्थानम्**

एतेषु षोडशपदार्थेषु प्रमाणम्, प्रमेयपदार्थाः, संशयः, प्रयोजनम् , दृष्टान्तः, सिद्धान्तः,पञ्चावयवाः (प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनम्), तर्कः, वादःइति पदार्थाः शिक्षणव्यवस्थायां शिक्षणाधिगमप्रक्रियायां भृशं प्रयुज्यन्ते उपकुर्वन्ति च।

प्रमाणैरर्थपरीक्षणं न्यायः इत्युक्तत्वात् , किन्नाम प्रमाणम् ? को नु खलु अर्थः? परीक्षणपद्धतिः का? इति जिज्ञासायाम् उच्यते, प्रमीयते अनेन इति प्रमाणम्, प्रमाणैर्यत् प्रमीयते तत् प्रमेयम् अविज्ञातार्थतत्त्वं नाम प्रमेयम्, स एव अर्थः अविदितविषयः।

प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्याद् अर्थवत्प्रमाणम् इति भाष्ये उक्तत्वात् प्रमाणममन्तरेण अर्थबोधः असम्भवः तथा चोक्तम् मानाधीना मेयसिद्धिः। चतुर्भिः प्रकारैःप्रमाणैः अर्थपरीक्षणम्(प्रमेयपरीक्षणम्) भवति अथवा प्रमेयपदार्थाः बुध्यन्ते।

**प्रमाणानि** - षड्दर्शनेषु प्रमाणसङ्ख्याभेदो दृश्यते इह न्यायशास्त्रे चत्वारि प्रमाणानि , तानि प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः इति इमानि चत्वारि ज्ञानागमसाधनानि , लोके यावत् ज्ञानदानादानं प्रवर्तते तस्य मूलम् इमानि प्रमाणानि।

अथ किन्नाम प्रत्यक्षम् ? इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् इति
**इन्द्रियार्थसन्निकर्षोत्पन्नंज्ञानम्अव्यपदेश्यम्( निर्विकल्पम् )अव्यभिचारि( विपर्ययरहितम्,यथार्थम्) व्यवसायात्मकम्( सविकल्पम् ) प्रत्यक्षम्।**

**अथ तत्पूर्वकं** त्रिविधमनुमानम् **तच्च त्रिविधम् पूर्ववत् शेषवत्, सामान्यतोदृष्टञ्च** अनुमानमपि प्रत्यक्षमालम्बनीकृत्य प्रवर्तते व्याप्त्याधारेण अनुमिनोति अनुमाता पर्वतो वह्निमान्, धूमत्वात् इति

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् यथा - गौरिव गवयः

उपमानम् - वाच्यवाचकभावेन सादृश्याधारेण यो बोधो जायते तद् उपमानम्।

अथ चतुर्थप्रमाणम् शब्दप्रमाणम्,

उक्तप्रमाणत्रयस्य दौर्बल्यमुररीकुर्वन् शब्दप्रमाणस्य माहात्म्यं वर्णयन् हरिराह–

हस्तस्पर्शादिवान्धेन **विषमे पथि धावता।**
अनुमानप्रधानेन **विनिपातो न दुर्लभः॥**

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥**

आप्तोपदेशः शब्दः, स द्विविधो दृष्टादृष्टार्थत्वात्। आप्तो नाम यथार्थवक्ता अधिगन्तुः (प्रमातुः)अधिगमः -अधिगमः,बोधःअथवा प्रमितिः एतदेव इह बुद्धिर्ज्ञानम् वा आह सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् - सा द्विविधा स्मृतिरनुभवश्च संस्कारमात्रं जन्यं ज्ञानं स्मृतिः। एतदेव योगभाष्यकारः एवं दृढ़यति वृत्तिभि; संस्काराः संस्कारैश्चवृत्तयःएवं वृत्तिसंस्कारचक्रमनिशमावर्तते इति।

स्मृतिभिन्नं ज्ञानमनुभवः। स द्विविधः यथार्थः अयथार्थश्च अयमधिगमः द्विधा भवितुमर्हति यथार्थाधिगमः मिथ्याधिगमः तद्वति तत्प्रकारकोऽनुभवो यथार्थः। सैव प्रमा इत्युच्यते।

तदभावति तत्प्रकारकोऽनुभवोऽयथार्थः। सैवाप्रमा इत्युच्यते। योगशास्त्रे एषा अप्रमा विपर्ययवृत्तिः अथवा मिथ्याज्ञानम् भवति

यथार्थानुभश्चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात्, तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्द भेदात् ज्ञानम् अथवा अनुभवो (बोधः)द्विधा उत्पद्यते, पूर्वसञ्चितस्मृत्या अथवा प्रमाणचतुष्टयेन वा ज्ञाता-प्रमाता, ज्ञेयम्-प्रमेयम्, ज्ञेयसाधनम्-प्रमाणम्, ज्ञानम्- प्रमितिः, प्रमा (यथार्थः अयथार्थः)इति शिक्षणे प्रमुखानि तत्त्वानि शिक्षाशास्त्रस्य न्यायशास्त्रस्य च तत्त्वानां तात्त्विकसाम्यमथवा नामान्तरमेव तद्यथा

**प्रमाता**- अधिगन्ता, विद्यार्थी

**प्रमेयम्** - विद्या - पराविद्या, अपराविद्या(शास्त्राणि)

**प्रमितिः**- अधिगमः,बोधः

**प्रमाणम्** - प्रवचनम् , ज्ञानागमसाधनानि, निरीक्षणम् , लिखितशास्त्रम्

शिक्षाशास्त्रे शिक्षणस्य प्रधानं लक्ष्यं छात्रस्याधिगमः स च अधिगमः केनोपायेन अस्माभिः प्राप्तव्यः इति प्रथमः कल्पः।

न्यायशास्त्रस्य प्रधानं प्रयोजनम् - अधिगन्तुः प्रतिपत्तिः बोधो वा अथवा सन्देहनिवारणम्। छात्रस्य सन्देहनिवारणाय यथार्थबोधाय परार्थानुमानाय तर्काधारेण पञ्चभिरवयवैः निर्णयः क्रियते, तत्त्वं बोध्यते। प्रमेयज्ञानं प्रमाणेन भवति अतः उक्तं हि मानाधीना मेयसिद्धिः इति, प्रमाणानि चत्वारि प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः इति एतेषु , प्रत्यक्षं किं प्रमाणमिति प्रत्यक्षस्य तथा स्पष्टीकरणं नापेक्षितं प्रत्यात्मवेदनीयत्वात्, अनुभवसिद्धत्वात् , ततः परं द्वितीयं प्रमाणम् अनुमानम् किं नु खलु अनुमानम् ? अनु+मा+अनम् अनु उपसर्गः मा -धातुः, करणार्थे अन् (ल्युट्)प्रत्ययः। अनु पश्चात् मा( धातोरर्थः ज्ञानम्)= बोधः अर्थात् पश्चाद् जायमानो बोधः, तस्य बोधस्य यद् असाधारणं कारणं तदनुमानम् , पूर्वं विद्यमानं यत् प्रत्यक्षज्ञानमस्ति तदाधारीकृत्य ज्ञानोत्तरं जायमानं यद् ज्ञानं तस्य यद्असाधारणकारणं तद् अनुमानम् इत्यर्थः उक्तञ्च - अनुमितिकरणमनुमानम् अर्थात् अनु= पश्चात् , मितिः = बोधः तस्य यत् करणम् अनुमानम् । परामर्श जन्यं ज्ञानम् अनुमितिः। अनुमितिः द्विविधा स्वार्थानुमितिः परार्थानुमितिः

इति। स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव कारणम्। तस्मात् लिङ्गपरामर्शोऽनुमानम्। लिङ्गं त्रिविधम् अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति। कश्चिद् महानसादौ वह्निं पश्यति धूममपि पश्यति वह्निधूमयोः साहचर्यं सम्प्रधार्य कदाचिद् अरण्ये दूरतः एव धूमं पश्यति परन्तु वह्निर्न दृश्यते परं पूर्वं प्रत्यक्षं यद् दृष्टं वह्निधूमयोः साहचर्यं तदाधारीकृत्य चिन्तयति अत्र धूमोऽस्ति चेद् वह्निनाऽपि भाव्यमिति परामर्शं करोति अत एव उक्तं व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानं परामर्शः। तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः। साहचर्यनियमो व्याप्तिः। यत्र-यत्र धूमः तत्र-तत्र वह्निरिति साहचर्यनियमो व्याप्तिः। यथा उपर्युक्तम् अनुमानं द्विविधं स्वार्थं परार्थं चेति। स्वार्थं स्वानुमितिहेतुः। महानसादौ धूमे वह्निव्याप्तिं गृहीत्वा पर्वतसमीपं गतः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र धूमः तत्र अग्निरिति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात् पर्वतो वह्निमानिति अनुमितिरूत्पद्यते। तदेतत् स्वार्थानुमानम्। यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्। लोकेऽस्मिन् कृत्स्नं शिक्षणं परार्थानुमानेन जायमानमस्ति अत्र न्यायशास्त्रं विशिष्य अनुमानप्रमाणं महदुपकरोति परार्थानुमानं परबोधाय प्रभवति तत्र परप्रतिपत्यर्थम् अवयवपदार्थःअपेक्षितः अथ कोऽयमवयवो नाम ? इति जिज्ञासायामुच्यते।

प्रतिज्ञा हेतुः उदाहरणम्, उपनयः, निगमनम् इति इमे पञ्चावयवाः पञ्चयुक्तिवाक्यानि भवन्ति तानि वाक्यानि महावाक्यतया परिणमन्ते परप्रत्ययं च जनयन्ति।

साध्यनिर्देशः **प्रतिज्ञा**

उदाहरणसाधर्म्यात्साध्यसाधनं **हेतुः**

साध्यसाधर्म्यात्तद्धर्मभावि दृष्टान्तः **उदाहरणम्**

उदाहरणाक्षेपस्तथेति उपसंहारो न तथेति वा साध्यस्य **उपनयः**

हेत्वदेशात्प्रतिज्ञाया; पुनर्वचनं **निगमनम्**

**१. प्रतिज्ञा** - साध्यस्य धर्मस्य धर्मिणा सम्बन्धोपपादनम्।

**२. हेतुः** - उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकवचनम्।

**३. उदाहरणम्** - धर्मयोरेकत्र साध्यसाधनभावप्रदर्शनम्।

**४. उपनयः** - साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनम्।

**५. निगमनम्** - उदाहरणस्थयोधर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधः।

यथा- प्रतिज्ञा - पर्वतो वह्निमान्

हेतुः - धूमत्त्वात्

उदाहरणम् - यत्र-यत्र धूमः, तत्र तत्र वह्निः यथा- महानसः

उपनयः- तथा च अयं(पर्वतः)

निगमनम्- तस्मात् पर्वतो वह्निमान्

शिक्षाशास्त्रे आधुनिकशिक्षणपद्धतिरिति ख्यातस्य हर्बर्टपञ्चपदीशिक्षणस्य यत्स्वरूपं विद्यते संस्कृतशास्त्रेषु ततोऽभिरूपतरं प्राचीनं शिक्षणस्वरूपं पूर्वोक्तस्य पञ्चयुक्तिवाक्यैः समन्विते परप्रतिपत्यर्थं परार्थानुमाने अपि च –निम्नाङ्किते श्लोके स्पष्टं प्रतिभाति।

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।**
**सङ्गतिश्चेति पञ्चाङ्गं शास्त्राधिकरणे विदुः॥**

( 1 ) **विषयः**- चर्च्यमाणविषयः शास्त्रवचनम्।श्

( 2 ) **विशयः**- संशयः (संदेहः) पूर्वोक्तवचने संदेहप्रकटनम्। एषैवास्पष्टता संदेहो वा समस्या।

( 3 ) **पूर्वपक्षः**- विप्रतिपत्तिः। आक्षेपयुक्तैः प्रश्नैः उक्तविषये आपत्तिप्रस्तावः।

( 4 ) **उत्तरपक्षः**- समाधानम्। आक्षेपाणां तार्किकं समाधानम्।

( 5 ) **सङ्गतिः**- पूर्वपक्षस्य समाधानपुरस्सरं शास्त्रवचनस्य सार्थकता प्रतिपादनम्।

अत्र आदौ चर्च्यमाणशास्त्रवचनं प्रस्तूयते। तत्रैव पूर्वपक्षी संशेते, ततः आक्षेपवचनैः शास्त्रवचनं निराकर्तुं चेष्टते,उत्तरपक्षी (वादी) आक्षेपान् समाधाय पश्चात् शास्त्रवचनस्य संगतिं निष्पाद्य तस्य प्रामाण्यं प्रतिष्ठापयति। अनेन क्रमेण समुपस्थितसमस्यासमाधानमथवा शास्त्रवचनसंशयं निरस्य सङ्गतिः सम्पाद्यते। एवं लक्षणस्य (सूत्रस्य) सिद्धान्तस्य सर्वविधदोषपरिमार्जनाय निर्दुष्टविषयस्थापनाय सर्वविधपूर्वपक्षमथवा समस्यामुत्पाद्य समाधानं क्रियते।

साम्प्रतिके काले चारु शिक्षणाय निर्दुष्टाधिगमाय शिक्षाक्षेत्रे हर्बर्टपञ्चपदी प्रयुज्यते इयं हर्बर्टपञ्चपदी पञ्चावयवाः इव अस्ति तद्यथा

**- हर्बर्ट् पञ्चपदी -**

**प्रस्तावना** - पाठ्यमानविषयस्योपस्थापनम् अनेन अध्यापकः विषयस्य अवतरणं करोति।

**विषयप्रस्तुतिः** - प्रस्तुतविषयं विस्तरेण सविशदं बोधयति।

**तुलना**- पाठ्यमानविषयस्य अधीतविषये, लोकविज्ञातविषये सम्बन्धस्थापनम्।

**सामान्यीकरणम्** - अत्र पाठितविषये सामान्यत्वं सम्पाद्यते, अथवा निष्कर्षं सम्पादयन्ति, ज्ञानार्जनं समान्यविशेषाभ्यां जायते अर्थात् बोधः सविकल्पज्ञानम्, निर्विकल्पज्ञानम् इति ।

**अनुप्रयोगः** - अधिगतस्य ज्ञानस्य मूल्याङ्कनम् अथवा अनुप्रयोगो विधीयते।

**न्यायशास्त्रानुसारं छात्राणाम् अधिगमाय यथार्थबोधाय इमे शिक्षणविधयः -**

**प्रत्यक्षविधिः** (Direct Method)- प्रत्यक्षप्रमाणसम्बद्धः पञ्चज्ञानेन्द्रियैः जायमानबोधः प्रत्यक्षविधौ अन्तर्भवति। शिक्षणविधिषु अत्यन्तविशिष्टः प्रत्यक्षविधिः। अत्र साक्षात् प्रत्यक्षरीत्या वा शिक्षणं भवति। एषः मनोवैज्ञानिकः प्रभावी च वर्तते। बहूनां विषयाणां शिक्षणेऽस्य प्रयोगो भवति। यथा- गणितं, विज्ञानं, संस्कृतं, संभाषणं शिक्षयितुमस्योपयोगः परिणामदायी भवति।प्रत्यक्षविधौ इन्द्रियाणि

प्रशिक्षितानि, अभ्यस्तानि स्युः तथा प्रयतते। भाषाशिक्षणे या भाषा शिक्षणीया सा तस्याः माध्यमेन बोधनीया। यथा संस्कृतभाषा शिक्षणं सरलसंस्कृतपदैः इङ्गितेन, चेष्टितेन, वस्तुप्रदर्शनेन, अभिनयेन समानार्थिशब्दानां पर्यायत्वेन प्रयोगेण बोधनम् एषा स्वाभाविकी प्रक्रिया भवति। अत्र अन्यस्याः भाषायाः प्रयोगो न भवति। एषा मातृपद्धतिरित्यप्युच्यते। यथा माता आत्मनः शिशुं शिक्षयितुं स्वीयया भाषया चेष्टते,कालेन बालः तां भाषामधिगच्छति। संस्कृतभाषाऽपि अनया पद्धत्या संस्कृतमाध्यमेनैव पाठ्यते। अस्मिन् विधौ पदपदार्थयोः, विचाराभिव्यक्तयोः, अनुभवभाषयोश्च मिथः साक्षात् सम्बन्धः स्थाप्यते। संस्कृतमयवातावरणनिर्माणेन निरन्तरं संस्कृतभाषायाः संभाषणेन छात्राः अनायासं संस्कृतं शिक्षन्ते। स्थूलवस्तूनां चित्राणां प्रतिकृतीनाञ्च प्रदर्शनेन अभिनयेन च पदानां वाक्यानामर्थबोधः क्रियते। छात्राः संस्कृतश्रवणेन भाषणेन च श्रवणकौशलं भाषणकौशलञ्च प्राप्नुवन्ति। श्रवणेन्द्रियस्य रसनेन्द्रियस्य च प्रशिक्षणेन भाषा स्वायत्तीभवति। प्राचीनसंस्कृतसाहित्येऽपि प्रत्यक्षविधेः प्रमाणानि उपलभ्यन्ते। तद्यथा- आरुणिश्वेतकेतोः संवादोऽस्ति।

**व्याख्यानविधिः** -

**पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्॥**

**व्याख्यानम्** - सूत्राणां पाठयवस्तुनो वा पदच्छेदं विधाय पदार्थं संबोध्य पदानि यथाक्रमं सार्थकं संयोज्य तद् गतार्थं प्रतिपाद्य तदुपरि पूर्वपक्षरूपेणाक्षेपं विधाय तस्य समाधानं कृत्वा निश्चितसिद्धान्तस्थापनं व्याख्यानं भवति।

**तर्कविधिः/शास्त्रार्थविधिः/ वाकोवाक्यविधिर्वा** - वाक्यञ्च उपवाक्यञ्च वाकोवाक्यम्। आक्षेपसमाधानयोः प्रश्नोत्तरयोः वा शैल्या कञ्चित्विवादविषयं निर्णेतुं स्पष्टीकर्तुं वा कश्चन विषयः विचारो वा प्रस्तूयते एषा पद्धतिः वाकोवाक्यपद्धतिः कथ्यते। तथा चोक्तम् -

**उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं विदुर्बुधाः।**
**द्वयोर्वाक्ययोस्तदिच्छन्ति बहूनामपि संगमे॥**

**वादविवादविधिः** - हेतूदाहरणपुरस्सरं सयुक्तिकं स्वीयमतमण्डनम्, परमतदोषदर्शनपुरस्सरं परमतखण्डनपरो विधिः वाग्व्यवहारः त्रिधा भवति, वादः, जल्पः, वितण्डा इति

वादः- **प्रमाणतर्कसाधनोपालम्भःसिद्धान्ताविरुद्धपञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः**

तत्त्वनिर्णयाय उपकारीभूतं साधनं वादः , प्रमाणतर्कसाधनसमन्वितवादः उभयपक्षप्रतिपक्षतत्त्वमादाय वादी सत्यान्वेषणाय यदा प्रवृत्तो भवेत् तदा स्वपक्षमण्डनाय हेतुम् उदाहरणं च प्रददाति , हेतुर्दोषदुष्टो न भवेत् , हेतुरिव आभासमानो व्यभिचारी हेतुः वादाय अथवा यथार्थज्ञानाय न कल्पते। अत एव यदा हेतुः यथार्थो न भवति स हेत्वाभास उच्यते

जल्पः- **यथोक्तोपपपन्नच्छलजातिनिग्रहस्थानसाधनोपलम्भो जल्पः**
यदा कश्चन विजिगिषुः हठदुराग्रहवशात् परमतखण्डपरः स्वपक्षमण्डनपरः येन केनाप्युपायेन च्छलजातिनिग्रहस्थानान्युपयुज्य स्वपक्षमण्डनं यदा करोति , तदा एष जल्पः इत्युच्यते।

वितण्डा - **स प्रतिपक्षस्थापनाहीनो वितण्डा**
वितण्डा प्रयोजनमस्य स वैतण्डिकः स्वीयं मतं पक्षं वा न स्थापयति परं, परपक्षखण्डनतत्परो भवति , सैषा प्रवृत्तिः वितण्डा इत्युच्यते।

**अस्य शास्त्रस्य प्रयोजनम्**- प्रतिपत्तये, मिथ्याज्ञाननिवारणाय,सन्देहनिवारणाय अथवा असन्देहाय,तत्त्वनिर्णयाय लोकेऽस्मिन् यत् किञ्चित् शास्त्रं , शिक्षणं ज्ञानं वा यदि तार्किकशैल्या न प्रस्तूयते तर्हि तत् ज्ञानं, तत् शास्त्रं प्रामाण्यं नार्हति। लोके या कापि विद्या यत्किञ्चित् ज्ञानं गणितं विज्ञानं वा भवतु तत्सर्वं बुद्धिगम्यं तदानीमेव भवति यदा तत् तार्किकं युक्तिपूर्णं ,कार्यकारणभाववत् , हेतुमत् भवति। अतः सर्वविद्यासु मूले इदम् तर्कशास्त्रम्।

शिक्षाशास्त्रे छात्राणामधिगमः प्रधानप्रयोजनम्, स चाधिगमः शिक्षणेन चतुर्भिः प्रमाणैः ज्ञानागमसाधनैः सम्पद्यते, तस्य ज्ञानाधिगमप्रक्रिया कथं भवतीति? प्रमाणवर्णनप्रसङ्गे विजृम्भितम्। अधिगमः (अनुभवः) यथार्थः अयथार्थःइति भेदद्वयं प्रदर्श्य यथार्थाधिगमाय साधनभूतानि प्रमाणानि , दृष्टान्तः, पञ्चावयवाः,तर्कः,वादः इत्यादीनि तत्त्वानि वर्णितानि , शिक्षणाधिगमप्रक्रियानिमित्तं तर्कविधिः, प्रत्यक्षविधिः, वाकोवाक्यविधिः इत्यादयः नानाशिक्षणविधयः संसूचिताः इत्थं न्यायशास्त्रस्य शिक्षणेऽधिगमे चोपकारकत्वं विद्यत इति फ़लितम् ।

**सन्दर्भग्रन्थाः -**

1. पं. आशुबोधविद्याभूषणः, (2000) न्यायदर्शनम्, चौखम्बा संस्कृत प्रतिष्ठान।
2. ढुण्डिराजशास्त्री, (1998) न्यायसिद्धान्तमुक्तावली, चौखम्बा संस्कृत प्रतिष्ठान।
3. डा. सन्तोष मित्तल, (2006) संस्कृतशिक्षणम्, नवचेतना पब्लिकेशन्स्, जयपुर।
4. डा. रा. देवनाथः, डा.भुवनेश उपाध्यायः, (1992) व्याकरणशिक्षणविधयः, भारतीयविद्यासंस्थान, वाराणसी।
5. जयदयाल गोयङ्का, (2005) भगवद्गीता, गीताप्रेस, गोरखपुर।
6. डा. सुरेन्द्र, मनुस्मृतिः, (1996) आर्षसाहित्यप्रचार ट्रस्ट, दिल्ली।
7. पं. उदयवीर, (1995) वैशेषिकदर्शनम्, गोविन्दराम हासानन्द, दिल्ली।

सहायकाचार्यः (शिक्षाशास्त्रविभागः)
राष्ट्रियसंस्कृतसंस्थानम्, क.जे.सोमैयासंस्कृतविद्यापीठम्,
विद्याविहारः, मुम्बई

# स्वप्नविश्लेषणम् – प्राच्यपाश्चात्यमनोवैज्ञानिकस्वप्नसिद्धान्ताः

डा.रा.गा.मुरलीकृष्णः

**स्वप्नदृक् प्रचरन् दिक्षु वैदशासु स्थितान्।**
**अण्डजान् स्वेदजान् वापि जीवान् पश्यति यान् सदा॥**

सर्वेऽपि जाग्रति स्वपन्ति च। स्वप्नः सर्वैरनुभूयते । सुखदुःखाद्यनन्तभावनानां समुदितस्वरूपः स्वप्नः। अत एव 'प्रसुप्तस्य विज्ञानं स्वप्नः' इति प्राच्यामभिमतम्। असम्पूरितेच्छानां दमितभावानां च परिपूर्तिः स्वप्ने एव जायते। यद्यपि स्वप्नः काल्पनिकः इति भाति, तथापि सः आत्मप्रत्यक्षविषयः। अत एव एकेन स्वप्ने आनन्दः अनुभूयते। अपरः भयेन जागर्ति। एकत्र अस्माभिः स्वप्नेन सह सम्बन्धः अनुबुध्यते तद्वैरुध्यम् अपरत्र। तदा तदा वर्तमाने प्रत्यक्षीभूतसन्दर्भः स्वप्ने मया दृष्टपूर्व इति प्रतिभाति। अपि च जन्मना अन्धाः अपि स्वप्नः मया अनुभूयते इति कथयन्ति। अत अनादिकालादारभ्य सर्वे स्वप्नस्वरूप-रहस्यावगमन-जिज्ञासवः दृश्यन्ते।

जिज्ञासूनाम् अनुभवाधारैः प्रयोगैश्च बहुभिः दार्शनिकैः विद्वद्भिः मनोवैज्ञानिकैश्च विभिन्नप्रकारकस्वप्नसिद्धान्ताः समुल्लिखिताः। तत्र भारतीयोपनिद्रष्टारः अग्रेसराः। मनोवैज्ञानिकजगति फ्रायिड् (Freud) महोदयस्य आगमनात् प्राक् प्राच्यपाश्चात्त्यस्वप्नविचारधाराः दार्शनिकदृक्पथमनुसृताः आसन्। अर्थात् विंशशताब्द्यां (1900) The Interpretation of Dreams इति फ्रायिड्(Freud)महोदयस्य अभूतपूर्वस्वप्नविश्लेषणद्वारा नव्यवैज्ञानिकपथमनुसृताः अभवन् स्वप्नसिद्धान्ताः। तेन नैकविधक्षेत्राणि प्रभावितानि। विशिष्य मानसिकरोगिणां चिकित्सायै शिक्षाक्षेत्रे छात्र-अपसामान्यगतमसमस्यानाम् अभिज्ञानाय तासां दूरीकरणाय च इदं स्वप्नविश्लेषणं महदुपकरोति। न केवलमध्यापकैः मनोवैज्ञानिकैश्चापि ज्ञातव्यविषयोऽयं परं ये स्वप्नदृशः ते सर्वेऽपि अत्र अधिकारिणः एव।

कोऽयं स्वप्नः किं तस्य स्वरूपम्? द्रष्टा कः? इत्यादिविषयाणां विश्लेषणं न सर्वजनसुलभसाध्यम्। यतो हि प्रत्येकं वयः मानसिक-सामाजिक-आर्थिकस्थितयः, विगतानुभवाः(Later Experience), शैशवकालीनानुभूतयः(Childhood Experience), दैहिकस्थितयः (Somatic Sources) इत्यादिभिः अनेकैः कारणैः स्वप्नसामग्री एकरूपात्मिका न भवति। पुनः एकस्यामेव व्यक्तौ बाल्यकिशोराद्यवस्थासु स्वप्नसामग्र्यः परिवर्तिताः भवन्त्येव इति Kimmins महोदयस्य महत्त्वपूर्णाध्ययनद्वारा ज्ञायते। तथैव अस्माकम् अनुभवोऽपि। अतः स्वप्नस्वरूपनिर्धारणे एकमतित्वं कुत्रापि न दृश्यते। तथापि पिपठिषूणां जिज्ञासाभिवर्धनाय केचन प्रमुखस्वप्नसिद्धान्ताः प्रास्तूयन्त।

स्वस्मिन् स्वीयभ्रमणं स्वप्नः इति शाब्दिकार्थानुसारेण नैकविधस्वप्नसिद्धान्ताः स्वीय-आत्मनः प्रत्यक्षीकरणाय प्रतिपादिताः। तेषु स्वप्नसिद्धान्तेषु प्रमुखतया त्रिप्रकारकाः प्रसिद्ध्यन्ते। ते यथा –

1. पराप्राकृतिकस्वप्नसिद्धान्ताः (Supernatural Theories of Dreams)
2. शारीरकस्वप्नसिद्धान्ताः (Physiological Theories of Dreams)
3. मनोवैज्ञानिकस्वप्नसिद्धान्ताः (Psychological Theories of Dreams)

क्रमशः एतेषां सिद्धान्तानां स्वरूपं सोदाहरणं प्रतिपाद्यते।

**1. पराप्राकृतिकस्वप्नसिद्धान्ताः –**

**पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः।**
**रजो युक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्॥**

चतुरशीतिलक्षयोनिषु जन्मानन्तरं मनुष्यजन्म लभ्यते। अतः प्राग्जन्मसंस्काराणां पुनस्स्मरणमेव स्वप्नः – इति केचन प्राचीनभारतीयाः अभिप्रयन्ति। अत एव जन्मना अन्धाः अपि पूर्वजन्मसंस्कारवशात् स्वप्नमनुभवन्ति इत्यपि उच्यते। तथैव जाग्रद्वासनामयैः मन आदिभिः चतुर्दशकारणैः शब्दाद्यभावेऽपि वासनामयान् शब्दादीन् यदोपलभते तदात्मनः स्वप्नः इत्यपरः ब्रूते। अग्निपुराणे शुभस्वप्न-दुस्स्वप्नविवेचन-पूर्वकं स्वप्न आगतसमयानुगुणं कदा तस्य साकाररूपप्रत्यक्षं भवितुमर्हतीत्यपि विवृतमस्ति । तद्द्वारा अभिज्ञायते यत् स्वप्नः नाम भविष्यद्घटनाप्रदर्शकः इति। किन्तु वैज्ञानिकदृष्ट्या उपर्युक्तसिद्धान्तानां प्रतिपादनं कष्टसाध्यं भवेत्। यतो हि वैज्ञानिकाः वदन्ति यत् अन्धैः स्वप्नः नानुभूयन्ते इति। परं ते अस्माभिः उच्चरितवाक्यानि श्रुत्वा स्वयम् ऊहां कल्पयन्ति इति।

एवमेव ल्यूक्रसियस् (Lucretius, 98-55 B.C.) महोदयेन प्रतिपादितं यत् –आत्मा विभिन्नांशैः विनिर्मितः भवति। तत्र प्रत्यंशं कार्यकरणे नियन्त्रणे च समर्थो भवति। एतादृशांशैः विनिर्मित-आत्मनि तादृशी शक्तिर्विद्यते यया सः अद्भुतकार्यं कर्तुं सक्षमः भवतीति। किन्तु आत्मशक्तितुल्यशक्त्ययुक्तं शरीरं तादृशाद्भुतकार्यकरणे अक्षमं भवेत्। अतः आत्मनः विभिन्नांशानां, क्रियाणाम् अनुभवानाञ्च अभिव्यक्तिः स्वप्नद्वारा एव शक्यते इति।

तद्वत् हिप्पोक्रेटिस् (Hippocrates 460-354 B.C.) नामकप्रसिद्धदार्शनिकेन अभिप्रेतं यत् स्वापकाले आत्मा शरीरात् पृथग्भूय सम्भ्रमति तदानीं तेन यद्यद् दृश्यते तदात्मनः स्वप्नः इति। अत एव सुप्तपुरुषः अकस्माद् नोत्थापनीयः इति वदन्ति। यतो हि पृथग्भ्रमन् आत्मा शरीरं प्रवेष्टुमसमर्थः सन् तन्मरणस्य कारणान्तरं भवितुमर्हतीति।

परन्तु स्वप्ने प्रतिबुद्धाः सर्वे न निजजीवने विद्यन्ते। यदि विद्येरन् तर्हि तेषां मेलन-वित्तालापादि-विषयिकस्वप्नं तथैव तेऽपि अनुभवेयुरेव न च तथा लोकानुभवः। अतः दर्शनविचाराधारिताः पूर्वोक्ताः प्राच्यपाश्चात्त्यसिद्धान्ताः वैज्ञानिकत्वशून्यत्वात् आधुनिकैः वैज्ञानिकैश्च तिरस्कृताः। तथापि सम्प्रति बहवः

प्रागुक्तसिद्धान्तान् विश्वसन्ति। तेषां मते स्वप्नस्य कारणं दैविकशक्तिः। सुस्वप्नः तदा आगमिष्यति यदा देवः प्रसन्नो भवेत्। यदि देवः अप्रसन्नः तर्हि दुःस्वप्नः अनुभोक्तव्य इति।

**2. शारीरकस्वप्नसिद्धान्ताः-**

बन्ज (Binz), मौरी(Mouri), रॉबर्ट(Robert), डिलीज्(Deleage) आदयः एव। शारीरकस्वप्नसिद्धान्तप्रतिपादकाः। एतेषां मते स्वप्नस्य कारणं बाह्य-आन्तरिकोद्दीपकाः निद्राणावस्थायां चैतन्यशैथिल्यात् उच्चस्नायुमण्डलमपि (Higher Nervous System) निष्क्रियरूपेण तिष्ठति। उत्तेजकानां प्रभावः यथा ज्ञानेन्द्रिये स्यात्, तथैव मस्तिष्केऽपि। तदा उद्दीपकानां स्पष्टार्थः बहिः न प्रकाशते। परम् अर्थान्तरमस्माभिः प्रकल्प्यते। अत एव सुप्तस्य आस्ये जलसेचनेन नद्यां स्नानं कुर्वन्नस्मीति स्वप्नः जायते। तथैव स्वापकाले नाममात्रेण पर्यङ्कस्य सूत्रेण यदि पादः बद्धः तर्हि स्वयं कुत्रचिद् जले पतितवानस्मि इति स्वप्नः दृश्येत।

हार्टन् (Horton) महोदयेन उच्यते यत् स्वप्नः प्रत्यक्षज्ञानस्य असत्यस्वरूपः इति। यथा कस्यापि पुरुषस्य श्रोत्रेन्द्रिये व्यतिक्रमः यदि स्यात्, तेन कारणेन मस्तिष्के संक्षोभः जायेत। अतः मेघगर्जनसम्बद्धः स्वप्नः तेन दृश्यते। तथैव एकः छात्रः मित्रेण सह युद्धकरणसमये दन्तभग्नात्मकस्वप्नम् अनुबभूव वस्तुतः सः दन्तवेदनया पीडितः आसीत्।

एवं सार्जेण्ट्(Sargent) महोदयेन बहुप्रयोगैः प्रतिपादितं यत् बह्वधिकं भुक्त्वा शयनेन, अपक्वभोजनेन वा जीर्णप्रक्रियायाम् अव्यवस्ततायाः कारणतः तीव्रहृद्गत्या, स्पन्दनादिना ऊर्ध्वदेशादधः पतनोन्मुखस्वप्नं सम्पश्यते इति। वायुदोषः (Gastric) समस्यया पीडितेन एतादृशस्वप्नः अनुभूयते।

हॉलिङ्गवर्थ (Hollingworth) महोदयेन उदाहृतं यत् - निद्रावस्थायां विद्यमानस्वीयप्रयोज्याय सुरभिद्रव्यम् (Scent) आघ्रापयामास। प्रातरुत्थाय तेनोक्तं - स्वप्ने अहं पण्यवीथ्यां सुगन्धद्रव्यापणं गत्वा सुरभितैलं क्रीतवानस्मि इति।

तथैव तिर्यग्रूपेण अथवा मुकुलीकृत्य शयनेन निर्वस्त्रं शीतप्रदेशे स्थितवान् इति स्वप्नः सञ्जायते। वस्तुतः तत्र वातावरणं शीतलयुक्तमासीत् अतः विना आच्छादनं शयनेन स च स्वप्नः अनुभूत इति नैट् डन्लप् (Knight Donlop) महोदयस्य प्रयोगानुभवः वर्तते।

कदाचित् निद्रावस्थायां मूत्रं गन्तुं यदि आवश्यकता स्यात् परं निद्रायां सः कुत्रचित् मूत्रितवान् इति स्वप्नः दृश्यते। कदाचित् बालाः शयानः एव साक्षत् मूत्रविसर्जनम् अनेनैव स्वप्नेन कुर्वन्ति।

अतः पूर्वोक्तोदारणैः ज्ञायते यत् शारीरक-आन्तरिक-बाह्योद्दीपकैः समुत्पन्नाः संवेदनाः अनुभवाः वा वास्तविकज्ञाने अवास्तविकमिथ्याज्ञानं प्रकल्पयन्ति प्रदर्शयन्ति चेति।

किन्तु एकम् उत्तेजकं भिन्न-भिन्नव्यक्तिषु विभिन्नप्रकारकस्वप्नान् किमर्थं जनयति? दन्तवेदनया पीडितैः कतिभिः जनैः युद्धे दन्तभग्नात्मकस्वप्नः अनुभूतः? शैत्यकाले कति जनाः वा विवस्त्रयुक्तस्वप्नं पश्यन्तः वर्तन्ते? अतः यावद्धि विना साङ्केतिकभाषाज्ञानम् उद्दीपकानां कारणं ज्ञातुं नैव शक्यते तावद्धि

वैज्ञानिकदृष्ट्या स्वप्नस्य स्वरूपं नैव निर्द्धार्येत। एवमेव कदापि स्वप्नाः निरर्थकाः उद्देश्यविहीनाः न भवन्ति।

**3. मनोवैज्ञानिकस्वप्नसिद्धान्ताः-**

आधुनिकमनोवैज्ञानिकाः नव्ययुक्तियुक्तस्वप्नसिद्धान्तप्रतिपादकाः फ्रॉयिड् (Freud), एड्लर (Adlar), जुंग (Jung) प्रभृतयः भवन्ति। Freud महोदयस्य मते स्वप्नः एकः मनस्तापः(Psychosis) दमितेच्छानां परिपूर्त्तिः स्वप्ने एव सम्भवति। अतः स्वप्नसम्बन्धः निद्रावस्थापर्यन्तं नैव सीमितः। अपि च स्वप्नः अचेतनादुत्पन्नस्वैरकल्पनायाः (Fantasy) विभागः। स्वैरकल्पना जाग्रत्स्वप्नावस्थासु निरन्तरप्रवाहशीला भवति। जाग्रदवस्थायां स्वैरकल्पना अन्तर्मानसिकज्ञानस्य (Endo Psychic Sensor) नियन्त्रणे तिष्ठति। निद्रावस्थायां तस्य क्षीणतावशात् स्वप्नावस्थायां स्वैरकल्पना साकारात्मिका भवति। अत्र बाह्यजगति विद्यमान-क्रूर-कठोर-वास्तविकताः विस्मृत्य अवास्तविकस्वैरचमत्कारलोकं प्रविशति जीवः। परं वास्तविकताकाल्पनिकतयोः भेदस्य अनभिज्ञः पुरुषः काल्पनिकतायामेव वास्तविकतामनुभवति। अतः स्वप्नदृक्षु स्वीयेच्छापूर्तिः जायमानास्तीति सन्तृप्तिः सञ्जायते। अत्र निद्रावस्थायां वीर्यस्खलनमेव प्रत्यक्षोदाहरणम्। तदर्थमेव स्नहृद्गह्वस्र महोदयस्य सिद्धान्तः इच्छापूर्ति-सिद्धान्त (Wish Fulfillment Theory) इति सुप्रसिद्धः।

पुनः अचैतन्यमनसि अनेकाः नैतिकानैतिकेच्छाः दमिताः भवन्ति। ताः दूरीकर्तव्याः, नोचेत् चित्तविभ्रमाः/उन्मत्ताः (Mental patients) भवेयुः यथा - बाष्पचुल्यन्तस्य (Cooker) अधिकबाष्पवायुः Safety Valve द्वारा बहिः प्रेष्यते। अन्यथा तस्य विस्फोटनं भवेत्। तथा स्वप्नः Safety Valve इव कार्यं करोति। अचैतन्यमनसि दमिताः इच्छाः स्वप्ने छद्मवेषं धृत्वा बहिरागच्छन्ति इति निरूपितवान् फ्रॉयिड्-महोदयः।

सामाजिकनियमविरुद्धाः इच्छाः यदि विना छद्मवेषं बहिरागताः स्युः, तर्हि तादृशान् स्वप्नान् दृष्ट्वा निद्रातः जागर्ति स्वप्ता। यथा- चतुर्थकक्षायां पठता बालकेन रात्रौ स्वप्नः दृष्टः। तत्र बहुबलशक्तियुतं शुनकम् एकः अतिकृशः शक्त्ययुक्तः बिडालः मारयति स्म। शुनकः आत्मानं रक्षितुं धावन् आसीत् इति। वस्तुतस्तु एषः स्वप्नः अवास्तविकः असम्भावित इति भाति। परन्तु Freud महोदयेन मुक्तसाहचर्यविधिद्वारा न्यरूपि यत् तत्पूर्वदिने कक्षायाम् अध्यापकः बालकं विना दोषं बहु तर्जितवान्, ताडितवानपि। सम्पूर्णतया निर्दोषयुक्तः आक्रोशमसहमानः बालकः असकृत् तं प्रतिताडयामि इति चिन्तितवान्। किन्तु बालकस्य कृते तदसम्भावितमेव। यतो हि तथा करणं सामाजिकनैतिकविरुद्धं स्यात्। अतः प्रतिषेधभावना मनसि दमिता। बालः एतन्न जानाति स्म स्वप्ने अहं बिडालरूपेण, शुनकरूपयुतमध्यापकं पीडयन्नस्मीति। यदि सः साक्षात् अध्यापकं ताडयन् अस्मि इति स्वप्नं पश्यति तर्हि तदा सः भयात् जागर्ति। यावत् पर्यन्तं स्वबिडालयोः शुनक-अध्यापकयोश्च सम्बन्धः न ज्ञायते तावत् पर्यन्तं बालकः स्वप्नम् आनन्देन पश्यति।

यदि ज्ञातं तदा तस्य निद्राभङ्गः भवेदेव इत्यादिरूपेण The Interpretation of Dreams इति पुस्तके स्वप्नविश्लेषणं विहितं Freud महोदयेन।

प्लेटो-महोदयेनापि स एव आशयः प्रतिपादितः यत्- कुपुरुषाः यानि कार्याणि वास्तविकजीवने कुर्वन्ति, तानि कार्याणि साधुपुरुषाः स्वप्ने दृष्ट्वा आनन्दमनुभवन्तीति। (Saints contents themselves with dreaming what the sinners do in their actual life-The Republic of Plato)

एवं दमितेच्छाभिः साकं वर्तमानविशेषाः अपि स्वप्नत्वेन प्रतिभासमानाः भवन्तीति एड्लर् (Adlar) महोदयस्य आशयः।

तमेवाशयं किञ्चित् परिवर्त्य युङ्(Jung)महोदयः स्वतः प्रतीकत्मकसिद्धान्तत्वेन प्रतिपादितवान् यद् - दमितेच्छाभिः साकं वर्तमानभविष्यद्विशेषा अपि स्वप्ने दीप्यन्ते इति तथैव स्वप्नस्य कारणं जातीयविशेषाः एव इत्यपि प्रतिपादितवान्। अर्थात् नैतिक-पारिवारिक-नियमाः स्वप्नेऽपि अचेतनमनसा पाल्यन्ते। अत एव स्वप्ने वस्त्वन्तरं दृश्यते। एवं स्वतः प्रतीतिः अर्थात् स्वव्यक्तित्वप्रतीतिरपि सम्भवति। यथा - पञ्चविंश-वयस्केन युवकेन सः श्मशाने पिशाचैः सह भोजनं कुर्वन् आसीत् इति स्वप्नः अनुभूतः। यद्यपि स्वप्नः काल्पनिक इति प्रतिभाति तथापि तत्र तस्य व्यक्तित्वं प्रतीयते। यतः तत्र पिशाचाः पैशाचिकप्रवृत्तियुक्तमनुष्यप्रतीकात्मकाः। एवं श्मशानं निवासायोग्यस्थानम्। अर्थात् अननुकूलपरिष्ठितिषु असाधारणव्यक्तिभिः सह एषः भोजनं कूर्वन्नासीत् इति स्वप्नस्य तात्पर्यं विद्यते यत् सः अननुकूलपरिष्ठितिषु असाधारणव्यक्तिभिः सह सामाञ्जस्यं सम्पादयितुं शक्नोतीत्यर्थः प्रतीयते। वस्तुतः वास्तविकजगति तस्य युवकस्य स्वभावः अभिज्ञातः यत् सामान्यसमाजे सर्वैः सह सः सहयोगं सम्पादयितुं न शक्नोति इति।

**कतिपयवैज्ञानिकै प्रोक्तं यत्** - स्वप्नः समस्या-समाधानात्मिका प्रक्रिया इति। यथा केकुल (Kekul) इति सुप्रसिद्धेन रासायनिकविदुषा अनुभूतस्वप्ने एकः सर्पः स्वकीयपुच्छं स्वयं दशन् वृत्ताकाररूपेण बहुवेगेन च परिभ्रमन् आसीत्। तेनाधारेण Benzenes Molecular 'ह्य स्वरूपं ज्ञातवान् आविष्कृतवान् च। तस्य स्वरूपम् अधो दत्ते चित्रे द्रष्टुं शक्यते। एवं स्वप्नद्वारा भविष्यद्विशेषाः समस्यासमाधानानि च ज्ञातुं शक्यन्ते इति।



सम्प्रति स्वप्नानुभववेलायां मस्तिष्के तरङ्गपरिवर्तनं अथवा Neurons परिभ्रमणं भवतीति

वैज्ञानिकनिरीक्षणैः प्रमाणीकृतम्, एतादृशी प्रक्रिया Electroencephalogram (EEG) इति कथ्यते। तेषामभिप्रायानुसारेण स्वप्नः मस्तिष्कस्य कल्पनाशक्ति इति।

इत्थं वैज्ञानिकदृष्ट्या प्रतिपादिताः प्रसुप्तस्य विज्ञानसिद्धान्ताः गच्छता कालेन अभिवृद्धिं गताः। परन्तु कोऽयं स्वप्नः? तस्य स्वरूपं कीदृशम्? इत्यादिप्रश्नानाम् उत्तरं निर्दुष्टत्वेन न केनाऽपि प्रतिपादितम् इति कथने नास्ति विशंवादः। तथापि संक्षिप्तरूपेण वक्तुं शक्यते यत् –

All our dreams are related to our suppressed emotions, fears, desires and needs.

इति शम्।

सन्दर्भग्रन्थसूची –


1. The Interpretation of Dreams, Sigmund Freud (1900).
2. httpsÑ//www.google.com/search?q=benzene+molecular+structure+dreamsource=lnmstbm=ischsa= Xved=®ahUKEwiZ~s{SofviAhUKQo}KHdzoA~IQ AUIECgBbiw= v®~ybih=y|yimgrc=JOVTLchSGcOnWM÷:
3. Dream Psychology Psychoanalysis for Beginners v| May, w®vw by Sigmund Freud , Andr¸ Tridon, M. D. (Montague David) Eder Kindle Edition.
4. https://sanskritdocuments.org/sanskrit/purana/
5. अग्निपुराणम्, शिवप्रसाद द्विवेदी, चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली।
6. अपसामान्यमनोविज्ञानम्, विनोदपुस्तकमन्दिर।
7.


संदर्भः–


1. माण्डू. उप. / आ. शा. प्र/ 63
2. चरकसंहिता।
3. सुश्रुते शरीरस्थाने चतुर्थेऽध्याये।
4. अग्निपुराणम्–229 अध्यायः।
5. Freud - The interpretation of dreams.djvu/zvv PSYCHOLOGY OF DREAM÷ A



सहायकाचार्यः
शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम्
नवदेहली

# संस्कृतशिक्षकः शिक्षणकौशलानि च

डॉ. कुलदीपसिंह:

**अहमेव स्वयमिदं वदामि जुष्टं देवभिरुत मानुषेभिः।**
**यं कामये तं तमुग्रं वृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्** (ऋग्वेदः-१०-१२५-५)

**संस्कृतभाषा–**

भावाभिव्यक्तये प्रयुक्तानां सार्थकशब्दानां समष्टिरेव भाषा भवति "वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते" संस्कृतं देववत् पन्थानं प्रथयति, सृष्टिं सारयति, मार्गं मार्गयते, धियं द्योतयति, मेधां समेधयति, प्रज्ञां प्रज्ज्वालयति, बुद्धिं प्रबोधयति चेतश्चेतयते, स्वान्तं संस्कुरुते, वैभवम् आविर्भावयति च। नहि लोके संस्कृतात् प्रशस्यतमं पावनतमम् उत्कृष्टं वा किञ्चित्।

"**संस्कृतन्नाम दैवी वाक् अन्वाख्याता महर्षिभिः**" इति रीत्या इयं संस्कृतभाषा देव भाषेति कथ्यते। देवा अनया भाषया व्यवहरन्तीति कृत्वा इयं देवभाषेति व्यपदेशं भजते अत एव अस्या अनितरसाधारणं वैशिष्ट्यं वर्तते यद्वैशिष्ट्यं जगति तले वर्तमानायाः अन्यस्याः कस्याऽपि भाषायाः नास्ति। तादृशं वैशिष्ट्यमावहन्ती इयं भाषा अस्माकं सर्वेषामपि अतितरां समादरणीया वर्तते। सर्वासां भाषाणामियं मातृभाषा इत्यस्माकं विश्वासः। यथा जनन्याः विषये सर्वैरपि लोकैः श्रद्धावद्भिः समादरवद्भिश्च भवितव्यं तथैव अस्याः अपि भाषायाः विषये अस्माभिः नितरां श्रद्धावद्भिः भाव्यम्।

संस्कृतमिति शब्दः समुपसर्गात् निष्पद्यते यस्यार्थः निरुक्ते समित्येकीभावम्' इति वर्तते केवलम् अनया भाषया एव लोके एकत्वं सम्पादयितुं शक्यते।

अस्माकं संस्कृतिस्सर्वा अपि अस्यामेव भाषायाम् उपनिबद्धा वर्तते यदि, भारतीयसंस्कृतिः ज्ञातव्या तर्हि इयं भाषा अभ्यसनीया इमां भाषामनभ्यस्य, अस्यां भाषायां परिचयमवाप्य च भारतीय-संस्कृतेः सनातनधर्मस्य च ज्ञानं यथावन्न भवितुमर्हति इति तु वस्तुस्थितिः।

सुरभारत्याः वैशिष्ट्यं सर्वैरपि सम्यक् अवगन्तव्यम् अतः एतस्याः सौन्दर्यं, प्राचीनानां विदुषां संस्कृतव्यवहारे कीदृशं कौशलम् आसीत् इति च ज्ञातव्यम्। संस्कृतभाषायाः इदं वैशिष्ट्यं यत् एकेनैव पदेन विशिष्टः अर्थः बोधयितुं पार्यते।

**संस्कृतशिक्षकः**

शिक्षकस्य गुणगौरवं वर्णयता कालिदासेन मालविकाग्निमित्रे उक्तं–

**शिलष्टाक्रिया कस्यचिदात्मसंस्था,**
**संक्रान्तिरन्यस्य विशेषयुक्ता।**

**यस्योभयं साधु स शिक्षकाणां,**
**धुरी प्रतिष्ठापयितव्य एव।।**

विद्याग्रहणप्रवीणपटूनामध्यापकानामपेक्षया विद्याप्रदातार अतिरिच्यन्ते। संस्कृतशिक्षकेषु सामान्यगुणैस्सह भाषाकौशलानि स्युरिति तानि च इत्थं सन्ति। (१) श्रवणम् (२) भाषणम् (३) पठनम् (४) लेखनञ्च।

श्रवणम्-भाषण-पठन-लेखनरूपाणि एतानि चत्वारि कौशलानि क्रमेणैव ज्ञातव्यानि। यथा भगवतः ब्रह्मणः चत्वारि मुखानि यथा, तथैव भाषाब्रह्मणः अपि एतानि चत्वारि मुखानि सन्ति।

एतेषु चतुर्षु कौशलेषु श्रवणं पठनं च ग्रहणकौशले, भाषणं लेखनं च अभिव्यञ्जनकौशले। तन्नाम आदिमयोः प्रयोगे ज्ञानग्रहणं भवति, अन्त्ययोः प्रयोगे ज्ञानस्याभिव्यक्तिर्भवति।

**१. श्रवणम्–** श्रुतिपरम्परामाश्रित्य वयं वर्तामहे इयमेव अस्मदीया परम्परा, भाषायाः ग्रहणं श्रवणेनैव भवति। अतः भाषाग्रहणाय श्रवणेन्द्रियस्य अनितरसाधारणं वैशिष्ट्यं वर्तते। अतः संस्कृतशिक्षकः कक्षायां संस्कृतभाषया एव वदेत् सः पद्यानि श्लोकान् द्विवारं सस्वरेण गायेत् तस्मिन् समये छात्राः पुस्तकानि पिधाय एकाग्रचेतसा शृणुयुः। आकाशवाण्याः उपयोगं अपि कर्त्तव्यः संस्कृतशिक्षकेण। ध्वनिमुद्रिकाः अपि श्रवणं परिपुष्यति।

**२. भाषणम्–** द्वितीयमिदं कौशलं सर्वेऽपि मनुजाः स्वाशयं प्रकटयितुं भाष्यन्ते एव। शब्दोच्चारणमात्रं भाषणं न तत्रापि साधूच्चारणस्यावश्यकता भवति यथोक्तम्–

**यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो मा भूत सकलं शकलं सकृच्छकृत।।**

अतः सम्भाषणेन भाषणकौशलं वर्धते, बालाः यावदधिकं सम्भाषन्ते तावद् भाषणकौशलं प्राप्नुवन्ति। कथा-कथनम्, चित्रपाठनम्, नाटकाभिनयः भाषाक्रीडाः च केचन् भाषणकौशलाभिवर्द्धकाः उपायाः वर्तन्ते।

**३. पठनम्–** साङ्केतिकरूपेण निबद्धानां वर्णानामुच्चारणं पठनम् इति भवति न तथा। पठनक्रियायां साङ्केतिकलिपीनां द्वारा तन्निबद्धस्य शब्दस्य साधूच्चारणपूर्वकं तदभिव्यज्यमानस्यार्थस्यापि ग्रहणं भवति। न केवलं शब्दार्थस्य, अपितु तन्निबद्धानां वाक्यानां वाक्यपुञ्जस्य अर्थग्रहणमपि तत्र तावदेव प्रामुख्यम् आवहति। सर्वेषामपि शब्दानां सुस्पष्टोच्चारणेन अल्पप्राणः महाप्राणादीनां ह्रस्वदीर्घादीनां च साधूच्चारणेन, लेखनचिह्नेषु विशेषावधानपूर्वकेन च वाचनेन पठनकौशलं जायते।

**५. लेखनम्–** यद्यपि लेखनशब्दः अक्षरविन्यासमात्रं बोधयति तथापि स्वाभिलषितस्य प्रतिपादनाय क्रियमाणः अक्षरविन्यासः इत्यर्थः एव गृह्यते। अतः छात्रेषु अस्य कौशलस्य अभिवृद्ध्यर्थं शिक्षकः कृष्णफलकस्य उपयोगम् अधिकाधिकं कुर्यात्। छात्राणाम् अनुभवगोचरं विषयम् अवलम्ब्य सम्भाषणलेखनं, लघुनिबन्धलेखनं वा कारयेत्। विरामप्रार्थनापत्रम् अन्यविधम् आवेदनपत्रञ्च संस्कृतेन लेखितुं छात्रान् प्रेरयेत्। संस्कृतपत्रिकाभ्यः प्रतिस्पन्दः, अनुभवः विनोदः वार्ताः इत्यादीनां लेखनाय छात्रान् प्रोत्साहयेत् संस्कृतशिक्षकः।

एभिः कौशलैः संस्कृशिक्षकेण भाव्यम्। अपि च संस्कृतं संस्कृतभाषयाम् एव पाठयेत् यतोहि बहवः लोकाः कथयन्ति यत् अनुवादग्रन्थेभ्यः तत्त्वं ज्ञातुं प्रभवामः तथापि अनुवादेन यथावत्तत्त्वम् अवबौद्धुं नैव शक्यते।

संस्कृतशिक्षकः संस्कृते, तत्रापि व्याकरणे कृतभूरिपरिश्रमः अधिकं वक्तुं क्षमः स्यात्। कुत्र वा अपशब्दः आगच्छेत्? को वा आक्षिपेत्? किं वा समापनेन? यथाकथञ्चित् द्वित्राणि वाक्यानि उक्त्वा समापयामि इत्येवं चिन्तयति। किमर्थम् इयं भीः? अस्याः भाषायाः सौन्दर्यं न ज्ञायते वा? ज्ञायते चेत् कुतो विशिष्टाः प्रयोगाः न क्रियन्ते? तदर्थं प्राचीनानां ग्रन्थाः अस्माभिः सम्यक् अवलोकनीयाः। संस्कृतभाषा अवगन्तव्या अभ्यसनीया च।

अपि च अविज्ञातं विषयं यदि निगदति तर्हि तदपि नोचितम्। उक्तञ्च –

**यद् गृहीतमविज्ञातं निगदेनैव शब्धते।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।**

**शिक्षणकौशलानि–**

Teaching skills are specific instructional activities and Procedures that a teacher may use in his class room. These are related to various stages of Teaching or in continuous flow of the teacher performance.

माणवकानां शिक्षायाः अवबोधार्थं सार्वभौमिकविकासार्थञ्च पाठशालासु अध्यापकेन सम्पाद्यमाना प्रक्रिया शिक्षणेन अभिधीयते। शिक्षणं नाम कक्षाव्यवहाराणां समूहः यत्र विविधानि शिक्षणकौशलानि सम्भूय शिक्षणप्रक्रियां निर्वहन्ति। शिक्षणकौशलानि छात्राणामधिगमे सौकर्यं कल्पयन्ति। अयम् अधिगमः शिक्षणेन, प्रशिक्षणेन, अनुभवेन च जायते। छात्राणां व्यवहारेषु परिवर्तनमेवाधिगमो भवति अयञ्चाधिगमः कौशलैर्जायते। संस्कृशिक्षकः छात्राणाम् अध्ययनसौकर्याय कक्षायां बहूनां शैक्षिकव्यवहाराणामायोजनं करोति तेषु कानिचित् शिक्षणकौशलानि अत्र उपस्थाप्यन्ते–

(१) **प्रस्तावनाकौशलम्–** उत्तमशिक्षकस्येदं दायित्वं भवति यत् छात्रान् नूतनपाठं प्रति समाकर्षेत् तन्निमितञ्च रोचकता, उत्साहः नूतनज्ञानावाप्तये च प्रेरणा अपेक्षिता भवति। अत्र छात्राणां पूर्वज्ञानेन सह नवीनज्ञानस्य योजनं भवति। वस्तुतः प्रस्तावना, भूमिका भवति या च पूर्वज्ञानाधारिता भवति। पूर्वज्ञानाधारितादेव छात्रेषु पाठं प्रति आकर्षणं भवति।

(२) **प्रश्नकरणकौशलम्–** अधिगतस्य विषयस्य ज्ञानार्थं नवीनविषयं प्रति जिज्ञासोत्पादनार्थं प्रश्नकरणकौशलमुपकरोति। अध्यापकस्य साफल्यं प्रश्नकरणशैलीम् अवलम्बते। अतः संस्कृतशिक्षकः प्रश्नकरणकलायां निपुणो भवेत्। कक्षायां निर्दिष्टे समये विशिष्टगुणयुक्तानां प्रश्नानां संरचना, समुचितरीत्या तत्प्रयोगार्थञ्च अपेक्षितसामर्थ्यसम्पादनमेव प्रश्नकौशलमिति बालकृष्णपासी महोदयः जगाद।

(३) **व्याख्यानकौशलम्–** व्याख्यानं स्पष्टप्रतिपादनमित्यर्थम् आख्याति। विषयसामग्र्याः

संक्षिप्तीकरणे, प्रस्तुतीकरणे, स्पष्टीकरणे, विषययोः तुलनाकरणे, छात्रसमस्यासमाधाने च एतत्कौशलमुपयुज्यते। शास्त्राणां काव्यानां च व्याख्यानाय प्राचीनैः प्रतिपादितं व्याख्यानस्य लक्षणमित्थं वर्तते–

**पदच्छेदः, पदार्थोक्तिः विग्रहो वाक्ययोजना।**
**आक्षेपश्च समाधानं व्याख्यानं पञ्चलक्षणम्।।**

**(४) दृष्टान्तकौशलम्–** दृष्टान्तः ज्ञातपूर्वविषयः परामृष्टज्ञानं वा भवति। दृष्टान्तः सारल्येन अज्ञातविषयम् इन्द्रियग्राह्यं, नूतनज्ञानप्राप्तये च मनसः साहाय्यं विदधाति। कश्चन विषयः यदा शिक्षकेण व्याख्यानमाध्यमेन स्पष्टयितुं न शक्यते, तदा चित्रैः उदाहरणैः वा स्पष्टयितुं प्रयत्नः क्रियते। दृष्टान्तानाम् उदाहरणानां वा माध्यमेन शिक्षकः नवीनं, जटिलम् अमूर्त्तं च ज्ञानं सरलतया छात्रेषु संक्रामयितुं क्षमो भवति। संस्कृतसाहित्ये शास्त्रेषु च बहुविधाः दृष्टान्ताः उपलभ्यन्ते, येषामध्यापनेन अध्यापकः दृष्टान्तकथने कुशलो भवेत।

**(५) श्यामपट्टप्रयोगकौशलम्–** अद्यत्वे कक्षा–कक्षेषु हरितपट्टाः, श्वेतपट्टाः अपि दृश्यन्ते। एतैर्विना कस्यापि कक्षाप्रकोष्ठस्य कल्पना एव भवितुन्नार्हति कक्षायामुपयुज्यमानेषु दृश्योपकरणेषु श्यामपट्टः प्राधान्यं विधति। अनेन पाठः, सरलं, बोधगम्यश्च जायते। पट्टस्य वर्णमाश्रित्य एव सुधाखण्डस्य निर्धारणं भवति सामान्यविषयाणामवबोधाय श्वेतवर्णस्य सुधाखण्डस्यैव प्रयोगो भवति।

एतान्यतिरिच्य कानिचित् शिक्षकौशलानि इतोऽपि वर्तन्ते यानि संस्कृतशिक्षके कुशलतां प्रतिपादयति–

**(६) विन्यासप्रेरणाकौशलम्**

**(७) पुनर्बलनकौशलम्**

**(८) पुनरावृत्तिकौशलम्**

इत्येतानि कानिचित् शिक्षणकौशलानि येषां निरन्तराभ्यासेन अवधानेन च उत्तमः आदर्शः कुशलश्च शिक्षकः भवितुमर्हति।

**संदर्भग्रन्थाः–**

(१) संस्कृतशिक्षणम् (२००६), प्रो. सन्तोषमित्तल, नवचेतना पब्लिकेशन्स, जयपुर
(२) संस्कृतशिक्षणम् (२००८), रजनीकान्तशुक्लः, राष्ट्रिय संस्कृत विद्यापीठम्, तिरुपतिः (आ.प्र.)
(३) संस्कृतशिक्षम्, झा उदयशङ्कर (२०१२), चौखम्बा सुरभारती प्रकाशनम्, वाराणसी
(४) संस्कृतशिक्षणम् नवीनप्रविधयश्च–शर्मा, च.ल.न. सिंह फतह, भारतीमुद्राप्रकाशनम्, त्रिचूर, केरला।
(५) शैक्षिकप्रविधिः– मिश्ररमाकान्तः

सहायकाचार्यः (शिक्षाविभागे)
जगद्गुरुरामानन्दाचार्य-राजस्थान-संस्कृतविश्वविद्यालयः, जयपुरम्

# संस्कृताध्यापकानां क्षमतोन्नयने शिक्षणदक्षतायाः प्रभावः

डॉ. विजयकुमारदाधीचः

कस्यापि विषयस्य स्तरस्य वा अध्यापकस्य कृते ज्ञानकौशलयोः महती आवश्यकता वर्तते। अध्यापकानां स्वकीयदायित्त्वनिर्वहणे, विद्यालयस्य प्रौन्नयने, छात्राणामधिगमानुभवाभिवर्धने शिक्षणोचित दक्षतानामुपरि अवधानम् आवश्यकं वर्तते। अस्मिन् सन्दर्भे Guerriero and Revai (2017) महोदययोः चिन्तनं वर्तते यत्- अध्यापकानां व्यावसायिकदक्षतायाः सम्प्रत्ययनिर्माणे विषयस्य, शिक्षणशास्त्रस्य, ज्ञानात्मक-भावात्मक-क्रियात्मक-संज्ञानात्मककौशलानां, वृत्तिविषयकनिर्णयक्षमतायाः महत्त्वपूर्ण स्थानम् अस्ति। अत्र शिक्षणक्षमतोन्नयने सहायकानां कार्याणां विवेचनं प्रस्तूयन्ते–

**छात्रैः सह उत्तमरीत्या अन्तःक्रिया स्थापनम्–**

संस्कृतशिक्षकस्य मुख्यः गुणः भवति सम्प्रेषणशीलता, प्रभावि अन्तःक्रियास्थापनाय सम्प्रेषणकारकाणां ज्ञानम् आवश्यकं भवति। अन्तक्रिया उत्तमा भवति चेत् छात्रैः अनुभूतकाठिन्यानामवगमनं सहजतया भवति। शिक्षणाधिगमयोः आधारोऽपि अन्तःक्रिया एव वर्तते।

**अधिगमवातावरणस्य निर्माणम्ः–**

अधिगमाव्यूहने वातवरणनिर्माणम् अनिवार्यं भवति। उत्तमवातावरणस्याभावे शिक्षणाधिगमः निष्फलो जायते। संस्कृताध्यापकस्य वातावरणनिर्माणे प्रायः दक्षता भवति यथा- काव्यपाठने, कथाकथनेन, प्रभावि-उद्दीपकप्रदानेन इत्यादि। वस्तुतःअधिगमवातावरणनिर्माणाय छात्राणामधिगमावश्यकतानां परिज्ञानम् आवश्यकं भवति। छात्राणां कृते अधिगमनाय सम-अवसराणां सङ्कल्पना विधातव्या।

**शिक्षणात्प्राक पूर्वसज्जता (पाठयोजनासन्दर्भे)**

अध्यापकस्य कृते विषयशिक्षणाय पाठप्रवर्धनाय उत्तमस्तरीया-पाठयोजनायाः महती आवश्यकता भवति। कस्यापि अध्यापकस्य शिक्षणस्याधारः तस्य पाठनात्प्राक् सज्जता अस्ति। संस्कृताध्यापकानां सन्दर्भपाठयोजनानिर्माणस्य दक्षतायाः महत्त्वं वरिवृत्यते।

**विविधशिक्षणाव्यूहानां प्रयोगे दक्षताः**

पाठ्यचर्यायाः प्रभाविरूपेण निर्वहणे विविधशिक्षणविधीनां, प्रविधीनां,आव्यूहानां च प्रयोगदक्षतायाः अनिवार्यता भवति। सम्प्रति संस्कृतशिक्षकाणां कृते पाठनाय केवलं व्याख्यानेन, दृष्टान्तेन, प्रवचनेन भाषणेन एव कार्यं न भवति अपितु अद्यतननूतन प्रविधिप्रयोगेण प्रभाविरीत्या

पाठनदक्षतायाः आवश्यकता वर्तते। अतः अस्मिन् सन्दर्भे अपि संस्कृताध्यापकानां जागरूकता अनिवार्या।

**कक्षायां सक्रियतायाः निर्धारणम्**

कक्षायां यदि छात्राः सक्रियाः भवन्ति तर्हि शिक्षणाधिगमप्रक्रिया नूनमेव सफला भवति स्वीयं लक्ष्यञ्चावाप्नोति। अतः शिक्षकेण कक्षासक्रियतायाः निर्धारणविषये यतनीयम्। तदर्थमुपायाश्च चिन्तनीयाः। विविधानां शिक्षणोपकरणानामनुप्रयोगेण कुशलसम्प्रेषणेन च कक्षायां सक्रियता निर्धारयितुं शक्यते।

**छात्राणामधिगमावश्यकतानां ज्ञानम्**

शिक्षणाधिगमप्रक्रियायां छात्राणामधिगमावश्यकतानां ज्ञानमपि शिक्षकस्य भवेदेव। यावत् शिक्षकः छात्राणामधिगमावश्यकतानां विषये न जानाति तावत् सः तेषामावश्यकतानां पूर्तिमपि सर्वथा कर्तुं न शक्नोति। अतः सर्वेणापि शिक्षकेण स्वीयच्छात्राणां काः -काः अधिगमावश्यकताः वर्तन्ते इति ज्ञात्वैव शिक्षणयोजना विधेया। येन शिक्षणोद्देश्यानि प्राप्तुं शक्येरन्।

**उत्तमसम्प्रेषणशीलता**

ज्ञानविनिमयप्रक्रियायां शिक्षकस्य उत्तमसम्प्रेषणशीलतापि अत्यन्तमपेक्षते। उत्तमसम्प्रेषकौशलाभावे शिक्षोद्देश्यानि कदापि प्राप्तुं न शक्यन्ते। यथोक्तं कालिदासेन यत् शिक्षकः विषयज्ञानेन साकं उत्तमः सम्प्रेषणशीलोऽपि भवेत् -

> **"श्लिष्टा क्रिया कस्यचिदात्मसंस्था, सङ्क्रान्तिरन्यस्य विशेषयुक्ता।**
> **यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव।"** मालविकाग्निमित्रम्

**सहकारभावना**

शिक्षकः छात्राणां यथाकालं सहयोगमपि कुर्यात् येन छात्राः स्वीयसमस्या समाधातुं स्वयं समर्थाः जायेरन्। अतः यत्र यत्र आवश्यकता स्यात् शिक्षकः छात्राणां समस्यासमाधाने सर्वदा तत्परो भवेत्। अपि च सहकारभावनायाः कक्ष्यायां विकासार्थं यतेत। येन अधिगमप्रक्रिया सरला सहकारभावयुक्ता च भवेत्।

**प्रभावि-व्यावसायिकतायाः प्रदर्शनम्**

कस्यचिदपि व्यवसायस्य साफल्यं तस्य व्यवसायस्य कृते विहिते प्रदर्शने आधारितं भवति। यदि व्यावसायिकं प्रदर्शनं प्रभावपूर्णं भवति तर्हि व्यवसायः नूनमेव सफलो भवति। अतः सर्वेणापि शिक्षकेण स्वीयशिक्षणव्यवसाये विविधोपचारैः क्रियाभिश्च प्रभावं जनयितुं सर्वदा यतनीयम्।

**व्यवसायं प्रति वचनबद्धतायाः प्रदर्शनम्**

प्रत्येकस्मिन्नपि कर्मणि श्रद्धाविश्वासौ अत्यन्तमावश्यकौ भवतः। यदि कर्मणि अस्माकं

श्रद्धाविश्वासौ न भवेतां तर्हि तत्कर्मणि कदापि साफल्यं प्राप्तुं न शक्यते। अतः स्वीये व्यवसाये अस्माकं श्रद्धाविश्वासौ भवेताम् अपि च तद्व्यवसायं प्रति अस्माकं वचनबद्धता भवेदेव यद् मया मनोवाक्कायकर्मभिः अस्य व्यवसायस्य साफल्याय यत्नो विधास्यत इति।

## सन्दर्भग्रन्थसूची


1. मित्तल, सन्तोषः . संस्कृतशिक्षणम् : प्र.सं. जयपुरम् : नवचेतना पब्लिकेशन्स, 2006.
2. मिश्रः , लोकमान्यः . साहित्यशिक्षणम् : लखनऊः मृगाक्षीप्रकाशनम्, 2010 मुद्रण
3. तिवारी, भोलानाथ. भाषा विज्ञानः 57 तम संस्करण. इलाहाबाद : किताब महल प्रकाशन, 2014.
4. द्विवेदी, कपिलदेव भाषाविज्ञान एवं भाषा शास्त्र : त्रयोदश संस्करण. वाराणसी : विश्वविद्यालय प्रकाशन, 2012
5. झा, उदयशङ्करः संस्कृतशिक्षणम् : वाराणसी चौखम्बा सुरभारती प्रकाशनम्, 2010.



सहायकाचार्यः, शिक्षाशास्त्रविभागः,

राष्ट्रियसंस्कृतसंस्थानम्,

जयपुरपरिसरः, जयपुरम्

# जैन-प्राकृतवाङ्मये शिक्षा

डॉ. अमित कुमारः

**शिक्षास्वरूपविमर्शः**

शिक्ष् धातोः भावे टापि च कृते शिक्षा-शब्दस्य व्युत्पत्तिः। शिक्षा शब्दस्य अर्थ अस्ति ज्ञानाभिग्रहणं, अधिगमः अध्ययनञ्च। भारते प्राचीनकाले शिक्षायाः उद्देश्यम् आसीत चरित्रनिर्माणं, व्यक्तित्वनिर्माणं, संस्कृतेः रक्षा सामाजिक-धार्मिककार्याणां सम्पादनार्थं नवयुवकान् प्रशिक्षणञ्च।

**शिक्षणीयविषयाः**

वेदाः भारतीयसाहित्यस्य अत्यन्तः प्राचीनः साहित्यः मन्यते, अत एवं वेदानामाध्ययनम् आवश्यकम् आसीत तस्मिन् काले। प्राचीनजैनसूत्रेषु ऋग्वेदस्य यजुर्वेदस्य सामवेदस्य च वर्णनं प्राप्यते।[१] वैदिक ग्रन्थेषु अधोलिखितशास्त्राणां वर्णनं प्राप्यते-षड्वेदेसु ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः, इतिहासः (पुराणः) निघण्टुश्च आसीत, षड्वेदांगेसु संख्यानः (गणितः), शिक्षा, कल्पः व्याकरणः, छन्दः निरुक्तः ज्योतिषश्च आसीत, षडूपांगेसु वर्णित-विषयाः षष्ठितंत्रश्च आसीत।[२]

उतराध्ययनसूत्रस्य टीकायां चतुर्दशविद्यास्थानानां वर्णनं प्राप्यते- षड्वेदांगाः, चतुर्वेदाः, मीमांसा, न्यायः, पुराणः, धर्मशास्त्रश्च।[३]

एतं विहाय जैनागमेषु अनुयोगद्वारे[४] नन्दिसूत्रे[५] च अधोलिखितानां लौकिकश्रुतानां वर्णनं प्राप्यते- महाभारतस्य रामायणस्य[६], भीमासुरुक्खस्य[७], कौटिल्यस्य[८], घोटकमुखस्य[९], सगडिभद्दिआउस्य, कप्पसिअस्य, णागसुहुमस्य, कनकसपृत्याः[१०], वैशिकस्य, वैशेषिकस्य, बुद्धशासनस्य, कपिलस्य[११] लोकायत्तस्य[१२] षष्ठितंत्रस्य, माठरस्य, पुराणस्य, व्याकरणस्य, नाटकस्य, द्विसप्तत्तिकलानां अंगोपांगसहित चतुर्वेदानाम्। नन्दिसूत्रे त्रैराशिकस्य, भगवद् पात जलेः, पुरुषदेवस्य च वर्णनं प्राप्यते।[१३]

स्थानांगसूत्रे नौपापश्रुताः स्वीकृतः-

**1. उत्पातः**- रुधिरवृष्टि राष्ट्रोत्पातस्य प्रतिपादकः शास्त्रः, **2. निमित्तः**- अतीतकालस्य ज्ञानस्य परिचायकः शास्त्रः, **3. मंत्रशास्त्रः**, **4. आख्यायिका**- मातंगीविद्या यत्र चांडालिनी भूतकालस्य वार्तालापं कुर्वन्ति **5. चिकित्सा (आयुर्वेदः)**, 6. लेखादयः द्विसप्ततिः कलाः 7. आवरणः **(वास्तु विद्या)** 8. अज्ञानः- **भारतः, काव्यं, नाटकादि लौकिकश्रुतः**, 9. मिथ्याप्रवानः बुद्धशासनादयः।

## शिक्षकस्य योग्यता

अध्यापकाः आदरणीयाः भवन्ति स्म तस्मिन् काले। जैनसूत्रेषु त्रिविध आचार्याणां वर्णनं प्राप्यते- **कलाचार्याः, शिल्पाचार्याः, धर्माचार्याश्च।** कलाचार्य-शिल्पाचार्ययोः विषये उत्तं यत् तस्य उपलेपनं संमर्दनञ्च भवेतीति। तेषां पुष्पार्चनां भवेत, स्नानान्तरं तेषां कृते वस्त्रभूषणादयः प्रदानमपि भवेत। भोजनादि व्यवस्था अपि सम्यक् प्रकारेण भवेत् तेषां कृते सम्यक् अजीविकाया व्यवस्था अपि आवश्यकि। धर्माचार्या दृष्ट्वा तेषां सम्मानं कुर्यात्, तेषां कृते भोजनादिनां सम्यक् व्यवस्था अपि कुर्यात्।[१५] यदि ते अकालप्रदेशे अस्ति चेत् सम्यकप्रदेशे तेषां व्यवस्था कुर्यात्, चिरकालीकरोगेन मुक्तीकरणस्युपायं कुर्यात्। अध्यापकानां दायित्वम् अस्ति यत् ते विद्यार्थिनां शिक्षणाय पूर्णयोग्यः भवेयुः। विद्यार्थिनां प्रश्नसमाधाने ते प्रविणाः स्यात्, ते कदाऽपि अहंकारं न प्रदर्शयेत, सदा एव सम्यक् उत्तरं उपस्थापयेत।[१७]

अध्यापकानां विद्यार्थिनां च सम्बद्धः तस्मिनकाले प्रेमपूर्णः भवति स्म, विद्यार्थिनः गुरुणां प्रति श्रद्धाभावस्य, सम्मानस्य च प्रयोगं कुर्वन्ति स्म। सुविनितशिष्यानां विषये उक्ति अस्ति यत् ते गुरुमहोदयेन पाठितं पाठं सर्वदा एव ध्यानपूर्वकं शृणुवन्ति, प्रश्नं पृच्छन्ति, प्रश्नोत्तरं शृणुवन्ति, तस्यार्थं ग्राह्यन्ति, तस्मिन् विषये चिन्तयन्ति, तस्मिन् विषयस्य प्रमाणिकता विषये निश्चयं कुर्वन्ति, तस्य अर्थस्मरणं कुर्वन्ति तथा च तदनुसारमाचरणं कुर्वन्ति।[१८] सुविनितशिष्याणां दायित्वमस्ति यत् ते अध्यापकेन सह शिष्टव्यवहारं कुर्यात्, कदापि मिथ्याभाषणं न कुर्यात्, तथा च अध्यापकस्य आज्ञापालनं कुर्यात्। यदि शिष्यं ज्ञातं भवेत यत् तस्य आचार्यः कुपितः अस्ति चेत्, विनयेन तेषां क्रोधस्युपशमनं कुर्यात् यदि कदाऽपि आचार्यः क्रुद्धं भवति चेत शिष्यस्य दायित्वमस्ति यत् सः शान्तचितरूपेण व्यवहारं कुर्यात्। सम्प्रति सः एव विनीत छात्रः अस्ति यः गुरोः आज्ञया पालनं करोति, तस्य समीपे भवति, तस्य निर्देशेन एव कार्येषु संलग्नः भवति।[१९]

## शिक्षार्थिपरीक्षणम्

प्राचीनकाले विद्यार्थीनः सच्चरित्रः भवति स्म। स्वल्प छात्राः अध्यापकस्य गृहे निवासिता एव विद्याध्ययनं कुर्वन्ति स्म। शंखपुरस्य राजकुमारस्य अगडदत्तनाम्नस्य राजकुमारस्य वर्णनं प्राप्यते यः वाराणसी नगरस्य कालाचार्यस्य पार्श्वे निवसिता विविध-कलाषु प्रविणः जातः।[२०] कौशाम्बी नगरे जितशत्रुनाम्नः राजा आसीत सः चतुर्दशकलासु प्रविणं काश्यपनाम्नं ब्राह्मणं स्वकीयं राज्ये नियुक्तः। परं च तस्य मृत्युजाता अत एव तस्य स्थाने राजा अन्यं ब्राह्मणं नियुक्तः कृतः। काश्यपस्य पुत्रस्य नामः कपिल आसीत। स्वकीयं पितुः मृत्योऽन्तरं रुचिपूर्वक विद्याध्ययनस्य निश्चयः कृतः, परं च तत्र ईर्ष्यवशात् कोऽपि तम् अध्यापनाय उद्यतः न अभवन्। सः पठनाय श्रावस्तीनगरे प्रेषितः। तत्र गत्वा भिक्षाटनं कृत्वा अध्ययनं करोति स्म। अत एव अध्यापकस्य नगरे कस्याऽपि श्रीमन्तगृहे तस्य

निवसनाय व्यवस्था जाता तथा च भोजनस्य प्रबन्ध अपि अभवत्। तत्र एका दासचेटी तस्य कृते भोजनं परीवेष्यति स्म, तेनसह कपिलस्य प्रेमः अभवत।[२१] यदा-कदा छात्रस्य विवाहः स्वकीयं अध्यापकस्य पुत्र्या सह अपि भवति स्म। मगध देशस्य अचलग्रामे धरणिजद नाम्नः ब्राह्मणः निवसति स्म। तस्य पुत्रस्य नामः कपिलः आसीत। सः रत्नपुरनगरे विद्यान्यासस्य कृते गत्वा उपाध्यायस्य गृहे निवसति स्म। स्वल्पसमयानन्तरम्, उपाध्यायः स्वकीया कन्यायाः सत्यभामायाः विवाहं तेन सह कृतः।[२२]

**अशिष्ट-शिष्याः**

अशिष्टशिष्याः स्वकीयं आचार्योऽपरि अपि प्रहारं कुर्वन्ति स्म। इन्द्रपुरस्य राज्ञः इन्द्रदत्तस्य द्वाविंशतिपुत्राणां वर्णनं कृतं पूर्वमेव। यदा तान आचार्यस्य पार्श्वे पठनाय प्रेषणं जातं तदा ते किमऽपि अध्ययनं न कृतवन्तः। आचार्याः ताडयन्ति स्म वा दुर्वचनस्य प्रयोगम् अपि कुर्वन्ति स्म। यदि आचार्यः तेषां ताडना करोति स्म तदा ते स्वकीया मात्रा उपलभ्यति स्म। माता आचार्योऽपरि क्रोधं करोति, सा कथ्यति यत् पुत्राः अथ एव ना भवन्ति।[२३]

कति शिष्याः स्वकीयं गुरवेः आदेशेन कलहायते स्म अपि। हरिकेशमुनि यदा कस्याऽपि ब्राह्मणस्य यज्ञवाटके भिक्षाटनाय गतवान् तदा अध्यापकस्य संकेतेन छात्राः मुनिं डंडेन, वेत्रेण, प्रतोदेन ताडयन्तः, येन तं रुधिरवमनं जातं।[२४]

**शिष्यानामाचरणम्**

शिष्यान् शैलः, कोटः, तितउः सदृशः उक्त। स्वल्पशिष्याः पर्वतसदृशः अत्यन्तः कठोरः भवन्ति स्म तथा च ते कृष्ण भूमिदृशः आचार्याणां निर्दिष्टमार्गाणामनुसरणं कुर्वन्ति। कुटाणां चत्वारिभेदाः निर्दिष्टः छिद्रकुटः (यथा घटस्य उपष्टम्भः न भवति), खण्डकुटः, बोटकुटः, सकलकुटश्च। स्वल्पशिष्याः तितउः सदृशः भवन्ति ये एकः कर्णेन शृणुवन्ति अन्यः कर्णेन निष्काषणं कुर्वन्ति। तेन विपरीतः स्वल्पछात्राः खपुर (तापसानां एकः पात्रः) सदृशः भवन्ति। यथा खपुरे बिल्वरसेन लेपकरणेन, तेन जलं न निःसरति, अत एव शिष्याः अपि आचार्यस्य वचनं ग्राह्यन्ति। यथा तितउ घृतं अधोगच्छति, दोषं उपरि एव भवति तथैव स्वल्प शिष्या गुणोऽपरि दृष्टिं न स्पृश्यसि अवगुणान् एव गृहणाति। स्वल्प शिष्याः हंससदृशः नीर-क्षीरविवेकी भवन्ति। स्वल्पशिष्याः महिषसदृश्याः भवन्ति, ये ताडागे प्रवेशित्वा तडागजलं प्रदुष्यन्ति, येन न स्वयमेव पिबतुम शक्नोति, न तस्य सहयोगिनः एव। स्वल्पशिष्याः मषकसमानः भवन्ति यथा मषकः उपवेशन-समये एव दंशति तथैव एते अपि कुर्वन्ति। कतिपय छात्राः जलौकः सदृश्याः भवन्ति। एतादृशः शिष्यः आचार्यं कष्टं न प्रदास्यन्ति अपितु श्रुतज्ञानलाभं कुर्वन्ति। कतिपयशिष्यानाम् उपमा मार्जारीसदृश्यः भवति या दुग्धं भूम्यां पतित्वा तं पिबति। एतादृशा शिष्याः अहंकारवशात्, यदा

आचार्याणां व्याख्यानं भवति तदा ध्यानं न दास्यन्ति, अपितु यदा सर्वेजनाः परस्परं संवादं कुर्वन्ति तदा ते शृणुवन्ति।

अग्रे शिष्याणां तुलना चतुः चतुर्वेदी ब्राह्मणानां सह कृतः। कोऽपि सज्जनः एतेभ्यः ब्राह्मणेभ्यः गां दत्तवान्। ते वारंवारं क्रमशः दुग्धं दोहनं कुर्वन्ति स्म। पर च प्रत्येक जनः विचारयति स्म यत् स्वः अपरः दोहनं करिष्यति। अत एव अहं किमर्थं तृणम् अर्पयेत? एतादृशः विचारयित्वा ते दुग्धं दोहनं कृत्वा तं भोजनं न अर्पयन्ति स्म। परिणामतः गौ मृत्यु प्रास्वत्यः। तदानन्तरं कोऽपि तेभ्यः गां न दत्तवन्तः।

अन्यः उदाहरणम् अस्ति गोशीर्षचन्दन-निर्मितः अशिवोपशमिनी भेर्याः। एषा भेरीः कृषणस्य पार्वे आसीत। अस्या शब्दश्रवणेन षड्मासपर्यन्तं रोगः न भवति स्म वा कोऽपि पूर्वेन् रोगग्रसितः भवेत तर्हि तस्य् रोगः शान्तः भवति स्म। एकदा कोऽपि वणिकः वैदेशिकः द्वारीकानगर्यां आगतः, सः शिरोवेदनया व्याकुलः आसीत्। वैद्यः तं गोशीर्षचन्दस्य लेप निर्देशितं परं च गोशीर्षचंदनं बहुप्रयत्नेन अपि न लब्धः। अन्ते सः बहुद्रव्यं दत्वा कृष्णभेरी- पालं स्वल्पं भेरीखण्डं क्रयितः। अत एव यदा तस्य आवश्यकता भवति, सः स्वल्पखण्डं भेरीपालेन ग्रह्यति स्म। परिणामतः भेरी खण्डिता जाता, तस्य वादनम् अवरोधः जातः तथा च प्रजाः रुग्णाः जाताः। यदा कृष्णम् अस्य ज्ञानं जातं तदा सः भेरीपालम् आहुत्वा तस्य वंशस्य मूलोच्छेदं कृतम् अत एव सूत्रार्थं यः खण्डितं करोति सः कुशिष्यः मन्यते।

अत एव यः शिष्यः स्वकीयं आचार्यं निष्ठुरवचनं वदति, सः कदाऽपि प्रशस्तः न भवतीति।[25]

**अनध्यायः**

अनाध्यायावसरे विद्यालयाः अवरोधः भवति स्म। अन्याऽपि बाह्यकारणेन अपि पाठशाला अवरुद्धः भवति स्म। यदि कदाऽपि नभे असमये मेघदर्शनं भवेत, मेघगर्जना भवेत, विद्युत्-भासः भवेत, वृष्टिपातः भवेत, तुषारः पतति, चन्द्रगहणं सूर्यग्रहणं भवेत तदा विद्यालयः अवरोधः भवति स्म। यदा द्वे सेनामध्ये युद्ध भवेत, वा द्वे ग्रामौ युद्ध भवेत तदाऽपि अनाध्यायः भवति। यदा स्त्रियाः कलहं कुर्वन्ति स्म, मल्लयुद्धाः भवन्ति स्म, ग्रामस्य कस्याऽपि वा ग्राम प्रधानस्य मृत्योः भवेत तर्हि अनाध्यायः भवति स्म। यदि पुरभागे। बालकस्य जन्मः अपि भवेत तदा अनाध्यायः भवति स्म।[26]

**विद्यार्थिनां सम्मानः**

यदा विद्यार्थिनः अन्यनगरेषु विद्याध्ययनं कृत्वा गृहं प्रति आगच्छन्ति स्म तदा तेषां स्वागतं भवति स्म। दशपुरे सोमदेव ब्राह्मणस्य रक्षितनाम्नः पुत्रः आसीत। यदा सः स्वकीयं पुत्रं गृहे पाठितं न सक्षम स्युः तदा सः पाटलिपुत्रनगरे पठनाय प्रेषितः। तत्र रक्षितः चतुर्दशविद्यानाम् अध्ययनं कृतवान्। विद्याध्ययनान्तरं यदा सः स्वकीयं गृहे गतवान् तदा नगरं ध्वजादयेन सुसज्जितं कृतं।

नगरस्य राजा स्वयमेव तस्य सत्कारं कृतवान्। गजे आरुढः भूत्वा रक्षितः स्वकीयं गृहे आगतः। रक्षितस्य गृहं चन्दन-कलशादयेन सुसज्जितं कृतं। जनाः तम् उपहारम् अपि दतवन्तः। तस्य गृहं हिरण्य-सुवर्णादयेन पूर्णः जातः। रक्षितस्य मित्राः सम्बन्धिनश्च तेन मिलित्वा अत्यन्तः प्रसन्न बभूवः।[२७]

**विद्याध्ययनस्य प्रमुखकेन्द्राः**

प्राचीनकाले भारतवर्षे प्रमुखशिक्षाकेन्द्राः नृपनगराः, तीर्थस्थानानि, आश्रमाः आसन्। नृपाः, राजाराजेश्वराः, क्षेत्रपत्याः च केन्द्रानाम् आश्रयदाता भवन्ति स्म। वाराणसी शिक्षायाः मुख्यः केन्द्रः आसीत। शंखपुरस्य निवासीनः राजकुमार अगडदत्तः विद्याध्ययनाय वाराणस्याम् अगतवान् आसीत, तत्र तिष्ठ्वा उपध्यायस्य गृहे विद्याध्ययनं कृतवान्। श्रावस्तीनगरः शिक्षायाः द्वितीयः केन्द्रः आसीत। पाटलीपुत्रः अपि विद्याध्ययनस्य केन्द्रः आसीत।[२८] दक्षीणे प्रतिष्ठानः विद्यायाः वृहद् केन्द्रः आसीत[28]। तक्षशिलायाः वर्णनं बौद्धकाले अनेकस्थाने प्राप्यते।

धर्म-नीतिशास्त्राणां कथाकारेषु कथिकानाम् उल्लेखः प्राप्यते। एते जनाः तरंगवती, मलयवती, आख्यायिका, धूर्ताख्यानं, आख्यानकं, गीतपदं, श्रृंगारकाव्यं, वासुदेवचरितं, चेतककथा, धर्म-अर्थ-कामविषयक कथानकानां प्रतिपादनं कृत्वा निम्नवर्गस्य जनानां मध्ये परिभ्रमणं कृत्वा धर्मस्य दर्शनस्य च प्रचलनं कुर्वन्ति स्म।[29]

**सन्दर्भ-सूची-**

1. स्थानांगसूत्र 3.185, आवश्यकचूर्णी पृ.- 215, सूत्रकृतांगचूर्णी पृ.- 16, वासुदेवहिण्डी पृ. 182
2. व्याख्याप्रज्ञप्ति 2.1, औपपातिक 38, पृ. 172
3. तत्रैव 3 पृ. 56, मिलिन्दप्रश्न, पृ.-3, ब्रह्मजालसुत्त, पृ.- 11, महाभारत 12.122.31
4. सूत्र 40
5. सूत्र 42 पृ. 193
6. अनुयोगद्वारसूत्र 25 पृ.- 25-26, निशिथचूर्णी 11.10
7. व्यवहारभाष्य, 1 पृ.- 132
8. सूत्रकृतांगचूर्णी, पृ.- 208
9. अर्थशास्त्र 5.5.93, 56, मज्झिमनिकाय 2,44 पृ. 414
10. ईश्वरकृष्णस्य साख्यकारिकायाः अपरः नामः
11. आवश्यकचूर्णी पृ.- 229
12. दीर्घनिकाय 1
13. सूत्र 42
14. सूत्रकृतांग 2,2.30
15. राजप्रश्नीयसूत्र 190 पृ.- 328
16. स्थानांग 3.135, मनु स्मृति 2.225

17. आवश्यकनियुक्ति 136
18. तत्रैव 22
19. उतराध्ययनसूत्र 1.2, 9,12, 13, 18, 22 27, 41
20. उतराध्ययनटीका 4, पृ.- 83
21. तत्रैव पृ.- 123
22. तत्रैव 18, पृ.- 243
23. उतराध्ययनटीका 3.65
24. उतराध्ययनसूत्र 12.18-19
25. आश्यकनियुक्ति 139, बृहत्कल्पभाष्य पीठिका 334-361
26. व्यवहारभाष्य 7.281-319
27. उतराध्ययनटीका 2, पृ.- 22
28. कल्पसूत्रटीका, 4 पृ.- 90
29. वृहत्कल्पभाष्य 1.2564

पी.डी.एफ, प्राकृत
रा.सं.सं., जयपुरपरिसरः, जयपुरम्

# शिक्षणव्यवसाये दक्षताप्राप्त्यर्थं बालमनोविज्ञानस्य महत्त्वम्

डॉ. रेखा शर्मा

**शोधपत्रसारांश:** -

व्यावसायिकरुपेण सैव शिक्षक: कुशल: य: शिक्षणकलायां निपुण:, कार्यकुशल:, ज्ञानसम्पन्न:, नूतनतकनीकीनां प्रयोगकर्त्ता अस्ति। उत्तमशिक्षकस्य न केवलं विषयोपरि दक्षता भवति अपितु तस्य कुशलताया: प्रदर्शनम् तस्य कक्षाप्रबन्धने, विद्यालये, प्रशासने, नेतृत्वे, पाठ्यक्रमपूर्णे तथा च अभिप्रेरणामूल्यानाञ्च सन्दर्भे सर्वत्र दृश्यते। बालमनोविज्ञानस्य ज्ञानं शिक्षकाय अत्यन्तमावश्यकम् वर्तमान शिक्षाप्रणाली बालकेन्द्रिता वर्तते, ज्ञानस्य केन्द्रं बालक: अस्ति अत एव सैव शिक्षा प्रभावशीला वर्तते यस्या अधिगम: बालक: कठिनतां विना सारल्येन कर्तुं प्रभवति। बालमनोविज्ञानम् शिक्षकस्य मित्रमस्ति स तस्य कृते उचित मार्गदर्शनं ददाति तथा च उत्तमरीत्या शिक्षणं कथं करणीयम् तस्य प्रभाव: किम् भवति इत्यादिनां समाधानं प्रददाति। बालमनोविज्ञानस्य ज्ञानेन बालानां विविधावस्थानां तेषां रुचे:, अभिप्रेरणायाश्च ज्ञानम् भवति। अनेन शिक्षक: स्वव्यक्तित्वविषये नवाचाराणां विषये तथा च उत्तम नेतृत्वं कथं भवति इत्यादिनां विषये ज्ञानं प्राप्नोति। इत्थं बालमनोविज्ञानस्य महत्त्वं सम्पूर्णशैक्षिकप्रक्रियायां वर्तते येन व्यावसायिकरुपेण कुशलशिक्षकाणां निर्माणं भविष्यति इति।

**मुख्यौ शब्दौ – व्यावसायिक दक्षता, बालमनोविज्ञानम्।**

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा।।

सर्वेषु द्रव्येषु विद्यैव सर्वोत्तमद्रव्यमस्ति। यतोहि विद्यां न कोऽपि चोरयति, न तस्या: मूल्यं, न तस्या: नाशं कर्तुं शक्नोति। विद्या धनं तु प्रधानं धनं वर्तते। विद्या प्राणिनां सर्वविधकल्याणं कामयन्ती नैतिकं व्यावहारिकं चारित्रिकञ्च व्यक्तित्वं विकासयति, कर्तव्याकर्तव्यकं, शुभाशुभनिदर्शकं विश्वहितसम्पादकं, सुखशान्तिसाधकं चतुर्वर्गावाप्तिसोपानस्वरूपकञ्च शिक्षयति। जीवनोन्नतिकरं मार्गञ्च अनुशास्ति। यथोक्तं-

**विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो**
**धेनु: कामदुधा रतिश्च विरहे नेत्रं तृतीयं च सा।**
**सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणम्**
**तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु।।**

इत्थं ज्ञायते यत् शिक्षा एव मनुष्यस्य परं सुखं। धनस्यापर नाम एव सुखं तथा च पुनः सुखस्य प्राप्तिः शिक्षा माध्यमेन भवति। वर्तमाने "अर्थकृते विद्या" एव सर्वाधिकं प्रचलितं सूत्रं वर्तते। शिक्षायाः अर्थमूलकता हि व्यावसायिकता रुपेण ज्ञायते। प्रतियोगिताप्रधानेऽस्मिन् युगे सुखदभविष्यनिर्धारणाय प्रत्येकं जनः स्वयोग्यतानुसारेण व्यावसायविषयस्य चयनं करोति। अनया दृष्ट्या शिक्षणव्यवसायविषये विचारयामः चेत् ज्ञायते यत् शिक्षाशास्त्रम् स्वयमेव व्यावसायिकपाठ्यक्रमान्तर्गते सम्मिलितम्। शिक्षाशास्त्रस्याध्ययनं विना शिक्षणव्यवसायस्य प्राप्तिः न भवति। शिक्षाशास्त्रे विद्यावारिधिः शिक्षाचार्यः शिक्षाशास्त्री एते सर्वे पाठ्यक्रमाः भावीअध्यापकानां कृते शिक्षणव्यवसायक्षेत्रे गमनार्थमावश्यकाः। शास्त्रेऽस्मिन् ये योग्याः सन्ति, निष्णाताः सन्ति ते तु निश्चितरुपेण आजीविकां प्राप्स्यन्ति। यथा-

**शिक्षाशास्त्रे आजीविकादृष्ट्या व्यवसायस्यावसराणि-**

- शिक्षाशास्त्री पाठ्यक्रमपश्चात् अध्येता भाषाध्यापकः, संस्कृतस्य तथा च आधुनिकविषयाणां यथा-आंग्लम्, हिन्दी, सामाजिकविज्ञानस्य शिक्षकः भवितुमर्हति।
- शिक्षाचार्यं कृत्वा अध्यापकशिक्षकः (शिक्षकप्रशिक्षणमहाविद्यालयेषु) भविष्यति।
- विद्यावारिधीं कृत्वा महाविद्यालये, विश्वविद्यालये च अध्यापकः भविष्यति।
- यस्य द्वयाधिकभाषाणामोपरि अधिकारः वर्तते सः अनुवादक्षेत्रेऽपि सुअवसरं प्राप्नोति। लेखनक्षेत्रेऽपि शिक्षाशास्त्राध्येतृणां भविष्यः सुरक्षित अस्ति। एतदतिरिच्य अनेकानि क्षेत्राणि भविष्यन्ति।

इत्थं ज्ञायते यत् अत्र द्वाराणि तु सन्ति किन्तु लक्ष्यं सैव प्राप्नोति यः अस्मिन्शास्त्रे व्यावसायिकदक्षतामर्जयति।

**व्यावसायिकदक्षताया अभिप्रायः-**

व्यावसायिकरुपेण सैव शिक्षकः कुशलः यः शिक्षणकलायां निपुणः कार्यकुशलः ज्ञानसम्पन्नः नूतनतकनीकीनां प्रयोगकर्त्ता, मनोविज्ञानस्य ज्ञाता च अस्ति। दक्षशिक्षकस्य न केवलं विषयोपरि दक्षता भवति अपितु तस्य कुशलतायाः प्रदर्शनम् तस्य कक्षाप्रबन्धने, प्रशासने, विद्यालये, समाजे, पाठ्यक्रमे, अभिप्रेरणामूल्यानां सन्दर्भे सर्वत्र मिलति। इत्थं ज्ञायते यत् दक्षता प्राप्त्यर्थम् अनेकानि सोपानानि सन्ति किन्तु सर्वाधिकं प्रभावीसाधनमस्ति बालमनोविज्ञानस्य ज्ञानम्। यतोहि व्यक्तित्वस्य सर्वाङ्गीणऽभिवृद्धिरेव शिक्षाया उद्देश्यम्। बालके विद्यमानाः क्षमताः योग्यताश्च काः, सः कस्यां दिशि प्रगतिं प्राप्नोति, मानवसमाजस्य कृते सः कीदृशरीत्या उपयोगी भवितुमर्हति, सः सरलतया अधिगमे कथं समर्थो भवति बालकानां वैयक्तिकविभिन्नताः काः सन्ति, मानसिकयोग्यताया आधारेण छात्राणां वर्गीकरणं कथं सम्भवेत्, विशिष्टबालकानां शिक्षाव्यवस्था कथं स्यात्, इत्यादीनां समस्यानां समाधानं शिक्षा-मनोविज्ञानेनैव बालमनोविज्ञानेनैव वा भवति।

शिक्षणे अध्यापकस्य प्रत्यक्षसम्बन्धः छात्रैः सह भवति। सः छात्राणां प्रगतिपथि एकः मार्गप्रदर्शकोऽस्ति। यदि सः उचितैः वैज्ञानिकविधिभिः स्वविषयस्य ज्ञानं छात्रेभ्यः प्रददाति तर्हि तस्य शिक्षणं न केवलं प्रभावी अपितु छात्रोपयोगी अपि भविष्यति।

**उत्तमाध्यापकाय बालमनोविज्ञानस्यावश्यकता–**

- बालकानां प्रकृतेः स्वभावस्य तेषाम् आवश्यकताञ्च ज्ञानार्थम्
- बालकानां समस्यायाः निदानं तथा च तासामुपचारार्थम्
- व्यावसायिककुशलतायाः वृद्ध्यर्थं रुचिकरशिक्षणप्रदानार्थम्
- शिक्षकाय नवीनमनोवैज्ञानिकविधीनां प्रविधीनां च ज्ञानम्
- बालकस्य उचितमूल्यांकनाय।

**व्यावसायिकदक्षताप्राप्त्यर्थं बालमनोविज्ञानस्य महत्त्वं–**

सर्वप्रथमं तु शिक्षकप्रशिक्षणपाठ्यक्रम एव व्यावसायिक पाठ्यक्रमः वर्तते। अर्थात् सैद्धान्तिकपक्षस्यातिरिक्तम् अत्र प्रयोगिकपक्षस्य प्रधानता अधिकास्ति। अत्रागतानां क्षेत्रं पूर्वमेन निर्धारितम् यत् अत्र आगत्य सर्वे शिक्षका एव भविष्यन्ति। इदानीं कीदृशाः शिक्षकाः भविष्यन्ति कुशलाः सफलाः उत्तमाः अथवा अकुशलाः शिरोवेदनादायकाः वा। अतएव शिक्षकाः शिरोवेदनाकारी मा भवेत्, अरुचिकरशिक्षणप्रदातारः मा भवेत् एतदर्थं बालमनोविज्ञानस्य ज्ञानं शिक्षकाणां कृते परमावश्यकम्। बालमनोविज्ञानेन शिक्षकाः दक्षाः भविष्यन्ति यदि ते अधोलिखितानामुपायानामवलम्बनं स्वीकरिष्यन्ति यथा–

**बालविकासस्यावस्थानां ज्ञानम्–** अस्माकं कार्यक्षेत्र ज्ञानस्यापेक्षायां भावात्मकमधिकमस्ति। बालकस्य ज्ञानं विना सफलशिक्षणम् नैव भवति शिक्षकाय आवश्यकमस्ति यत् सः सफलताप्राप्तये बालकस्य विभिन्नावस्थानां ज्ञानं प्राप्नुयात् यतः आसामवस्थानां कारणेन एव सः बालके भूतपरिवर्तनानुसारं स्वशिक्षणपद्धतिं विकासयितुं शक्नोति। बालविकासस्य विभिन्नाः अवस्थाः यथा– गर्भावस्था, शैशवावस्था, बाल्यावस्था, किशोरावस्था इत्यादयः सन्ति। आसु विभिन्नावस्थासु बालस्य व्यक्तित्वं विभिन्नप्रकारेण विकसितो भवति। अतएव यदि अध्यापकः बालकस्य एतासामवस्थानां तथा च तस्य शारीरिकं मानसिकं संवेगात्मकं भाषात्मकं सामाजिकञ्च विकासविषये जानाति तर्हि बालकानां शिक्षणं यथोचितरीत्या कर्तुमर्हति।

**बालकस्य रुचेः ज्ञानम् तथा च अभिप्रेरणां प्रति उन्मुखीकरणम्–** अभिप्रेरणा, रुचिं विना छात्रः अधिगमः नैव करोति। सैव शिक्षकः योग्यः अस्ति यः बालकेषु प्रिय भवति। बालकेषु प्रियः शिक्षकः बालकान् ज्ञात्वा शिक्षणं करोति, रुचिकरं पाठयति। अतएव शिक्षकाय बालकानां रुचेः तथा च तेषां कृते अभिप्रेरणायाः स्थानं महत्त्वपूर्णं वर्तते। अभिप्रेरणा तथा च रुचेः ज्ञानार्थं बालमनोविज्ञानम् शिक्षकाणां सहायतां करोति। अभिप्रेरणा एका एतादृशी प्रक्रिया वर्तते यस्यां मनुष्यस्य

आन्तरिकशक्तयः वातावरणे विद्यमानविभिन्नलक्ष्याणां वस्तूनि प्रति निदेशिताः भवन्ति। पक्षेऽस्मिन् मैक्डूगल महोदयः कथयति यत्–

"प्रेरकवृत्तयः प्राणीनामान्तरिक्यः मनोदैहिक्यश्च दशाः सन्ति याः तान् किमपि कार्यं विशिष्टरीत्या सम्पादनार्थं प्रेरयन्ति"

अतः मनोविज्ञानस्य ज्ञानेन अध्यापकः अभिप्रेरणाया उपयोगः स्वशिक्षणे कर्तुं अर्हति। अत्र अभिप्रेरणानार्थं केचन बिन्दवः सन्ति येषामुपयोग अध्यापकः कक्षायां करणीयः यथा–

- कक्षायां छात्राणां सम्मानं भवेत्। अध्यापकः कदापि तेषामपमानं मा कुर्यात्। बालकस्य अध्ययने रुचि भवेत् न वा किन्तु कदापि कक्षायां छात्रस्यापमानं मा भवेत्। छात्रान् अभिप्रेरयेत् यत् भवन्तः कार्येकरणे सक्षमाः सन्ति। भवन्तः किमपि कार्यं कर्तुं अर्हन्ति। प्रयास करणीयः। इत्यादयः अभिप्रेरणा संयुक्तानि वचनानि यदि अध्यापकः कथयन्ति तर्हि निश्चितरुपेण बालकानां रुचिः पाठे भविष्यति।
- रुच्युत्पन्नार्थं शिक्षकस्य ध्यानं भवेत् यत् भिन्नावस्थायाः बालकानां शिक्षणस्य विधयः भिन्नाः भवन्ति। शिशुस्तरे क्रीडाप्रणाली–माध्यमेन अध्यापनमेव समीचीनम्। उचितविधीनां चयनेन विद्यालयीय कार्येषु बालकः रुचिं गृह्णाति, कार्येषु आनन्दानुभूतिर्भवति। तथा च श्रान्तेः नीरसतायाश्च अनुभवः न करोति। सहायकसामग्रीभिः प्रकृतिभिः चार्टपत्रैश्च पाठ्यवस्तु स्पष्टयति। आत्मविश्वासोऽनुभूयतेः सः स्वयमेवाधिगमनार्थं अभिप्रेरितं भवति। इत्थं अभिप्रेरणायाः महत्त्वं शिक्षकाय महत्त्वपूर्णमस्ति।

**शिक्षकस्य व्यक्तित्वम्–** व्यावसायिकरुपेण कुशलतासम्पादनार्थम् शिक्षकस्य न केवलमान्तिरिकम् अपितु बाह्यव्यक्तित्वमपि समीचीनम् भवेत्। अस्माकं शास्त्रेऽपि उल्लिखितं वर्तते यत्–

**वस्त्रेण वपुषा वाचा विद्यया विनयेन च**
**वकारैः पञ्चभिर्युक्तं गुरोः प्राप्नोति गौरवम्।**

अर्थात् उत्तमशिक्षकः सैव अस्ति यस्य शरीरम् वस्त्रम्, ज्ञानम्, आचरणम् वाक्व्यवहारं च सर्वम् समीचीनं भवति।

**विश्वविद्यालयानुदानायोगरपि–** शिक्षकस्य नवविशेषताः प्रतिपादयत् 1. शुचि 2. वाचस्वी 3. वर्चस्वी 4. धृतिमान् 5. स्मृतिमान् 6. कृतिकः 7. नम्रता 8. उत्साही 9. जिज्ञासु च।

अध्यापकः सर्वदा सक्रियः भवेत्। पठने, पाठने सक्रियः यदि भवति तर्हि छात्रा अपि सक्रियाः भवन्ति। ज्ञानेन साकं बाह्यव्यक्तित्वमपि संतुलितम् भवेत्। शिक्षकः छात्रैः साकं स्नेहेन, वात्सल्येन, सारल्येन व्यवहारं कुर्यात् बालकानां हतोत्साहनं मा कारयेत्। वस्तुतः उत्तम शिक्षकः छात्राणां सन्मित्रं भवति।

संस्कृतशिक्षकाय तु उत्तरदायित्वम् इतोऽपि अधिकः। किमर्थम्? सः समाजे भाषाशिक्षकरुपेण गमिष्यति एतदर्थं तस्य न केवलं भाषायाः अपितु आचरणस्य व्यवहारस्य च शुद्धिरपि अनिवार्या। इत्थं सः स्वाभिप्रायप्रकटने समर्थः भवेत्। सः मानसिकधैर्येण सम्पन्नः भवेत्। तस्य स्मरणशक्ति उत्तमा स्यात्। इतोऽपि येषां येषां शिक्षणकौशलाानां अनिवार्यता शिक्षणेऽस्ति तेषां तेषां सर्वेषां समावेशः तस्य शिक्षणे यदि भवति तर्हि सः निश्चितरुपेण व्यावसायिकरुपेण कुशलः भविष्यति। अतएव ज्ञायते यत् शिक्षकस्य व्यक्तित्वमुत्तमम् भवेत्। व्यक्तित्वं परिभाषा विषये पाश्चात्यविचारकः **बोरिंग** महोदयः कथयति यत्–

"व्यक्तित्वं जन्मजातानामर्जितानां च प्रवृत्तीनां योगः वर्तते।" इत्थं श्रेष्ठव्यक्तित्वे अधोलिखिताः विशेषताः भवन्ति–

–उत्तमव्यक्तित्वम् आत्मचेतना संयुक्तं भवति। आत्मचेतना सा शक्तिः वर्तते यया मानवः स्वकीय सम्बन्धे जानाति यत् सः किमस्ति।

–श्रेष्ठव्यक्तित्वम् सामाजिकता समन्वितं भवति। वस्तुतः समाजे स्थित्वा तेन सामाजिकमान्यतानां परम्पराणां मूल्यानाम् आचारव्यवहाराणां च पालनमपि करणीयम्। उत्तमव्यक्तित्वं एतानि कार्याणि सरलतया कर्तुं शक्नोति।

–सफलव्यक्तित्वस्य विशेषता भवति तस्य समायोजनशक्तिः। उत्तमव्यक्तित्वे आन्तरिकजीवनेन बाह्यवातावरणेन च सह स्वकीयं समायोजितकरणस्य शक्तिर्भवति। प्रायः दृश्यते यत् मानवस्य सामाजिकं भौतिकञ्च वातावरणं अकस्मात् परिवर्तितं भवति। उत्तमव्यक्तित्वम् अनेन परिवर्तितवातावरणेन सह शीघ्रमेव स्वकीयं समायोजितं करोति।

उत्तमव्यक्तित्वस्य उत्तममस्तिष्कं भवति। व्यक्तित्वं मानसिक शक्तीनां सङ्घटनमस्ति। उत्तममानसिकस्वास्थ्यस्य संरचनायाः नियन्त्रणं सन्तुलितव्यवहारः, तर्कः, चिन्तनमित्यादयः क्रिया भवन्ति।

–अतदतिरिच्य श्रेष्ठव्यक्तित्वं स्थिरं न भवति गत्यात्मकं भवति एते आवश्यकतानुसारं स्वमूल्येषु, विचारेषु, धारणासु, आदर्शेषु च परिवर्तनं कुर्वन्ति। एतेषां परिवर्तनानाम् उद्देश्यं प्रायः विकासात्मको भवति।

अतएव ज्ञायते यत् व्यावसायिकरुपेण कुशलशिक्षकः व्यक्तित्व दृष्ट्या उत्तमोत्तम स्यात्। व्यक्तित्व विषये बालमनोविज्ञानं शिक्षकस्य परंमित्रमस्ति इति स्पष्टम्।

**नूतनविधीनां नवाचाराणां च प्रति प्रेरणम्–**

वर्तमान युगे स्वशिक्षणे नूतनविधीनामुपयोगः वस्तुतः व्यावसायिककुशलातायाः पर्याय एव। अद्य यदि शिक्षकः प्राचीनविधीनामतिरिच्य, नूतनप्रविधीनां प्रयोगः नूतनसाधनैः करोति तर्हि तस्य शिक्षणं प्रभावी शिक्षणं भवति। अद्य तु समयानुसारेण शिक्षणे नूतनविधीनामुपयोगः यः करोति सैव

कुशलः अध्यापकः। भाषाशिक्षकाय तु इतोऽपि उत्तरदायित्वम् अधिकम्। ये छात्राः संस्कृतं नैव जानन्ति तेषां कृते रुचिकररीत्या शिक्षणं कर्त्तव्यम्। संस्कृतशिक्षणं रोचकं सरलं, सुग्राह्यं च कर्त्तुं संस्कृतभाषाशिक्षकस्य नवीनतमविधीनां ज्ञानम् अवश्यमेव भवेत् प्रायः केचन शिक्षकाः विद्याग्रहणे प्रवीणाः अपरे विद्यार्थीनां कृते बोधने कुशलाः। अनेके शिक्षकाः विद्याग्रहणे, गृहीत विद्यायाः संक्रमणे च कुशलाः न भवन्ति। यस्मिन् शिक्षके एतद् उभयमपि भवति स एव शिक्षकः उत्तमशिक्षकत्वेन अस्माभिः प्रासव्यः। अस्मिन् सन्दर्भे कविकालिदासस्य श्लोकोऽयं प्रसिद्धः यत्-

**शिलष्टा क्रिया कस्यचिदात्मसंस्था, संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां, धुरि प्रतिष्ठापयितव्य एव।।**

इत्थं विद्यालये काञ्चिदपि क्रियाम् अध्यापक एवं शिक्षयति। सः छात्रेषु ज्ञानस्य क्रियायाश्चधिगमनार्थं उचितवातावरणस्य निर्माणं करोति। अधिगमः तावत्कालपर्यन्तं प्रभावशालिनिरीत्या कार्यं कर्तुं न शक्यते यावत् अध्यापकः स्वीयां महत्त्वपूर्णां भूमिकां न निर्वहेत्। शिक्षायाः क्षेत्रे नैकानि महत्वपूर्णान्यनुसंधानानि प्रचलितानि सन्ति। अध्यापकः शिक्षायाः नवीनतमेष्वन्वेषणेषु रुचिं दद्यात्। शिक्षणस्य नवीनान् विधीन् उपयुञ्जीत। तदैव तस्य प्रभावो उत्तमो भविष्यति। प्रत्येकं छात्रः एकेन विधिनैव प्रभावितो न भवति। यदि बालकः अवैज्ञानिकपद्धत्या अमनोवैज्ञानिकपद्धत्या च शिक्ष्यते तस्मिन् तस्य न्यूना रुचिर्न भवति। आरम्भिककक्षासु खेलविधिना कार्येण शिक्षणं वा शिक्षणकार्यं प्रभावपूर्णं भवति। उच्चकक्षासु चलचित्रमाध्यमेन, पावर-पाइन्ट-माध्यमेन, तथा च सङ्गणकस्योपयोगमाध्यमेन शिक्षणम् उत्तमं भवति।

**अध्यापकस्य समुचितनेतृत्वम्-**

अध्यापको नाम छात्रेभ्यः-मित्रं मार्गदर्शकः, तत्ववेत्ता च। गुरवः त्रिप्रकारकाः भवन्ति। यथा- (1) शिष्यवित्तापहारकाः (2) शिष्यचित्तापहारकाः (3) शिष्यचित्+तापवहारकाः। प्रसिद्धमपि यत्-

**गुरवो बहवस्सन्ति शिष्यचित्तापहारकाः।**
**दुर्लभा गुरवो राजन् शिष्यचित्तापहारकाः।।**

वस्तुतः अध्यापकः कक्ष्यायाः नेता भवति। बालानां प्रीतिसंपादनाय आत्मनः प्रभुत्वं विमुच्य केचन अध्यापकाः बालकानां मध्ये स्वयमपि बालका इव व्यवहरन्ति। केचित् स्वाधिकारमत्ताः कठिना अपि वर्तन्ते। इदमुभयं परिहरणीयम्। बालकानां समुचित मार्गदर्शनाय नेतृत्वकरणाय च आवश्यकता अस्ति यत् शिक्षकेन बालकानां परामर्शानां स्वागतं करणीयम्, ध्यानमपि च देयम्। सः बालकानां सहयोगी विश्वसनीयश्च भवेत्। स अनुशासनहीनबालकान् प्रति कठोरः भवेत्। तत्परं मैत्री-साहचर्यभावना स्वीकरणीया येन बालकानां शिक्षकं प्रति श्रद्धा वर्धते। अध्यापकः कक्षायाः स्वाभाविकनेता भवति अतएव तस्य उत्तरदायित्वं वर्तते यत् स बालकानां हतोत्साहनं मा कारयेत् अपितु तान् प्रेरयेत्। कस्यापि कठिनकार्ये सः छात्रान् प्रेरयेत् यत् भवन्तः कार्यं कर्तुं सक्षमाः सन्ति,

भवन्तः कर्तुं अर्हन्ति इति कथनेन अभिप्रेरयेत्। तदैव स कुशलः नेता भविष्यति। नेता न केवलं वदति अपितु स्वयमेव कार्यं कृत्वा। अन्यान् अपि प्रेरयन्ति। यस्य नेतृत्वे यावनधिकाः छात्राः कार्यं कुर्वन्ति तस्य प्रभावशीलता तावदैव वर्धयति। अतः यदा अध्यापकः बालकस्य नेतृत्वं करोति तदा तस्य उत्तरदायित्वमधिकं भवति।

इत्थं ज्ञायते यत् शिक्षणव्यवसाये दक्षता प्राप्त्यर्थं बालमनोविज्ञानस्य महती भूमिका वर्तते। बालमनोविज्ञानस्य ज्ञानेन न केवलं छात्राणां विकासः भवति अपितु शिक्षकः स्वस्योन्नतिमपि कर्तुमर्हति। बालमनोविज्ञाने बालविकासस्यावस्थानां ज्ञानम्, रुचेः ज्ञानम्, अभिप्रेरणायाः महत्त्वम्, शिक्षकस्यव्यक्तित्वम्, नूतनविधीनां ज्ञानम्, तथा च नेतृत्वस्य महत्त्वम् सदृशाः अनेके पक्षाः सन्ति ये शिक्षकस्य सहाय्यमाचरन्ति। एतेषां सर्वेषां ज्ञानम् समावेशश्च यदि शिक्षकस्य व्यक्तित्वे भवति तर्हि सः निश्चितरुपेण समाजाय लाभकारी, प्रभावकारीश्च भविष्यति इति।

सन्दर्भग्रन्थाः-

1. वर्मा प्रीति एवं श्रीवास्तव डी.एन. '**बाल मनोविज्ञानः बाल विकास**' विनोद पुस्तक मन्दिर, आगरा, तृतीय संस्करण।
2. पाठक आर.पी. '**शिक्षा मनोविज्ञान**', राधा पब्लिकेशन्स, नई दिल्ली, प्रथम संस्करण।
3. शर्मा रेखा '**शिक्षा मनोविज्ञान**', जगदीश संस्कृत पुस्तकालय, जयपुर, प्रथम संस्करण।
4. शर्मा रामनाथ एवं शर्मा रचना '**उच्चतर शिक्षा मनोविज्ञान**', एटलांटिक पब्लिशर्स एण्ड डिस्ट्रीब्यूटर्स, नई दिल्ली।
5. पाठक पी.डी. '**शिक्षा मनोविज्ञान**', अग्रवाल पब्लिकेशन्स, आगरा।
6. शर्मा गणपतराम एवं व्यास हरिश्चन्द्र '**अधिगम-शिक्षण और विकास के मनोसामाजिक आधार**', राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर।
7. सिंह फतेह '**शिक्षा मनोविज्ञानम्**', आदित्यप्रकाशनम्, जयपुर।
8. मित्तल सन्तोष '**संस्कृतशिक्षणम्**', नवचेतना पब्लिकेशन्स, जयपुर।
9. मूर्तिः साम्बशिवः **संस्कृतशिक्षणम्** दीपशिखा प्रकाशन, जयपुर।
10. सफाया रघुनाथ '**संस्कृतशिक्षण**', साहित्य प्रकाशन, हरियाणा।

सहायकाचार्य शिक्षाशास्त्र विभागः
राष्ट्रिय संस्कृत संस्थानम्
जयपुर परिसरः

# संस्कृतशिक्षकः व्याकरणशिक्षणविधयश्च

डॉ. पंकजपुरोहितः

भारतीयसंस्कृतौ शिक्षकः स्वविशिष्टं स्थानं रक्षति। पुराकाले शिक्षकाणां बहु प्रतिष्ठा आसीत्। तेषामाचरणं समाजस्य कृते अनुकरणीयं भवति स्म। वर्तमानकालेऽपि शिक्षकः विद्यालयस्य शिक्षापद्धतेश्च मूलमस्ति। यद्यपि शैक्षिकप्रक्रियायां विद्यालयभवनस्य, पाठ्यक्रमस्य, पाठ्यपुस्तकानां भौतिकसंसाधनानाञ्च महत्त्वपूर्णं स्थानमस्ति परं शिक्षकं विना एतेषां सर्वेषां संसाधनानां नास्ति किमपि औचित्यम्। शिक्षकाणां प्रभावः स्वछात्रेषु नूनमेव पतति। हुमायूंकबीरमहोदयस्य चिन्तनमस्ति यत्-

शिक्षका एव राष्ट्रस्य भाग्यनिर्णायकास्सन्ति। वचनमेतत् प्रत्यक्षरूपेण सत्यमस्ति परं शिक्षक एव शिक्षायाः पुनर्निर्माणस्य महत्त्वपूर्णकुञ्चिका वर्तते इति विषयस्योपरि बलं प्रदेयम्। इयमेव शिक्षकवर्गस्य निर्णायकयोग्यताऽस्ति।

पुनश्च अध्यापकानां महत्त्वं प्रतिपादयन् वदति कबीरमहोदयः- यत् शिक्षापद्धतेः कौशलं शिक्षकाणां योग्यताया उपरि निर्भरति। योग्यशिक्षकाणामभावे सर्वोत्तमशिक्षणपद्धतिरपि सफलतां न याति। सुशिक्षकाश्चेद् दोषपूर्णाऽपि शिक्षापद्धतिः दोषरहिततामधिगच्छति।

शिक्षकेष्वपि संस्कृतशिक्षकाः स्वस्य विशिष्टं महत्त्वपूर्णस्थानञ्च रक्षन्ति। मानवविचाराणाम् अभिव्यक्तिं परिष्कृतां कर्तुं, व्याकरणम् अत्यन्तम् आवश्यकम्। संस्कृतशिक्षकाणाङ्कृतेऽपि व्याकरणस्य ज्ञानम् अत्यावश्यकमस्ति। ते यदि वैयाकरणाः भविष्यन्ति चेत् छात्रान् अपि सम्यक्तया बोधयितुं प्रभवन्ति। संस्कृतशिक्षकाणां व्याकरणशिक्षणं प्रभावी सम्यक् च स्यात् एतदर्थं तेषाङ्कृते व्याकरणशिक्षणपद्धतीनां ज्ञानम् आवश्यकमस्ति। व्याकरणशिक्षणाय विभिन्नशिक्षणपद्धतीनामुल्लेखः विद्वद्भिः कृतः। एषां विधीनां चर्चा द्वाभ्यां प्रकाराभ्यां क्रियते।

**परम्परागतप्रविधिः**

व्याकरणशिक्षणस्य परम्परागतप्रविधेः अनेकानि रूपाणि परिदृश्यन्ते। वस्तुतः परम्परागतप्रविधयः विषयवस्तोः कण्ठस्थीकरणे अत्यधिकं बलं यच्छन्ति। निगमनविधिः पाणिनिसम्मतः। अस्य विधेरुल्लेखः पातञ्जलमहाभाष्येऽपि दृश्यते। भट्टोजीदीक्षितोऽपि वैयाकरणसिद्धान्तकौमुद्यां निगमनतः आगमनं प्रति गमनप्रक्रियाम् अङ्गीकरोति। लघुसिद्धान्तकौमुद्यामपि अस्य एव शिक्षणसूत्रस्य अनुसरणं क्रियते। पुराकाले आश्रमेषु गुरुकुलेषु मठेषु अस्या एव शिक्षणपद्धतेरनुकरणं क्रियते स्म। तस्मिन् काले शिक्षणं श्रुतिपरम्परया एव चलति स्म। स्मरणकार्योपरि अत्यधिकं बलं दीयते स्म। परम्परागतविधिषु अधोलिखिताः प्रविधयः अन्तर्भवन्ति-

**कण्ठस्थीकरणविधिः–** अयं विधिः व्याकरणशिक्षणस्य अत्यन्तं पुरातनविधिरस्ति। अस्मिन् विधौ व्याकरणसूत्राणां कण्ठस्थीकरणं क्रियते। अस्य कण्ठस्थीकरणस्य माध्यमेन छात्राः व्याकरणनियमानां ज्ञानं प्राप्नुवन्ति। पाणिनि-अष्टाध्यायी सिद्धान्तकौमुद्यादीग्रन्थेषु आगतानां सूत्राणां कण्ठस्थीकरणं कारयति शिक्षकः। अस्मिन् विधौ "सामान्यतः विशेषं प्रति" इति शिक्षणसूत्रस्य अनुकरणं क्रियते। सूत्राणां मुख्यमुद्देश्यमस्ति यत् अल्पीयसा वाक्येन अधिकस्य कथनम्। छात्रः सूत्राणां कण्ठस्थीकृते सति तत्र निहितं सूक्ष्मज्ञानं सारल्येन प्राप्नोति।

विधिरयं अद्यतनपरिस्थितावपि अत्यन्तं सफलोऽस्ति। मनोवैज्ञानिकानामपि चिन्तनमस्ति यत् कण्ठस्थीकरणेन स्मृतिर्जायते, स्मरणेन च विषयोपरि अधिकारो भवति। मनोवैज्ञानिका इदं प्रमाणयन्ति यत् कमपि विषयमादाय स्मरणं क्रियते चेत् नास्ति काऽपि हानिः। शब्दानां प्रयोगदृष्ट्या कण्ठस्थीकरणम् अत्यन्तम् आवश्यकमस्ति। कण्ठस्थीकरणस्य उपादेयता उच्चारणदृष्ट्याऽपि वर्तते यतोहि पौनः पुन्येन कण्ठस्थीकृतस्य अभ्यासेन उच्चारणं शुद्धं भवति। उच्यते च– **मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्।** अर्थात् स्वराणां वर्णानाञ्च शुद्धोच्चारणात् रहितः मन्त्रः अर्थस्यानर्थ करोति। एवं प्रकारेण अशुद्धमन्त्रः यजमानस्य वज्रवत् घातको भवति। येन प्रकारेण स्वरस्य मिथ्याप्रयोगकारणात् वृत्रहानामकोऽसुरः स्वयमेव मृतवान्। सहस्राधिकवर्षेभ्यः संस्कृतज्ञाः व्याकरणादिविषयाणां स्मरणं कुर्वन्ति स्म। स्मृतिवशादेव ते असंख्यग्रन्थान् स्मृतौ धारयन्ति स्म। तस्मादेव ते ग्रन्था वर्तमानेऽपि सुरक्षितास्सन्ति। वर्तमानसमयेऽपि कमपि विषयमादाय चर्चाकरणे वादविवादकरणे च कण्ठस्थीकरणस्य महत्त्वं स्पष्टं परिलक्ष्यते। श्रवण-मनन-निदिध्यासनप्रक्रियायामपि कण्ठस्थीकरणस्य अत्यन्तं महत्त्वपूर्णस्थानमस्ति। कण्ठस्थीकरणस्याभावे निदिध्यासनस्थितेः प्राप्तिः असम्भवा एव वर्तते। आप्टेमहोदयस्य कथनमस्ति यत्– 'अहं वित्तकोशे सुरक्षितराशौ विश्वासं न करोमि, अपितु प्रत्यक्षधनोपर्येव विश्वासं करोमि, यत् कस्मिन्नपि समये प्रयुक्तं भवितुमर्हति"।

**पारायणविधिः–** पुराकाले पारायणविधिरपि प्रचलने आसीत्। विधिरयम् अपि कण्ठस्थीकरणस्योपरि एव बलं ददाति। वैदिककाले संहितापाठपदपाठादिविभिन्नपाठानामाधारेण वैदिकमन्त्राणां पारायणं सस्वरं भवति स्म। वेदानां पारायणकर्तारः पारायणिकाः उच्यन्ते स्म। पाठस्य सरलतां कठिनतामभिलक्ष्य पारायणस्य संख्याऽपि निर्धारितासीत् यथा पञ्चकाध्ययम्, सप्तकाध्ययनम् अस्तकाध्ययनम्। पारायणविधिना उच्चारणकाले छात्राणाम् अशुद्धोच्चारणस्य परीक्षणं मार्जनञ्च भवति। एकशुद्धिकर्तारः छात्राः 'एकान्यिकः' द्विशुद्धिकर्त्तारः छात्राः 'द्वैयन्यिकः' त्रिशुद्धिकर्तारः छात्राः त्रैयन्यिकः पदवाच्याः। पारायणकर्तृणां छात्राणां कृते विविधनियमानां पालनम् आवश्यकमासीत् अनेन प्रकारेण मन्त्रणां कण्ठस्थीकरणे छात्राणां परिश्रमकारणादेव ऋग्वेदादिसंहिताग्रन्थाः वर्तमानेऽपि सुरक्षिताः सन्ति।

**वादविवादविधिः–**

परम्परागतशिक्षणपद्धतौ कण्ठस्थीकरणेन सह अर्थावबोधस्यापि पर्याप्तं महत्त्वमासीत्। यास्काचार्यः स्वनिरुक्तग्रन्थे अर्थावबोधयितुं शब्दानां निर्वचनं कृतवान्। विदुषां मतमस्ति यत् अवबोधपूर्वकमेव कण्ठस्थीकरणीयम्। अर्थज्ञानं विना यः कण्ठस्थं करोति तस्य स्थितिः ईदृशी वर्तते–

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्केन्धो न तज्ज्वलति कर्हिचत्।।

कस्यापि वस्तुनः ज्ञानस्य सततेच्छा एव जिज्ञासावृत्तिरस्ति। जिज्ञासायाः शमनाय छात्रः गुरोः सकाशं गत्वा प्रश्नान् पृच्छति। गुरुः तस्य जिज्ञासायाः समाधानं करोति। यावत् छात्राणाङ्कृते अर्थावबोधो न जायते तावत् ते वारं वारं स्वजिज्ञासां प्रकटीकुर्युः। वादविवादपद्धतौ कस्यचिदपि विषयस्य तर्कवितर्काभ्यां सम्यक् निष्कर्षम् आगच्छति। एवञ्च अनेन छात्राणां बुद्धिकौशलस्य ज्ञानं भवति।

**व्याख्याविधिः–**

विधिरयं प्राचीनकालादेव निरन्तरं प्रचलने वर्तते। शिक्षणविधिषु अस्य विधेः अत्यन्तं महत्त्वं वर्तते। कस्यचिदपि विषयस्य स्पष्टीकरणाय व्याख्यानस्य अत्यन्तम् आवश्यकता अनुमीयते। यदि शिक्षकस्य व्याख्यानं प्रभावपूर्णो भवति चेत् जटिलात् जटिलतमं विषयमपि छात्रः सरलतया अवगन्तुं पारयति। अस्य विधेः सुन्दरतममुदाहरणं पाणिनिव्याकरणे प्राप्यते। कात्यायनः पाणिनेः सूत्राणामुपरि वार्तिकाणां रचनां कृतवान्। तासां वार्तिकाणामुपरि पतञ्जलिः स्वव्याख्यानं चकार। व्याख्यानमिदं महाभाष्यनाम्ना प्रथितोऽभूत्। तस्मिन् काले प्रारम्भिकस्तरादेव व्याकरणस्य पठन–पाठनं भवति स्म। तदा छात्राणाङ्कृते सूत्राणि स्पष्टीकरणाय व्याख्यापद्धतेरेव आश्रयणं क्रियते स्म। अस्यां पद्धतौ सर्वप्रथमं सूत्राणां विभागं कृत्वा पदकृत्यं बोध्यते। ततः परं विभिन्नोदाहरणानां माध्यमेन सूत्राणां स्पष्टीकरणं क्रियते। उदाहरणानां पुष्ट्यर्थं तत्सम्बद्धानि अनेकानि सहायकोदाहरणानि दीयन्ते। अनेन प्रकारेण सूत्राणां व्याख्यानेन सर्वमपि विषयं स्पष्टो भवति।

**भाषासंसर्गविधिः–**

अस्मिन् विधौ व्याकरणस्य पृथग्रूपेण न दीयते अपितु भाषायाः शिक्षया सहैव व्याकरणनियमान् अबोधयित्वा अर्थात् सूत्राणां सङ्केतं विनैव पदानां शुद्धोच्चारणम् उक्त्वा, पठित्वा–लिखित्वा, श्रुत्वा च अवगमनस्य योग्यतायाः छात्रेषु विकासः क्रियते। विधिरयम् इदं मतं पुष्णाति यत् यथा मातृभाषायाः ज्ञानं व्याकरणनियमानां ज्ञानं विनैव केवलं प्रयोगेण अभ्यासेनैव जायते तथैव संस्कृतभाषायाः ज्ञानमपि पुनः पुनः अभ्यासेन भवितुमर्हति। अस्य विधेः प्रयोगः प्रायः प्राथमिकस्तरे लघुबालकानां कृते भवति। परं माध्यमिकस्तरे, उच्चमाध्यमिकस्तरे, उच्चस्तरे च अस्य रूपं संरचनात्मकोपागमेऽपि भवति।

व्याकरणस्य क्रमबद्धम् औपचारिकज्ञानप्रदानम् आवश्यकम् अस्ति, येन छात्रेषु भाषायाः शुद्धप्रयोगं प्रति आत्मविश्वास उत्पन्नो भवेत्।

**अन्वयव्यतिरेकविधिः–**

व्याकरणशास्त्रे प्रकृतेः प्रत्ययस्य च स्पष्टज्ञानाय अन्वयव्यतिरेकविधेः अत्यन्तं महत्त्वमस्ति। यथा पाचक इति शब्दस्योच्चारणेन पच् धातोः अक्प्रत्ययस्य च बोधो जायते। अतः अन्वयव्यतिरेकविधिना शब्दस्वरूपस्य ज्ञानं स्पष्टं भवति।

**आगमनविधिः–**

अस्मिन् विधौ 'उदाहरणात् नियमं इति' इति शिक्षणसूत्रस्य प्रयोगः क्रियते। आचार्यपाणिनिः वैज्ञानिकरीत्या आगमनविधिमनुसृत्य क्रमबद्धरूपेण सूत्राणां प्रणयनमकरोत्। अस्मादेव कारणात् अन्यभाषाणां तुलनया संस्कृतव्याकरणं वैज्ञानिकमस्ति। अस्मिन् विधौ पूर्वम् उदाहरणं प्रस्तूय नियमं प्रति गम्यते तथा विविधप्रश्नान् पृष्ट्वा छात्रैः एव नियमनिर्धारणं क्रियते।

**निगमनविधिः–**

अस्मिन् विधौ पूर्वं नियमान् प्रस्तुत्य विविधप्रयोगैः उदाहरणैश्च तस्य नियमस्य पुष्टिः क्रियते। वर्तमानसमये आगमनविधेः निगमनविधेश्च सहैव प्रयोगं कृत्वा व्याकरणशिक्षणं सरलं सुग्राह्यञ्च क्रियते। अत्र मनोवैज्ञानिकगुणानां समावेशो वर्तते। अत एव अयं विधिः वैज्ञानिकः। अत्र क्रमबद्धतायामुपरि विशेषबलमस्ति। अस्य विधेः मनोवैज्ञानिकत्वम् अस्मादपि अस्ति यतोहि अस्मिन् छात्राणां रुचिस्तरयोः विशेषमहत्त्वमस्ति। अनेन शिक्षणं सरसं रुचिकरञ्च भवति। छात्राः सक्रियाः तिष्ठन्ति। ते स्वयमेव नियमानाम् अन्वेषणे संलग्नाः भवन्ति। अनेन विधिना अधीयमानानि सूत्राणि अधिकबोधगम्यानि स्थायिस्मृतेः अङ्गभूतानि च भवन्ति।

**पाठ्यपुस्तकविधिः–**

अस्मिन् विधौ व्याकरणस्य शिक्षणं पाठ्यपुस्तकाधारेण भवति। अत्र छात्राः पुस्तकेषु उपलब्धान् पाठान् आश्रित्य शिक्षकाणां सहायतया ज्ञानम् अर्जयन्ति। प्रत्येकं पाठस्यान्ते प्रदत्तस्य अभ्यासकार्यस्याधारेण छात्रा अधीयमानस्य अभ्यासं कुर्वन्ति। वर्तमानकाले अयमेवविधिः बहुलतया प्रयोगेऽस्ति।

**सहयोगविधिः–**

अस्मिन् विधौ व्याकरणस्य शिक्षा भिन्नरूपेण न दीयते, अपितु गद्य-पद्य-रचना-कथा-अनुवादादीनाम् अध्ययनसमये एव व्याकरणस्याध्यापनं प्रासंगिकरूपेण भवति। प्रसङ्गे आगते सति शिक्षकः तत्सम्बन्धिव्याकरणनियमस्य व्याख्यां करोति। अनेन व्याकरणज्ञाने पाठ्यवस्तुनश्च अवगमने सौकर्यं भवति। पाठ्यपुस्तकविधिः सहयोगविधिश्च अर्वाचीनविधिषु परिगण्येते।

अनेन प्रकारेण व्याकरणशिक्षणे प्रयुज्यमानानां शिक्षणविधीनामुल्लेखः वर्णनञ्च कृतम्। एकस्य संस्कृतशिक्षकस्य कृते एतेषां शिक्षणविधीनां कियती उपयोगिता वर्तते इत्यपि प्रतिपादितमेव। एकस्य उत्तमसंस्कृतशिक्षकस्य कृते एते विधयः अत्यन्तम् आवश्यकं सन्ति। अस्मादेव सः स्वशिक्षणं सुग्राह्यं रोचकञ्च कर्तुं प्रभवति।

**सन्दर्भग्रन्थाः–**

१. संस्कृतशिक्षण, पाण्डेयरामशकल, विनोद पुस्तक मन्दिर, आगरा
२. संस्कृतशिक्षणम्, डॉ. मित्तल संतोषः, नवचेतनापब्लिकेशन्स, जयपुर
३. संस्कृतशिक्षण, आचार्य शास्त्री राम, कुरुक्षेत्र, हरियाणा
४. संस्कृतशिक्षण, शर्मा डॉ. एन.के., के.एस.के. पब्लिशर्स, दिल्ली
५. संस्कृतशिक्षण, सफाया डॉ. रघुनाथ, हरियाणा साहित्य अकादमी, चण्डीगढ
६. संस्कृत शिक्षा का विकास, पाण्डेय डॉ. अरविन्दकुमार, आदित्य बुक सेन्टर, दिल्ली
७. संस्कृतशिक्षण, राय बी.सी., प्रकाशन केन्द्र, लखनऊ
८. संस्कृतशिक्षण, चौबे विजयनारायण, उत्तरप्रदेश हिन्दी संस्थान, लखनऊ

सहायकाचार्यः, व्याकरणविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
जयपुरपरिसरः, जयपुरम्

# संस्कृतशिक्षकाणां मूल्याकलनसन्दर्भेषु "व्यावसायिकदक्षता" अधिगमविकासयोः परिकल्पना

डॉ. कैलाशचन्द्रसैनी

वस्तुतः आकलनम् अधिगमप्रक्रियाया एकम् अविभाज्यमङ्गं वर्तते। यावत् आकलनसन्दर्भेषु संस्कृताध्यापकानां व्यावसायिकदक्षता न भवति, तावत् पर्यन्तम् अधिगतस्य विषयस्य अधिगमावधौ पूर्ण ज्ञानं न भवति, तथा च अधिगतस्य विषयस्य सम्वर्धनाय समूहनं (Groping), निर्देशनञ्च इत्यनयोः विषययोः श्रोतृणां निर्णयस्य विवरणात्मक-प्रतिपुष्टिः प्रदानस्य कश्चित् आधारः आकलनेन एव भवति।

अस्याम् अधिगमप्रक्रियायां शिक्षकैः चिन्तनीयं भवति यत् विद्यार्थिनः किं जानन्ति? किं च पाठ्यक्रमस्य परिणामाः पूर्णाः वा अथवा लक्ष्याणां प्राप्तये दक्षता सम्प्राप्ता न वा इत्यस्मिन् विषये अभिकल्पितम् अभियोजनं स्पष्टं जातं न वा इत्यादीनां ज्ञानाय अध्यापकेषु व्यावसायिकदक्षता अपेक्षिता भवति। एतदर्थम् आकलनम् अधिगमप्रक्रियायां महत्वपूर्णं साधनम् आवहति यथाः-

- व्यावसायिकदक्षतया प्रक्रियाणां तथा च मुख्यघटकानां वर्णनं विधातुं प्रयासः।
- निर्णयार्थं सार्वजनिकं रक्षात्मकञ्च उपायान् सङ्केतयितुं प्रयासः।
- अभिकल्पितस्य अधिगमस्य तथा च औचित्यस्य स्पष्टं ज्ञानाय प्रयासः।
- व्याख्यायां व्याख्याने च पारदर्शियन्त्राणाम् उपागमानां प्रयोगकरणे दक्षता।
- निर्णयानां सम्बन्धे वैकल्पिकायोजने, प्रतिस्थापने च विश्वसनीयता तथा च वैकल्पिकानां यान्त्रिकाणाम् अभिक्रियाणाम् आयोजने दक्षता।
- प्रक्रियाणां माध्यमेन कौशलानां प्रदर्शने दक्षता।

मूल्याकलनसन्दर्भेषु संस्कृतशिक्षकाणां दक्षतायै, अधिगमायोजनप्रक्रियायाम् आयामानां (Diminsions) इत्यादीनां प्रयोगेण अध्यापकेषु व्यावसायिकी दक्षता समायाति। अधिगम-आयामो एकं व्यापकं प्रारूपं (Model) वर्तते अत्र शोधकर्तारः सिद्धान्तवेत्तारश्च अधिगमसन्दर्भेषु ज्ञानार्थं प्रयोगं कुर्वन्ति। तेन एव संस्कृताधिगमप्रक्रियायाः पारिभाषीकरणम् अस्माभिः क्रियते तथा च संस्कृतशिक्षायाः संरचनात्मकप्रक्रियायाः स्वरूपप्रदानाय सहायकानामावश्यकतानां सम्पूर्तये आयामाः पथप्रदर्शकाः भवन्ति यथा-

- संस्कृशिक्षायाः व्यापकक्षेत्रनिर्माणाय व्यावसायिकदक्षता।

- शिक्षकाणां कृते प्रक्रियायाः आकलनाय व्यावसायिकदक्षता।
- संस्कृतशिक्षायै पाठ्यचर्यायाः पाठ्यक्रमस्य च योजनानिर्माणे व्यावसायिकदक्षतासम्पादनम्।
- संस्कृतशिक्षायाः विविध-आयामानामवगमनाय, निर्देशनाय च व्यावसायिकदक्षता।
- शिक्षकाणां छात्राणाञ्च मनोवृत्तीनां प्रत्यक्षीकरणे दक्षता यथा-मानसिक-असुरक्षा, वातावरणं, कक्षायाः स्वरूपञ्च इत्यादीनां ज्ञान करणम्।
- संस्कृतशिक्षकाणाम् आकलनसन्दर्भेषु समन्वितप्रयासानां दक्षता।
- संस्कृतशिक्षायाः विकासाय, परिष्काराय च व्यावसायिकदक्षता।
- संस्कृतसन्दर्भेषु (भाषासन्दर्भे) तुलनाकरणस्य दक्षता।
- विशिष्टसन्दर्भाणां वर्गीकरणे दक्षता।
- आगमनात्मक-तार्किकतायाम् अभिवृद्धिकरणम्।
- निर्माणात्मक-तार्किकतायां दक्षता।
- विश्लेषणात्मक-कथनेषु, त्रुटीनां निवारणे च दक्षता।
- संस्कृतस्य सार्थकप्रयोगे व्यावसायिकदक्षता।

इत्यादीनाम् आयामानां संस्कृतशिक्षायां योजनेन शिक्षकेषु व्यावसायिकदक्षतायामभिवृद्धिकरणमेव आकलनस्य उद्देश्यं वर्तते तथा च संस्कृतशिक्षायाः आख्या (Report) करणाय प्रयोगकर्तृणां कृते संसूचनाप्रदाने व्यावसायिकदक्षता आकलनेन भवितुमर्हति यथा- बालकानां मानसिकयोग्तायाः, सामाजिक-सांस्कृतिक-सन्दर्भाणाम् आकलने दक्षता एवञ्च उत्तमपरिणामानां प्रस्तुतीकरणस्य दक्षता तथा च परिणामानामाधारेण नियोजनस्य दक्षता इत्यादयः संस्कृतशिक्षकेषु आकलनेन एव जायते।

संस्कृतच्छात्रेषु अध्यापकेषु च आत्ममूल्याकलनेन सहयोगिमूल्याकलनेन वा प्रतिपुष्ट्ये आकलनम् उत्तमं साधनं वर्तते। आत्ममूल्याकलने या व्यावहारिकप्रक्रिया भवति तया प्रक्रियया स्पष्टतर्कस्य एवञ्च औचित्यस्य ज्ञानं भवति तथाा च प्रकृतकार्येषु किम्? किमर्थम्? कथम्? इत्यादीनां प्रश्नानामुत्तराणां ।विषये दक्षता समायाति। अथ च आवश्यकतानां ये आधाराः भवन्ति तेषामाधाराणां विषयेऽपि समीचीनोत्तराणां प्रासये अवसराणि लभ्यन्ते। एव दक्षतासन्दर्भेषु आश्वस्तता इति अनेन मूल्याकलनेन स्वीकृता प्राक्कल्पना सार्थकी भवति।

**अधिगमविकासयोः कल्पनायाः, प्रारूपम्** अधिगमविकासयोः कल्पना इत्यत्र बहूनां विषयाणां समीक्षाः अपेक्षिताः भवन्ति। अधिगमाधारेण विकासस्य या परिकल्पना वर्तते तत्र समस्याः परिज्ञानं, ततः परं समस्यायाः निर्धारणम् एवञ्च सन्दर्भितविषयाणां समीक्षा भवति। अत्र लौकिकजीवनसम्बद्धविषयाः यथा- सामाजिकाः, सांस्कृतिकाः नैतिकाः राजनैतिकाः, राष्ट्रियाः, भौतिकाः, प्राकृतिकाः, शैक्षिकाश्चेतिविषयाः तथा च पारलौकिजीवनसम्बद्धविषयाः यथा- विषयपदार्थयोः परिकल्पना, ईश्वरः प्रकृतिः, प्रमाणादिदार्शनिकविषयाः समुपस्थिताः भवन्ति। एषु

विषयेषु समस्या गभीरा सामान्या वा इत्यादीनां विषयाणां परिज्ञानं तथा च ये उपायाः स्वीकृताः, ते उपायाः प्रतिकूलाः अनुकूलाश्चेति विषयाणाम् अनुमादेनस्य निर्णयो भवति, तदाधारेण अध्ययने सामीप्यं सम्भवति। अत्र बहूनाम् आयामानां परिकल्पना भवति, यथा–

(१) परिवर्तनार्थं समीक्षायाः औपचारिकं मूल्याकलनम्।

(२) वर्तमानसन्दर्भे अधिगमविकासयोः कल्पना।

(३) मूल्याकलनप्रक्रियायाः प्रारूपनिर्माणम्।

(४) मूल्याकलनमापदण्डानां निर्धारणम्।

(५) प्रामाणिकतायाः स्वीकरणम्।

(६) कौशलानां प्रशिक्षणम्।

(७) विकासानां परिज्ञानम्।

(८) सतत् मूल्याकनाय केन्द्रबिन्दूनां निर्धारणम्।

(९) योजनायाः मूल्याकलनाय संस्थानानां (नाडीतन्त्राणां) प्रभावः।

(१०) कृतव्यवहाराणां समीक्षणम्

(११) पुनः परीक्षायाः आवश्यकता न वा इति विषयस्य समीक्षा तथा च पुनः योजना।

(१२) नूतनप्रकल्पानामाधारेण विषयोपस्थापनम्।

(१३) व्यक्तित्वविकासाय सर्वेषां पक्षाणां समाहारः।

**"मूल्याकलनाय अभ्यासानां विमर्शनात्मकसीक्षणम्"**

मूल्याकलनाभ्यासेषु द्विविधक्रियाणां सहयोगो भवति अधिगमक्रियाः व्यवहारः, परिवर्तन क्रियाश्च।

(१) अधिगमक्रियाः– अत्र बहूनां क्रियाणां परिस्थितीनाञ्च विमर्शात्मकसमीक्षणं भवति यथा–

(i) परिस्थितीनां निर्माणम्।

(ii) शिक्षकच्छात्रयोर्मध्ये सम्बन्धस्थानम्।

(iii) अधिगमक्रियाणामायोजनम्।

(iv) अधिगमप्रक्रियाणां प्रस्तुतीकरणम् यथा– कक्षाशिक्षणमाध्यमेन, पुस्तकालयमाध्यमेन जनसंचारमाध्यमैः प्रयोगशालाभिः शैक्षिकभ्रमणेन, पाठ्यसहगामिक्रियाभिः प्रदर्शनी माध्यमेन च।

**"व्यवहारपरिवर्तनक्रियाणां समीक्षणम्"**

(१) बुद्धिपरीक्षणम्।

(२) व्यक्तित्व परीक्षणम्।

(३) निदानात्मकपरीक्षणम्।

(४) प्रश्नावली।
(५) अवलोकनम्।
(६) प्रयोगात्मकपरीक्षाः।
(७) अन्तर्निरीक्षणम्।
(८) विद्यालयसञ्चयी-अभिलेखाः।
(९) पूर्वकक्षायाः अधिगमस्तरः विकासश्च।

उपर्युक्तविवेचनेन अभिज्ञायते यत् आत्ममूल्याकलनं जीवनकौशलाधारितम् आवश्यकतानां स्वरूपे अभिज्ञायते तथा च संस्कृशिक्षकाणां व्यावसायिकदक्षतायाभिवृद्धिकरणे सहायकं भवति।

**सन्दर्भग्रन्थसूची–**

(१) अधिगम के लिए आकलन, डॉ. विपिन अस्थाना, अग्रवाल पब्लिकेशन्स, आगरा।
(२) शिक्षक प्रशिक्षण के सिद्धान्त और समस्याएँ, दिनेश चन्द्र जोशी एवं चतर सिंह मेहता, राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर।
(३) उच्चतर शिक्षा मनोविज्ञान, डॉ. एस.पी. गुप्ता, डॉ. अल्का गुप्ता, शारदा पुस्तक भवन, इलाहाबाद।
(४) शिक्षायाः मनोवैज्ञानिकाधाराः, डॉ. बि. पद्ममित्रश्रीनिवासः, जगदीशसंस्कृतपुस्तकालयः, जयपुरम्।
(५) शैक्षिक मापन एवं मूल्याङ्कन, डॉ. अमर जीत सिंह परिहार, आर.लाल बुक डिपो, मेरठ।
(६) Singh, Rajendra, Curriculum in Struction and Evaluation, Jagdamba Publishing Co., New Delhi.

सहायकाचार्यः, शिक्षाशास्त्रविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
जयपुरपरिसरः, जयपुरम्

# शिक्षकाणां व्यावसायिकदक्षतायाः संवर्धने शिक्षणप्रतिमानानां पात्रम्

डा. गणेशपण्डितः

सत्सु बहुषु व्यावसायिकक्षेत्रेषु शिक्षाक्षेत्रमपि अन्यतमं प्रधानं चास्ति। शिक्षाक्षेत्रस्य सर्वतोभावेन प्रवर्धनाय शिक्षकेषु व्यावसायिकदक्षता समधिकमात्रेण अनिवार्या। व्यावसायिकदक्षतायाः संवर्धनाय विभिन्नाः प्रविधयः अद्यत्वे आधुनिकैः शिक्षाविद्भिः आविष्कृताः सन्ति। एतेषु आधुनिकप्रविधिषु शिक्षणप्रतिमानान्यपि प्रधानानि सन्ति। शिक्षणप्रतिमानानि यद्यपि प्रारूपमात्राणि भवन्ति तथापि वस्तुनिष्ठशिक्षणप्रदानाय शिक्षणे साफल्यप्राप्तये च एतेषाम् अनिवार्यता अस्त्येव।

प्रत्येकमपि भवननिर्माता सुदृढभवनस्य निर्माणात् पूर्वमेव भवनस्यैकं प्रारूपं सज्जीकरोति। सुचिन्तितस्य भवनस्य यथावत् निर्माणाय तदीयं प्रारूपं सर्वदा सहायकं सिद्ध्यति। निर्मीयमाणे नवभवने कति अट्टाः स्युः? कतिप्रकोष्ठाः स्युः? भवनस्य विस्तारः आकारः प्रकारश्च कीदृशः स्यात्? इत्येतत् सर्वं तदीये भवनप्रारूपे पूर्वमेवाङ्कितं भवति। देशकालपरिस्थित्यनुगुणं विभिन्नानि प्रारूपाणि प्रतिमानानि वा विरचय्य तदनु भिन्नभिन्नानि भवनानि भवननिर्माता निर्मास्यति। सर्वस्मिन्नपि प्रसङ्गे करतलगतानि भवनप्रारूपाणि एव भवननिर्माणस्य प्रतिपदं साहाय्यमाचरन्ति। भवनस्य निर्माणकर्मणि तदीयानि पूर्वचित्रितानि प्रारूपाणि यथा- साहाय्यमाचरन्ति तथैव शिक्षणकर्मणि शिक्षकाय विभिन्नानि शिक्षणस्य प्रारूपाणि आहोस्वित् प्रतिमानानि साहाय्यमाचरन्ति। किञ्च कक्ष्यानुरूपाणि स्तरानुरूपाणि विषयानुरूपाणि परिस्थित्यनुरूपाणि च प्रतिमानानि पूर्वमेव सज्जीकृत्य संस्थाप्यन्ते इत्यतः तेषाम् अनुसरणं प्रत्येकमपि शिक्षकेण कर्तव्यम्। अन्यथा तदीयं शिक्षणं क्वचित् सफलमेव न स्यात्। शिक्षणप्रतिमानस्य सर्वस्यापि एकः पूर्वनिर्दिष्टः सुदृढः आधारः भवत्येव। दार्शनिकसामाजिकमनोवैज्ञानिकाधारैः आश्रितानि भवन्ति प्रतिमानानि। सर्वमपि प्रतिमानं गुरुशिष्ययोर्मध्ये कीदृशी अन्तःक्रिया जायेत इत्येतदपि संसूचयति। शिक्षणप्रतिमानं सर्वमपि अभ्यासानुभवप्रयोगैः परीक्षितं परिनिष्ठितञ्च वर्तते इत्यतः अस्य प्रयोगेण वस्तुनिष्ठः परिणामः प्रत्यायाति। किञ्च शिक्षणप्रतिमानं शैक्षिकप्रक्रियायाः परिष्काराय संवर्धनाय च बलं ददाति।

शिक्षकशिक्षणस्य दशात्रयं निर्दिशन्ति प्रविधिज्ञाः। पूर्वशिक्षणदशा, शिक्षणान्तर्दशा, शिक्षणोत्तरदशा (अवस्था वा) इति तिस्रः दशाः प्रसिद्धाः। पूर्वशिक्षणदशायां शिक्षकः शिक्षणस्य आयोजनसङ्घटनादिषु कर्मसु आत्मानं विनियोजयति। शिक्षणान्तर्दशायां शिक्षकः शिक्षणकार्यसंपादनाय तन्नाम व्यवस्थितरूपेण पाठनाय प्रयतते। शिक्षणोत्तरदशायां स एव पुनः स्वस्य शिक्षणस्य परिणामं विज्ञातुमभिलषति। आसु

सर्वास्वपि दशासु अवस्थासु वा शिक्षणप्रतिमानानि नितराम् उपकुर्वन्ति। एवञ्च शिक्षणस्य प्रत्येकपि दशासु शिक्षणप्रतिमानानाम् आवश्यकता अस्तीति फलितम्।

अतीतवर्तमानयोः ज्ञानाभावे भविष्यं दोलायमानं भविष्यति इति सर्वविदितमेव। एवमेव शिक्षणप्रक्रियायामपि अतीतवर्तमानवातावरणयोः ज्ञानाभावे स्वाभीष्टं वातावरणं कल्पयितुमपि न शक्नोति शिक्षकः। पूरकवातावरणाभावे शिक्षणमपि नीरसं भविष्यति। एवमेव शिक्षणं नियन्त्रितपरिस्थितौ सुचारुरूपेण संपादनीयमपि। परिस्थितेः नियन्त्रणाय स्वानुकूलीकरणाय च प्रतिमानानाम् अनुसरणम् अवश्यं कर्तव्यमेव।

शिक्षणे गुरुशिष्ययोः परिपूर्णः सहयोगः अनिवार्यः। अनयोर्मध्ये जायमानं सम्प्रेषणमेव शिक्षणस्य साफल्यं वैफल्यं च द्योतयति। शिष्याणां सहयोगाभावे शिक्षणं कथं वा सफलं भवेत् ? अतः प्रभावोत्पादकं छात्रासक्तिकरञ्च शिक्षणं सर्वदा प्रस्तुतीकर्तव्यमेव। एतदर्थमपि शिक्षणप्रतिमानानि अनिवार्याणि सन्ति।

शिक्षणार्थं बहूनि परिकराणि अनिवार्याणि। उद्देश्यानां पूर्तये शिक्षणप्रक्रियायाः प्रभावोत्पादकरीत्या च सञ्चालनाय शिक्षणविधयः सामग्र्यः च अनिवार्याः। एतेषां चयनकर्मणि शिक्षणप्रतिमानानि साहाय्यमाचरन्ति। एतेषां बलेनैव शिक्षकः स्वस्य कर्मणः संशोधनं मूल्याङ्कनं च कर्तुं प्रभवति। शिक्षणप्रतिमानानि यद्यपि अनल्पानि सन्ति तथापि मुख्यानि एव अत्र क्रमशः उदाह्रियन्ते।

✡ **ऐतिहासिकशिक्षणप्रतिमानानि ( Historical Models of Teaching )**

प्राचीनशिक्षणप्रतिमानेषु इमानि अन्तर्भवन्ति। परन्तु अद्यत्वे एतेषां कृते नाधिकं महत्वं दीयते। 'सोक्रेटिस्' शिक्षणप्रतिमानम्, परम्परागतमानवीयशिक्षणप्रतिमानम्, व्यक्तिगतशिक्षणप्रतिमानम् इत्यादीनि ऐतिहासिकप्रतिमानेषु एव अन्तर्भवन्ति।

✡ **मनोवैज्ञानिकशिक्षणप्रतिमानि ( Psychological Models of Teaching )**

मनोवैज्ञानिकसिद्धान्ताधारितानि प्रतिमानानि मनोवैज्ञानिकशिक्षणप्रतिमानानि इत्युच्यन्ते। किञ्च पूर्वोत्तरव्यवहारयोः उपरि अत्र बलं दीयते। 'रोबर्ट ग्लेसर्' महोदयस्य आधारभूतं शिक्षणप्रतिमानम् एतादृशप्रतिमानेषु अन्यतमं वर्तते। गणकयन्त्राधारितशिक्षणप्रतिमानम्, विद्यालयाधिगमपरशिक्षणप्रतिमानम् अन्तःक्रियापरं शिक्षणप्रतिमानम् इत्यादीनि मनोवैज्ञानिकशिक्षणप्रतिमानेषु एव अन्तर्भवन्ति।

✡ **शिक्षकप्रशिक्षणप्रतिमानम् ( TeachersÓ Training Model )**

शिक्षकप्रशिक्षणक्षेत्रेऽपि विभिन्नानां प्रतिमानानां प्रयोगः अद्यत्वे प्रचुरमात्रेण क्रियते। कुशलशिक्षकाणां निर्माणकर्मणि एतेषां प्रधानं पात्रं वर्तते। टाबाशिक्षणप्रतिमानम्, 'टनर्र्' शिक्षणप्रतिमानम्, शिक्षकाभिविन्यास–विषमताकेन्द्रित–प्रतिमानम् इत्यादीनि शिक्षकप्रशिक्षणकेन्द्रे प्रसिद्धानि सन्ति। एतेषां शिक्षकप्रशिक्षणकार्यक्रमे नैरन्तर्येण प्रयोगः कर्तव्यः। एवं करणेन कुशलानां सुयोग्यानां च शिक्षकाणां निर्माणं संभवति।

### ✡ आधुनिकशिक्षणप्रतिमानानि ( Modern Training Models )

आधुनिकशिक्षणप्रतिमानानि सामाजिकविकासं मनसि निधाय संरचितानि सन्ति। एतेषां प्रतिमानानां निर्माणावसरे समाजमनोविज्ञानस्य सिद्धान्ताः अधिक्येन अवलम्ब्यन्ते। शिक्षकछात्रयोर्मध्ये जायमानायाः अन्तःक्रियायाः सामाजिकमहत्त्वमस्तीति एतेषां राद्धान्तः। सामाजिकान्तःक्रियाप्रतिमानम्, सूचनाप्रक्रियाप्रतिमानम्, व्यवहारपरिवर्तनप्रतिमानम् इत्यादीनि आधुनिकशिक्षणप्रतिमानेषु अन्तर्भवन्ति। एवं शिक्षणप्रतिमानानि अनल्पानि सन्ति। एतेषाम् अनुप्रयोगेण शिक्षकाः नूनमेव स्वीये व्यावसायिकक्षेत्रे कीर्तिं प्रीतिञ्च विन्दतीत्यत्र नास्ति संशीतिः।

**परिशीलितग्रन्थसूची**

(1) गंगाराम शर्मा (२००५) भाषा शिक्षण, आगरा.एच.पि.भार्गव बुक् हाउस।

(2) ब्रजेश्वर वर्मा (१९८९) भाषा शिक्षण तथा भाषा विज्ञान,आगरा,केन्द्रीय हिन्दी संस्थान।

(3) डा. ममता गुप्ता (२००७) हिन्दी शिक्षण, राखी प्रकाशन, आगरा।

(4) जे.सी. अग्रवाल (२००८) शैक्षिक तकनीकी, आगरा, विनोद पुस्तक मन्दिर।

(5) त्यागी / भन्देल - शिक्षा के आधार तथा शैक्षिक तकनीकी, राखी प्रकाशन, आगरा।

(6) J.C. Agarwal - Educational Technology and Management, Agra, Vinod Pustak Mandir

सहायकाचार्यः
शिक्षाशास्त्रविभागः, रा.सं.सं.,
राजीवगान्धीपरिसरः, शृङ्गेरि

# संस्कृतशिक्षणे मूल्यांकनविधिविषयकानुसन्धानस्य आवश्यकता

डॉ. हरिप्रसादमीणा

व्यावसायिकप्रवृत्तिप्रधाने आधुनिकयुगेऽस्मिन् जनानां मनसि संस्कृते उद्योगविषयमाधारीकृत्य महत् प्रश्नवाचकचिह्नं दृश्यते अत एव संस्कृत छात्राणां संख्या सर्वत्र अत्यन्तम् अल्पीयसी। उदाहरणरूपेण २०१५ तमे वर्षे सी.बी.एस.ई. परीक्षायां द्वादश्यां कक्ष्यायां केवलम् एक एव छात्रः परीक्षाम् अलिखत। इत एव ज्ञायते यत् संस्कृतपठितृणां संख्यायां कियत् ह्रासः जायमानः वर्तते। यद्यपि तत्र केवलं उद्योगः एव एकं कारणम् इति न। उत्तमानां प्रशिक्षितानां निष्ठावतां च शिक्षकाणाम् अभावः, शिक्षणे विशिष्टानां योग्यविधीनां च चयनम् अकृत्वा पाठनम्, विशेषतश्च मूल्याङ्कने केवलानां प्राचीनविधीनामेव प्रयोग इत्यादयः नैकाः समस्याः अपि अत्र कारणीभूताः। विशिष्य अध्यापनः सम्यक् न भवति चेत् अध्याप्यमाणविषयम् अध्येता न कदापि अधिगन्तुं शक्नोति। तेन शिक्षणम् साफल्यं न भजते।

अपि च शिक्षणे यावन्महत्त्वं शिक्षणविधेः वर्तते तावदेव महत्त्वं मूल्याङ्कनविधीनामपि। यदि शिक्षणस्य मूल्याङ्कनं सम्यक् न भवति चेत् कृतस्य अध्यापनकार्यस्य परिणामः अवगन्तुं न शक्यते। मूल्याङ्कनाभावे कृतमपि विफलमेव इत्यत्र नास्ति संशयः। वस्तुतः मूल्याङ्कने हि शिक्षणस्य आधारभूतं तत्त्वं वर्तते इदं हि शिक्षकस्य कृतेऽपि दर्पणवद् भवति येन शिक्षकः आत्ममूल्याङ्कनं कर्तुं प्रभवति।

संस्कृतशिक्षणे प्रायः मूल्याङ्कनस्य प्राचीनाः विधयः प्रचलिताः आसन्। सम्प्रति विशिष्य बृहन्नगरेषु शिक्षाशास्त्रिभिः नैके विधयः संस्कृतशिक्षणमूल्याङ्कने उपयुज्यमानाः सन्ति। ताः नूतनाः विधयः संस्कृतशिक्षणे कियत्परिमितं प्रभावोत्पादनं कर्तुं प्रभवन्ति, के विधयः संस्कृतशिक्षणकाले महादुपकारकाः भवन्ति इत्यस्मिन् विषये सम्प्रति महतः अनुसन्धानस्य आवश्यकता वर्तते॥

यद्यपि १४ जुलाई १९६४ तमे दिनाङ्के प्रो. दौलतसिंहकोठारीवर्यस्याध्यक्ष्ये नियोजितस्य कोठारी-आयोगस्य परीक्षणविषयस्तु शिक्षायाः राष्ट्रियस्वरूपस्य, शैक्षिकविकासस्य समस्यानां च सर्वविधपक्षाणाम् अध्ययनं विधाय सर्वकाराय परामर्शप्रदानम् आसीत्। तथापि अनेनायोगेन शिक्षायाः संरचना, अध्यापकशिक्षा अध्यापकानां स्थितिः शास्त्रीयभाषाणाम् अध्ययनाय उच्चशिक्षाकेन्द्राणां स्थापनादिविषयैः सह एव मूल्याङ्कनस्य अपि महन्महत्त्वं सम्यक् प्रतिपादितम्।

शिक्षणदृष्ट्या किन्नाम मूल्याङ्कनम् इति प्रश्ने कृते सति छात्राणां शैक्षिकोपलब्धिः यदा अङ्केषु प्रदर्श्यते तदा सा प्रक्रिया मापनम् इति सर्वे अङ्गीकुर्वन्ति। यदा हि छात्राणां प्राप्ताङ्कानामाधारेण

तेषां उपलब्धेः स्तरस्य विषये सन्तोषप्रदं असन्तोषप्रदं इत्यादि निर्धारणं क्रियते तदा मूल्याङ्कनं एकं व्यापकं पदमस्ति।

संस्कृताध्यापनकाले कथा-काव्य-सुभाषित-पद्य-नाटकादिविविध शिक्षणस्य विविधानि एवोद्देश्यानि भवन्ति तथा च भिन्न-भिन्नोद्देश्यानां प्राप्तयर्थं विविधप्रकारकाः अधिगमक्रियाः छात्राणां सम्मुखं प्रस्तुयन्ते। विविध प्रकारककविषयाणां पाठनेन तदर्थं च अनुष्ठीयमानानां विविधक्रियाणाम् फलत्वेन छात्राणां व्यवहारे जायमानानां परिवर्तनानां मूल्याङ्कनं सरलं नास्ति। अतः विशिष्य संस्कृतशिक्षणे उद्देश्यानां निर्धारणम्, अधिगमक्रियानाम् आयोजनं ततश्च मूल्याङ्कनम् इति त्रीन् विषयान् आधारीकृत्य अपि महतः अनुसन्धानस्य आवश्यकता अस्त्येव। यतो मूल्याङ्कने एवं छात्राणां व्यवहारस्य गुणात्मकमात्रात्मकवर्णनेन साकमेव व्यवहारस्य वांछनीयतासम्बद्धमूल्यनिर्धारणमपि निहितं भवति।

साम्प्रतं विद्यालयेषु विश्वविद्यालयेषु च छात्राणाम् संस्कृतविषयस्य मूल्याङ्कन द्विविध क्रियते।

१. आन्तरिकमूल्याङ्कनम्

२. बाह्यमूल्याङ्कनं च

आन्तरिकमूल्याङ्कने प्राथम्येन अध्यापकः किमपि पाठ्यांशमधिकृत्य छात्रान् तेषां पूर्वज्ञातविषयेण सह संयोज्य पाठयति। यथा सर्वे छात्राः विषयमवगच्छेयुः तथा विधीनां प्रयोग शिक्षकः पाठनकाले करोति। कक्ष्यायां छात्राः सक्रियाः भवेयुः तन्निमित्तं शिक्षकः मध्ये मध्ये प्रश्नान् पृच्छति। तेषां श्रवण-भाषण-पठन-लेखन-कौशलानां विकासाय तेभ्यः अवसरान् कल्पयति शिक्षकः। पठितेषु विषयेषु छात्राणां सम्पादनाय अध्यापकः यथाशक्ति यतते। अन्ते च सप्ताहे मासान्ते वा एकां परीक्षां सञ्चाल्य छात्राणां मूल्याङ्कनं प्राप्ताङ्कान् दृष्ट्वा करोति। यतो हि आन्तरिकपरीक्षया प्राप्ताः अङ्काः छात्राणां योग्यतायाः प्रमाणपत्रं भवति।

**बाह्यमूल्याङ्कनम् -**

छात्राणां मूल्याङ्कनं सर्वदा लिखितपरीक्षाभिः न कर्तुं शक्यते इति वर्तमानकाले मनोविदः शिक्षाशास्त्रिणः च सम्यक् अवगतवन्तः सन्ति अत एव सर्वत्र विद्यालयेषु तादृशानां विधीनां एव पाठने प्रयोगः क्रियमाणोऽस्ति। ततश्च मूल्याङ्कने अपि तदनुगुणानाम् उत्तमविधीनां प्रयोगविषयकानुसन्धानस्य महती आवश्यकता अस्ति। विशिष्य नाटकपाठनाय अभिनयविधेः आश्रयः सर्वाधिकः श्रेयस्करः मन्यते। एवञ्चेत् नाटकविषयकाध्यापनस्य मूल्याङ्कनमपि प्रायोगिकमेव स्यात्। कथाकथनस्य महत्त्वं विज्ञाय तस्य मूल्याङ्कनमपि कथालेखनेन कथावाचनादिभिः च करणीयं स्यात्। अतः तदर्थम्। उत्तमानां मूल्याङ्कनविधीनां अन्वेषणस्य आवश्यकता अस्ति।

**मूल्याङ्कने प्रयुज्यमानाः नवीनोपागमाः -**

परीक्षां विना शिक्षायाः वास्तविक फलम् अधिगन्तुं न शक्यते अत एव शिक्षायाः परीक्षायाः च परस्परं अन्योन्याश्रयसम्बन्धः भवति। वार्षिकपरीक्षाः मौखिकपरीक्षादयः नैके प्रकाराः संस्कृतशिक्षणे

एतावत्पर्यन्तं सर्वत्र प्रसिद्धाः आसन्। प्राचीनकाले तु संस्कृतमूल्याङ्कनार्थं शलाकापरीक्षा एव आसीत यत्र परीक्षा पूर्णतया मौखिकी आसीत। तत्र परीक्षाणां द्वारा न केवल छात्राणां ज्ञानस्य स्तरः तथा च बुद्धिकौशलमेव ज्ञायते स्म अपितु कार्यशक्तेः अति निश्चयः भवति। सम्प्रति तु आधुनिकाः नैके विधयः मूल्याङ्कनस्य प्रसिद्धाः जायमानाः सन्ति।

सर्वत्रापि विद्यालयस्तरे संस्कृतशिक्षणस्य मूल्याङ्कनार्थं स्वीक्रियमाणाः विधयः इमे एव। एतैः सहैव क्वचित् शैक्षिकमूल्याङ्कनाय सतत-आन्तरिकमूल्याङ्कनम्, सत्रार्द्धपरीक्षाः, परीक्षासु सङ्गणस्य प्रयोगः, ग्रेडप्रणाली इत्यादयः विधयः अपि प्रयुज्यमानाः सन्ति। किन्तु संस्कृतशिक्षणे कियन्मितं प्रभावं जनयितुं इमे विधयः समर्था इति तु संप्रति अनुसन्धानस्य एव विषयः।

पूर्वोक्तविधीनां बहुविधप्रकारेण प्रयोगः सम्भवति। स च प्रयोगः पाठ्यमानविषयवस्तु आश्रयते। संस्कृतविषयपाठनकाले बहूनां विषयाणां पाठनार्थं बहुविधविधीनां प्रयोगः कर्तव्यः भवति। तदनुसारं विधीनां चयनं विधीयते। अत्रापि पूर्वोक्तत्रयाणां भेदानां क्रमशः विस्तृतरूपेण निरूपणं क्रियते।

**१. निबन्धात्मकपरीक्षा -**

प्रायः साहित्याध्ययनकाले मूल्याङ्कनार्थं सर्वत्रापि निबन्धात्मकपरीक्षायाः प्रयोगः विधीयते। अत्र विशेषतः प्रश्नानाम् उत्तरम् विवरणात्मकं विस्तृतं च भवति। अनेन हि विधिना ज्ञानस्य उपलब्धेः वास्तविक परीक्षणं न भवति। यतो हि अस्मिन् परीक्षणविधौ भाषायाम् अनधिकारकारणात् छात्राः लेखने कदाचित् क्लेशमनुभवन्ति। कदाचित् हि लेखनस्य अभ्यासाभावादपि विषये ज्ञाते सत्यपि परीक्षायां क्लेशमनुभवन्ति। एतेषु दोषेषु सत्स्वपि निबन्धात्मकपरीक्षायाः नास्ति महत्ता न्यूना। निबन्धपरीक्षायां लिखिताभिव्यक्तिः, कवितानां रसानुभूतिः, अक्षरविन्यासः, सारलेखनं, भावाभिव्यक्तिः, घटनानां वर्णनम्, पत्रलेखनं, निबन्धरचनादि अंशानां परीक्षणं कर्तुं शक्यते।

यद्यपि निबन्धात्मकपरीक्षाः एव पुरा विशेषतः भवन्ति स्म तथापि अधुनातनमूल्याङ्कनस्य नवीनविधिषु अपि अस्य गणना अवश्यं क्रियत एव। यद्यपि साहित्यस्य विषये वास्तविकमूल्याङ्कनं साहित्यस्य एव निबन्धरूपेण लेखनप्रदर्शने अथवा मोखिकरूपेण तस्य परीक्षाद्वारा एव सम्भवति। किन्तु अनेन क्रमेण परीक्षकानां द्वारा मूल्याङ्कने वस्तुनिष्ठता न कदापि सम्भवति। अतः अवश्यमेव कथञ्चिदपि अनुसन्धानपूर्वकं तादृशाः विधयः अन्वेष्टव्याः येन निबन्धात्मकपरीक्षासु मौखिकपरीक्षासु च वस्तुनिष्ठता आनेतुं शक्येरन्।

मौखिकपरीक्षासु एकम् उदाहरणं राष्ट्रियसंस्कृतसंस्थानेन क्रियमाणम् अक्षरश्लोकीपरीक्षायाः (स्पर्धायाः) मुल्याङ्कनं भवति। तेषां द्वारा सर्वेषाम आवश्यकश्लोकानां मृदु-उपागमरूपेण निर्माणं कृत्वा प्रयोगः क्रियते। परीक्षणकाले यदि कश्चन छात्रः संशययुक्तः अशुद्धं वा किमपि वदति चेत् तस्य साक्षात मृदु-उपागमे वीक्षणेन मूल्याङ्कन कर्तुं शक्यते। एवमेव निबन्धात्मकपरीक्षासु विशिष्य विद्यालयस्तरीयपरीक्षासु अनुसन्धानपूर्वकं कर्तुं शक्येत्।

**वस्तुनिष्ठपरीक्षणविधिः -**

निबन्धात्मकपरीक्षायाः पूर्णतः विपरीतं भवति अयं विधिः अर्थात् ये दोषाः निबन्धात्मकपरीक्षायां भवन्ति तेषां निवारणं वस्तुनिष्ठपरीक्षया सम्भवति। अत एव एवमपि उच्यते यत् निबन्धात्मकपरीक्षायाः दोषाणां निवारणाय मूल्याङ्कने वस्तुनिष्ठपरीक्षाविधिः आद्रियते। वस्तुनिष्ठविधेः इदमेव वैशिष्ट्यं यदत्र प्रश्नस्य उत्तरं स्पष्टं निश्चितं च भवति अनेन परीक्षा विषयनिष्ठा मूल्याङ्कनञ्च निष्पक्ष भवति। ईदृशमूल्याङ्कने परीक्षकाणां मूल्याङ्कनभेदः अपि प्रभावी न भवति। अर्थात् भिन्न-भिन्नपरीक्षकैः कृतं मूल्याङ्कनमपि अत्र परिणामे भेदं जनयितुं न शक्नोति। अत एव अत्र वैधता विश्वसनीयता चापि भवति। अस्य विधेः केचन सीमानः अपि सन्ति तद्यथा - अत्र स्वीयाभिव्यक्तेः प्रकाशनं कर्तुम् अवसरः न भवति। तथापि संस्कृतशिक्षणे अधोलिखितानां विषयाणां परीक्षणाय अयं विधिः विशेषतः प्रयोगात्मकं व्याकरणम्, शब्दज्ञानम्, शुद्धप्रयोगः, विषयग्रहणकौशलम्, अक्षरविन्यासः, अलङ्कारः छन्दश्च इत्यादि। संस्कृतशिक्षणसन्दर्भे अस्य विधेः बहुविधप्रकारेण प्रयोगः भवति। तद्यथा - बहुविकल्पप्रश्नात्मकरूपेण, तुलनात्मकप्रश्नरूपेण, रिक्तस्थानपूणरूपेण, शुद्धाशुद्धप्रश्नरूपेण, प्रत्याह्वानप्रश्नरूपेण इति।

एतेषु सर्वेषु अपि प्रकारेषु किं सर्वेऽपि प्रकाराः सर्वविधाध्ययनार्थं योग्याः? इति। विषयमधिकृत्य महतः अनुसन्धानस्य आवश्यकता वर्तत एव।

**सन्दर्भग्रन्थसूची**


1. अल्तेकर, अनन्तसदाशिव; प्राचीन भारतीय शिक्षा पद्धति, नन्दकिशोर एण्ड ब्रदर्स, वाराणसी, १९६८।
2. आनन्द, श्याम; शिक्षाशास्त्र, उपकार प्रकाशन आगरा, नवीनतम संस्करण-2002
3. आहूजा आर. रिसर्च मैथड्स, न्यू देहली, रावत पब्लिकेशर्स संस्करण-2001
4. गुप्ता, एस्.पी. ; आधुनिक मापन एवं मूल्याङ्कन, शारदा पुस्तक भवन, इलाहाबाद, नवीन संस्करण-2013
5. पाण्डेय, अरविन्द कुमार. ; संस्कृत शिक्षा का विकास, आदित्य बुक सेण्टर दिल्ली, २००४।



वरिष्ठाध्यापकः,
राजकीय उच्चमाध्यमिक विद्यालयः,
राजोरी गार्डन, दिल्ली

# शिक्षाशास्त्रं व्यावसायिकदक्षता च

राजेन्द्रप्रसादरैगरः

**भूमिका-**

शिक्षा नरं एकं श्रेष्ठं मानवं करोति। शिक्षायां ज्ञानं, उचिताचरणं, तकनीकी दक्षता, शिक्षणं, विद्याप्राप्ति च इत्यादयः समाविष्टाः सन्ति। शिक्षा व्यक्तेः अन्तर्निहितक्षमतायाः तस्य व्यक्तित्वस्य च विकासस्य प्रक्रिया अस्ति। इयं प्रक्रिया तं समाजे एकस्य वयस्कस्य भूमिकां पूरयितुं समाजीकृतं करोति। समाजस्य सदस्य रूपेण तं आवश्यकं ज्ञानं कौशलं च उपलब्धं कारयति।

शिक्षा एका सजीव गतिशीला प्रक्रिया वर्तते। शिक्षायां शिक्षार्थी-शिक्षकयोः मध्ये अन्तः क्रिया भवति। सम्पूर्णा अन्तः क्रिया च कस्मिंचिदपि लक्ष्यं प्रति उन्मुखं भवति। शिक्षकः शिक्षार्थी च शिक्षाशास्त्राधारोपरि एकतः अपरेण व्यक्तित्वेन लाभान्वितं प्रभावितं भवतः तथा च एषः प्रभावः काचिद् विशिष्टदिशां प्रति स्पष्टरुपेण अभिमुखं भवति। परिवर्तितसमयेन सह सम्पूर्णं शिक्षाक्षेत्रं गतिशीलमस्ति। तस्य गतिः कस्मिन् दिशायां भवति? कः प्रभावितं भवति? एतस्याः दिशायाः लक्ष्य निर्धारणं शिक्षाशास्त्रं करोति।

**शिक्षाशास्त्रम्-**

अत्र शिक्षा शब्दः संस्कृतभाषायाः शिक्ष् धातुना निर्मितम् अभवत्। यस्यार्थः- सीखना अथवा सिखाना इति।

फ्राबेलमहोदयानुसारम्- शिक्षा एका प्रक्रिया विद्यते यया माध्यमेन बालकः स्वान्तर्निहत शक्तीनां विकासं करोति।

स्वावमिविवेकानन्दमहोदयानुसारेण मानवे अन्तर्निहित पूर्णतायाः अभिव्यक्तिः एव शिक्षा इति उच्यते।

महात्मागान्धिमहोदयानुसारेण- शिक्षया अभिप्रायः बालकस्य सर्वाङ्गीणविकासेन भवति। अर्थात् संक्षिप्तरुपेण कथ्यते यत् शिक्षया एव बालकस्य सर्वाङ्गीणविकासोः भवति। निर्देशः ग्रन्थः इत्यमरः

शिष्यते अनेन इति शास्त्रम्। शासृ सर्वधातुभ्यष्ट्रन उणा इति ष्ट्रन्। शास्त्रोत्पत्ति वेदविरूद्धशास्त्राणि यथा-

अन्यानि चैव शास्त्राणि लोकेस्मिन्मोहनानि च<br>
वेदवाद विरूद्धानि मयैव कथितानि तु।<br>
वामं पाशुपतं योगं नाकुलं चैव भैरवम्<br>
असेव्यमेतत् कथितं वेदवाह्यं तथैतरत्।।

तत् एतत् सर्वं तत्वानुशंसनम् तदनुशासनं वा शास्त्रमिति अवाचक्षते। तत्र शास्त्राणि अनेक विधानि भवन्ति परन्तु तेषु अपि शिक्षाशास्त्रस्य मानवजीवने महती आवश्यकता भवति। यतोहि शिक्षाशास्त्रं एकं व्यापकं क्षेत्रमस्ति यः शिक्षायाः शिक्षणस्य च चिन्तनाभ्यासस्य सिद्धान्तस्य व्यवहारस्य च सम्पूर्णपरम्परया सम्बन्धितोऽस्ति।

**व्यावसायिकदक्षता-**

व्यावसायिकजीवनस्य प्रत्येकं मानवस्य जीवने सर्वाधिकं महत्वं भवति। कस्यचिदपि व्यवस्थायां रोजगाररहितमानवः स्वस्य आवश्यकतानां पूर्तिः न कर्तुं शक्नोति। तथा च तस्याभावे तस्य जीवनं अपि सम्यक् प्रकारेण न प्रचलति। वस्तुतः जीवनस्य निर्माणं व्यवसायेन प्राप्त धनस्याधारोपरि निर्भरं भवति। अर्थात् सक्षेपेण कथ्यते यत् जीवनं धनं च जीवनस्य स्वरूपं तथा च व्यवसायस्य प्रत्यक्षाप्रत्यक्षरूपे गूढ सम्बन्धो भवति। अत्र त्रयः प्रत्ययाः स्पष्टरूपेण दृश्यते - १. व्यावसायिक शिक्षा (Vocational Education) २. व्यावसायिकनिर्देशनम् (Vocational Guidance)३. शिक्षायाः व्यावसायीकरणञ्च (Vocationalization Education) व्यावसायिकशिक्षायाः प्रक्रियायां व्यावसायिकनिर्देशनस्य विशेषमहत्वं अस्ति। यतोहि व्यावसायिक शिक्षायाः अधिकांशाः कार्यक्रमाः व्यावसायिकनिर्देशनस्य सहायताया सम्पन्नं क्रियते।

यूनेस्को (UNESCO) महोदयानुसारं व्यावसायिकशिक्षा एकाव्यापक प्रक्रिया विद्यते। यस्मिन् शिक्षाप्रक्रियायाः सर्वेपक्षानृ यथा सामान्यशिक्षा, तकनीकीशिक्षा, प्रयोगशाला, कौशलं, अभिवृत्तयः ज्ञानं बोधः च इत्यादयान् समिलितं क्रियते। येषां सम्बन्धः व्यवसायेन एव भवति।

दक्षता (Efficiency) एका मापनयोग्या राशिः भवति। ऊर्जायाः रूपान्तरणस्य स्थित्यां आउटपुटऊर्जायाः इनपुटऊर्जायाः च अनुपातं दक्षता इति उच्यते।

**व्यावसायिकदक्षतायाः पक्षाः-**

१. व्यावसायिकदक्षतायाः सम्बन्धः समन्वितशिक्षया सततशिक्षया च भवति।
२. व्यावसायिकदक्षतायां सामान्य शिक्षायाः अतिरिक्तं तकनीकीशिक्षा विज्ञानशिक्षा अपि प्रदीयते।
३. व्यावसायिकदक्षतायां रोजगारस्य विभिन्नक्षेत्राणां आर्थिकस्य सामाजिकजीवनस्य च ज्ञानं बोधं वा कथते।
४. व्यावसायिकदक्षता एका शिक्षायाः समन्वितं रूपमस्ति। यस्मिन सामान्यशिक्षया सह जीवनस्य रोजगारोन्मुखी शिक्षाऽपि सतत् रुपेण प्रदीयते इति।

**व्यावसायिकदक्षतायाः उद्देश्यानि-**

राष्ट्रिय शिक्षा अनुसन्धानं प्रशिक्षणपरिषदः च १९८४ ई. तमे वर्षे व्यावसायिक दक्षतायाः अधोलिखितानाम् उद्देश्यानाम् उल्लेखं करोतं-

१. ग्रामीणविकासस्य राष्ट्रियोद्देश्यानां प्राप्तिकरणम्।

२. समाजस्य रूपान्तरणम्।
३. राष्ट्रियोत्पादनस्य विकासयितुं शिक्षा तथा च प्रशिक्षणं प्रदानम्।
४. व्यक्तिगतसम्पन्नतायां वृद्धिकरणम्
५. बालकान् आत्मनिर्भरं करणद् तथा च उद्यमितायै निर्माणकरणम्

अतएव कथ्यते यत् शिक्षाशास्त्रस्य व्यावसायिकदक्षतायाः च मानवजीवने अतिमहत्वपूर्णावश्यकता वर्तते इति।

शोधसन्धाता(शिक्षाशास्त्रविभागः)
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.)
जयपुरपरिसरः जयपुरम्

# संस्कृतशिक्षा व्यावसायिकदक्षता च

ओम प्रकाश वर्मा

संस्कृतभाषा सर्वासां भाषाणां जननी वर्तते। इयं सर्वप्राचीनतमा भाषा वर्तते। इयं परिष्कृता परिमार्जिता च वर्तते। संस्कृतपदस्य व्युत्पत्ति 'सम' उपसर्ग पूर्वकात् कृ' धातोः 'क्त' प्रत्यये वर्तते। अर्थात् सम्यक् रुपेण संस्कारिताः भाषा संस्कृतम् अस्ति। चत्वारोऽपि वेदाः संस्कृतभाषायामेव लिखिताः सन्ति। ये च वेदाः विश्वस्य प्राचीनग्रन्थाः सन्ति। अनेन स्पष्टं भवति यत् संस्कृतविश्वस्य सर्वप्राचीना भाषेति। अस्माकं संस्कृतसाहित्ये नैके ग्रन्थाः नैकानि शास्त्राणि च सन्ति-यथा-रामायणम्, महाभारतम् इत्यादयः। अस्यामेव भाषायां अस्माकं षोडश संस्काराः सन्ति। कर्मकाण्डः पूजापाठः च अस्यां भाषायामेव प्रचलन्ति। संस्कृतस्य संरक्षणाय संस्कृतशिक्षा अनिवार्या। उक्तं च-

**संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाः कला।**
**संस्कृते सकलं ज्ञानं संस्कृतं किं न विद्यते।।**

**कोठारी आयोगस्य सूचनानुसारं (१९६४-६६)**

प्रान्तीयसर्वकालीन एवं केन्द्रीय सर्वकालीन विद्यासंस्थासु नैतिक, सामाजिक, आध्यात्मिकशिक्षानां बोधनं करणीयम्।

**श्रीप्रकाश आयोगानुसारं (१९५१)**

विद्यालयेषु शीलनिर्माणं प्रमुखं लक्ष्यं भवति। इदानीं प्रपञ्चे सर्वत्र विद्याव्याप्तिः भवति किन्तु बालकेषु सौशील्यस्याभिवृद्धिः न दृश्यते। यदि सौशील्यं भवति चेत् बालकेषु मतसहनं, परस्परगौरवं, जातीनामुपरि मतकुलानामपि प्रेमभावना, आदरः समानता च भवेयुः।

**जॉन डीवी. महोदयानुसारं-**

शिक्षायाः उद्देश्यं बालकस्य बौद्धिकशक्तीनां नैतिकताश्च विकासः। विद्यालयीयवातावरणे छात्राणाम् उदात्तव्यक्तिनिर्माणे नैतिकमनोवैज्ञानिकसिद्धान्तः बहुधा उपकुर्वन्ति।

**व्यावसायिकदक्षता-**

व्यावसायिकजीवनस्य प्रत्येकस्य मानवस्य जीवने सर्वाधिकं महत्त्वं भवति। कस्मिन्नपि व्यवस्थायां रोजगाररहित-मानवः स्वकीयावश्यकतानां पूर्तिः न कर्तुं शक्नोति तथा च आवश्यकतानां पूर्त्यर्थाभावे मानवस्य कोऽपि अस्तित्वः न भवितुमर्हति इदं विचारणीयमस्ति। वस्तुतः जीवनस्य निर्माणं केनचिदपि व्यवसायेन प्राप्तधनस्योपरि आश्रितं भवति। मानवस्य भोजननिवासादयः स्तरः कार्यस्य गतिः समाजस्य च सम्बन्धित कार्याणाम् उपरि कस्मिञ्चिदरूपे धनोपार्जनस्य स्रोतस्य

प्रासधनस्य मात्रायाः च प्रभावो पतति अर्थात् संक्षेपेण कथ्यते यत् जीवनं धनं च जीवनस्य स्वरूपं तथा च व्यवसायस्य प्रत्यक्षाप्रत्यक्षरूपे गूढसम्बन्धः भवति। अत्र त्रयः प्रत्ययाः स्पष्टं दृश्यते-

१. व्यावसायिक शिक्षा (Vocational Education)
२. व्यावसायिक निर्देशनं (Vocational Guidance)
३. शिक्षाव्यावसायिकरणं (Vocationalization of Education)

**व्यावसायिक शिक्षा-**

व्यवसायिक शिक्षायाः प्रक्रियायां व्यावसायिकनिर्देशनस्य बहुमहत्त्वम् अस्ति। द्वौ एव एकस्यापरस्य पूरकमस्ति। विनाव्यवसायिकनिर्देशनस्य व्यावसायिकशिक्षा पूर्णा न भवति। व्यावसायिकशिक्षायाः अधिकांशाः कार्यक्रमाः व्यावसायिकनिर्देशनस्य सहायतया सम्पन्नं क्रियते।

व्यावसायिकशिक्षायाः परिभाषा यूनेस्को (UNESCO) अददात्। व्यावसायिकशिक्षा एकं व्यापकं प्रत्ययमस्ति यस्मिन् शैक्षिक प्रक्रियायाः सर्वेपक्षाः सामान्यशिक्षा-तकनीकीशिक्षा-विज्ञानेन सम्बन्धिता अतिरिक्तिः प्रयोगशाला कौशलः, अभिकृतयः ज्ञानं तथा च बोधसम्बन्धितपक्षान् सम्मिलितं क्रियते येषां सम्बन्धः आर्थिक-सामाजिकजीवन-व्यावसायस्य च कार्येणऽपि भवति।

**व्यावसायिकशिक्षायाः पक्षः-(Aspects of Vocational Education)**

- व्यावसायिकशिक्षायाः सम्बन्धः समन्वितशिक्षया सततशिक्षया च भवति।
- व्यावसायिकशिक्षायां सामान्यशिक्षाया अतिरिक्तं तकनीकी शिक्षा विज्ञानशिक्षा चऽपि दीयते।
- व्यावसायिकशिक्षायां रोजगाराणां विभिन्न क्षेत्राणाम् अधिकस्य सामाजिक च ज्ञानमपि कार्यते।

शोधच्छात्रः
शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम्, जयपुरपरिसरः

**सन्दर्भग्रन्थाः**

१. संस्कृतशिक्षणम्-प्रो. श्रीमती सन्तोष मित्तलः, प्रो. श्री फतहसिंहः
२. अन्तर्जालमाध्यमेन।
३. शैक्षिक एवं व्यावसायिक निर्देशन तथा परामर्शः - डॉ. आर.ए.शर्मा, डॉ. शिखा चतुर्वेदी

# छात्राणां भविष्यनिर्माणाय आवश्यकी व्यावसायिकशिक्षा

महेशशर्मा

व्यावसायिकशिक्षेति पदं द्वयोः पदयोः संयोगेन निर्मितम्। तयोः प्रथमं पदं व्यवसायः, द्वितीयपदञ्च– 'शिक्षा'। अत्र व्यवसायपदस्य तात्पर्यमिदम्– 'जीविकोपार्जनस्य साधनमिति'।

व्यावसायिकशिक्षा सा शिक्षा वर्तते, या व्यवसायसञ्चालनसम्बन्धिनिर्देशं ददाति। व्यावसायिकविकासमाध्यमेन एव कस्यचिदपि समाजस्य अर्थव्यवस्थां ज्ञातुं शक्यते। तकनीकीशिक्षाऽपि व्यावसायिकशिक्षाया अङ्गं वर्तते। व्यावसायिकशिक्षा व्यवसायसम्बन्धितकनीकीप्रशिक्षणं जनेभ्यो ददाति।

व्यावसायिकशिक्षा वस्तुतः मानवकार्यस्य शिक्षा वर्तते अर्थादस्यां मनुष्यः मस्तिष्कस्यापेक्षया हस्तैरधिकं कार्यं करोति। यथा– चर्मकार्यं, काष्ठकार्यं, धातुकार्यं, शिल्पकार्यञ्च।

जॉन डी.वी. महाभागेन व्यावसायिकशिक्षां परिभाषयता कथितम्–

"व्यवसायपरकशिक्षया एव मनुष्य एकविशिष्टकार्याय योग्यो भवति। यस्मात् स विशिष्टसेवां कुर्वन् समाजे विशिष्टक्षमतां प्रदर्शयति।"

सामाजिकविज्ञानानां विश्वकोषे व्यावसायिकशिक्षां प्रत्युक्तम्–

"व्यापकरूपेण व्यावसायिकशिक्षान्तर्गते तादृश्यः शिक्षाः सम्मिलिताः सन्ति, याभिः जनाः जीविकोपार्जनाय प्रशिक्षणं प्राप्नुवन्ति।"

शिक्षेयं कृषिः व्यापारः, वाणिज्यम्, अभियान्त्रिकी-प्रौद्योगिकी, स्वास्थ्यं, पशु-चिकित्सा, गृहविज्ञानञ्चेत्यादिक्षेत्रेषु तत्सम्बन्धिविविधपाठ्यक्रमेषु युवकानां कृते आजीविकां प्रददाति।

व्यावसायिकशिक्षाया उद्देश्यम्[१]–

१. प्रत्येकं जनस्य व्यावसायिकक्षमतायाः वर्धनं, तस्य रुच्यनुसारेण व्यवसायप्रदानञ्च।
२. जनानामावश्यकतापूर्त्योर्मध्ये न्यूनान्तरं करणीयम्।
३. विद्यार्थिषु आत्मविश्वासस्य जागरणम्।
४. व्यवसाये वैभिन्न्यम्।
५. व्यवसायपरकपाठ्यक्रमनिर्धारणम्।
६. विद्यार्थिनां कृते व्यवसायावसरं प्रदानम्।
७. राष्ट्रविकासाय कुशलजनशक्तेरावश्यकतायाः पूर्तीकरणम्।
८. अनुपयोगिशिक्षायाः प्रसारस्य अवरोधनम्।
९. लाभदायकाजीविकोपार्जनम्।
१०. दरिद्रताया उन्मूलनम्।

११. कृषिकार्योन्नतिः।
१२. सञ्चारसाधनानां विकासः।
१३. व्यवसाये विभिन्नकौशलानां विकासश्च।

**व्यावसायिकशिक्षायाः मूलभूतसिद्धान्तः[२]–**

१. यादृशे वातावरणे प्रशिक्षूणां प्रशिक्षणं भवति चेत्, तादृशी एव व्यावसायिकशिक्षा भविष्यति।
२. यत्र व्यावसायिकक्रिया-कलापानां बालकानां रुच्यानुरूपा समुचितव्यवस्था तथा च तत्सम्बन्धियन्त्राणां प्रयोगकौशलं स्याताम्, तत्र नूनं प्रभावशालिनी व्यावसायिकशिक्षा भविष्यति।
३. व्यावसायिकशिक्षां प्रति बालकानां यावती रुचिमात्रा, तावती एव व्यावसायिकशिक्षा प्रभावशालिनी भविष्यति।
४. व्यावसायिकशिक्षा नमनीया तरला च भवितव्या।
५. व्यावसायिकशिक्षाया आवश्यकतानुरूपं समयानुकूलञ्च प्रशिक्षणं भवति चेत्, तदैव व्यावसायिकशिक्षा प्रभावशालिनी भविष्यति।
६. प्रत्येकं व्यवसायस्य कृते न्यूनतमा उत्पादकयोग्यता निर्धारणीया।
७. यदा शिक्षकः स्वयं तच्छिक्षायाः ज्ञाता भवति चेत्, तदैव व्यावसायिकशिक्षा प्रभावशालिनी भविष्यति।

शिक्षाप्रक्रिया एतादृशी भवेत्, यया बालकेषु आधारभूतक्षमतायाः योग्यतायाः कौशलानाञ्च विकासो जायेत। अर्जितज्ञानस्य प्रयोगं कर्तुं छात्रान् शिक्षकैरवसर दातव्यः। अर्जितज्ञानस्य उपयोगः स्वजीवने न चेत्, तदा तु शिक्षा अपूर्णा निरर्थकी च मन्यते। छात्रैः अर्जितसैद्धान्तिकज्ञानस्य व्यावहारिकप्रयोगे कृते शिक्षायाः सार्थकतानुभूयते।

व्यावसायिकशिक्षया विद्यार्थिषु कौशलानां विकासकरणमिति वर्तमानयुगे प्रामुखी आवश्यकता। अनेन एकतः विकासप्रक्रियायां वृद्धिर्भवति तथा च अन्ततः जीविकोपार्जनस्य समस्यायाः निवारणमपि।

व्यावसायिकशिक्षाया आवश्यकतायाः प्रमुखानि कारकाणि–

१. आजीविकायाः सङ्कीर्णता
२. प्रतिजनं संसाधनानां न्यूनता
३. भूम्युत्पादकताया अल्पता
४. न्यूनतमं जीवनस्तरम्
५. स्वच्छजलस्याभावः
६. ऊर्जाया अपर्याप्तता
७. यातायातसंसाधनानामसुगमता
८. स्वास्थ्यव्यवस्थाया अपङ्गता च

वर्तमाने संस्कृतशिक्षा व्यवसायपरकशिक्षा नाऽस्ति। परन्तु विषयेऽस्मिन् अस्माभिरवश्यं कार्यं करणीयम्। संस्कृतशिक्षा तदा व्यवसायपरकशिक्षा भविष्यति, यदा आङ्ग्लभाषानुरूपः अस्याः भाषायाः प्रयोगः सङ्ककयन्त्रे भविष्यति।

'एमिस रिसर्च सेन्टर, कैलिफोर्निया' इति संस्थायाः 'संस्कृत एण्ड आर्टिफिशियल इन्टेलीजेन्स, नासा' इत्येकस्मिन् अनुसन्धानपत्रे संस्कृतभाषायाः महत्त्वं प्रतिपादयता रिक ब्रिग्गसमहोदयेन कथितम्–

'संस्कृतभाषा यान्त्रिकी भाषार्हा। अतः अस्याः भाषायाः प्रत्येकं वाक्ये शब्दानां क्रमो निश्चितो न, परन्तु प्रत्येकं पदं सार्थकं, पूर्णम्, अदौविध्यञ्च वर्तते।'

संस्कृतभाषा यान्त्रिकीभाषा स्यादित्यस्मिन् सन्दर्भे 'अमृता इनोवाटीव टेक्नोलॉजी' इति प्रयोगशालायामधुना कार्यं प्रचलति। सङ्गणकभाषात्वेन संस्कृतमङ्गीक्रियते चेत्, तदा जीविकोपार्जनस्य समस्यायाः किञ्चित्तु निवारणं भविष्यति।

संस्कृतशिक्षा एवं व्यावसायिकशिक्षा भविष्यति? विषयेऽस्मिन् भारतीयजनैः संस्कृतानुरागिभिश्च निम्नाङ्कितप्रयासः करणीयः –

१. सङ्गणकभाषात्वेन संस्कृतमङ्गीकरणम्।
२. योगशिक्षायाः प्रसारः।
३. आयुर्वेदचिकित्सापद्धतेः प्रभावस्य प्रतिपादनम्।
४. वेदेषु निहितज्ञानेन विश्वस्य प्रत्येकं समस्यायाः निवारणमिति कथनस्य सामान्यीकरणम्।
५. समाजे विविधव्यवसायकार्याणि सन्ति, तद्विशेषीकरणस्य परमावश्यकता। तस्य विशेषीकरणस्य समुचितप्रबन्धः करणीयः।[३]
६. उच्चस्तरीयशिक्षया सह विज्ञान–प्रौद्योगिकीशिक्षया व्यक्तौ प्रत्येकं कार्यं प्रति समुचितदृष्टिकोणं, सामाजिकज्ञानं, दया, अनुशासनमित्यादीनां विकासः करणीयः।[४]

**सन्दर्भः–**


१ www.bhaivirtualuniversity.com.bedkcb3u4, पृ.सं.५

२. तत्रैव, पृ.सं. ६

३. पाण्डे, प्रो. रामशकल, शिक्षा के दार्शनिक एवं सामाजिक आधार, पृ.सं. २२०

४. तत्रैव

# वर्तमानसन्दर्भे व्यावसायिकशिक्षायां निर्देशनस्योपादेयता

अनुराधा शर्मा

व्यावसायिकजीवनस्य प्रत्येकमपि मनुष्यस्य जीवने सर्वाधिकं महत्त्वं भवति। कस्याञ्चिदपि व्यवस्थायां व्यवसायं विना स्वस्य आवश्यकतानां पूर्तिः कर्तुं नैव शक्यते। वस्तुतः जीवनस्य निर्माणं कस्मिंश्चिद् व्यवसायस्योपरि एव निर्भरति। जीवनस्य व्यवसायस्य च प्रत्यक्षाप्रत्यक्षरूपेण अत्यन्तं सम्बन्धोऽस्ति।

व्यावसायिकशिक्षायाः प्रक्रियायां व्यावसायिकनिर्देशनस्य विशेषमहत्त्वमस्ति। उभावेव परस्परं पूरकौ स्तः। व्यावसायिकनिर्देशनं विना व्यावसायिकशिक्षा पूर्णतां न गच्छति। व्यावसायिकशिक्षायाः बहवः कार्यक्रमाः व्यावसायिकनिर्देशनस्य सहायतया एव सम्पाद्यन्ते। व्यावसायिकशिक्षायाः परिभाषा यूनेस्को (UNESCO) इत्यनया संस्थया प्रदत्ता– ''व्यावसायिकशिक्षा एकः व्यापकप्रत्ययोऽस्ति। अस्यान्तर्गते शैक्षिकप्रक्रियायाः सर्वे पक्षाः तथा सामान्यशिक्षा, तकनीकिशिक्षा, विज्ञानसम्बन्धितप्रयोगशाला, कौशलानि, अभिवृत्तयः ज्ञानबोधाभ्यां सम्बन्धिताः पक्षाः सम्मिलिताः क्रियन्ते। येषां सम्बन्धः आर्थिक–सामाजिकजीवनेन साकमपि भवति।

Comprehensive term 'Vocational Education including those aspects of Educational Process involving in addition to general education. The study of technologies and related to science and the acquirition of practical skills, attitudes under standing and knowledge related to occupations of various sectors of economic and social life. Such as educational world be an integral part general education and means of preparing for the occupation as field and aspect continuing education." **UNESCO**

**व्यावसायिकशिक्षायाः पक्षाः–**

१. व्यावसायिकशिक्षायाः सम्बन्धः समन्वितशिक्षया एवञ्च तकनीकिशिक्षया साकं भवति।
२. व्यावसायिकशिक्षायां सामान्यशिक्षामतिरिच्य तकनीकिशिक्षा तथा विज्ञानस्य शिक्षाऽपि दीयते।
३. व्यावसायिकशिक्षाया अन्तर्गते प्रयोगात्मककौशलाभिवृत्तीनां विकासः क्रियते।
४. व्यावसायिकशिक्षायां रोजगाराणां विभिन्नक्षेत्राणां आर्थिकसामाजिकजीवनयोः ज्ञानं बोधश्च क्रियते।
५. व्यावसायिकशिक्षा शिक्षायाः समन्वितरूपमस्ति यत्र सामान्यशिक्षया साकं जीवनस्य रोजगारक्षेत्रस्य सज्जता कार्यते।

**व्यावसायिकशिक्षाया उद्देश्यानि–**

राष्ट्रियशिक्षा अनुसन्धान एवं प्रशिक्षणपरिषदा १९८४ तमे वर्षे व्यावसायिकशिक्षायाः अधोलिखितोद्देश्यानि प्रतिपादितानि–

१. ग्रामीणविकासस्य राष्ट्रीयोद्देश्यानां प्राप्तिकरणम्।
२. समाजस्य रूपान्तरकरणम्
३. राष्ट्रीयोत्पादनस्य विकासाय शिक्षा एवं प्रशिक्षणप्रदानम्। तथा च व्यक्तिगतसम्पन्नतायां वृद्धिकरणम्।
४. मध्यमवर्गस्य मानवशक्तेश्च विकासकरणं तथा च विभिन्नक्षेत्रेषु आर्थिकसम्पन्नताया आनयनम्।
५. सामान्यशिक्षायाः समूहस्य व्यावसायिकविषयान् प्रति उन्मुखीकरणम्।
६. विश्वविद्यालयेषु सामान्यशिक्षायाः छात्रेषु न्यूनत्वानयनम्।
७. छात्रेषु आत्मनिर्भरत्वोत्पादनं तथा च रोजगारस्य कृते सज्जीकरणम्।

**व्यावसायिकनिर्देशनम्–**

व्यावसायिकनिर्देशने छात्राणां योग्यता, क्षमता कौशलं तथा शरीरिकमानसिकसंरचनानुगुणं पाठ्यक्रमस्य रोजगारस्य च चयने सहायता प्रदीयते येन ते स्वजीवने अधिकां सफलतां प्राप्नुयुः।

जार्ज ई. मायर्समहोदयस्य कथनमस्ति यत् व्यावसायिकशिक्षा व्यावसायिकनिर्देशनं विना कल्पयितुं न शक्यते। व्यावसायिकनिर्देशनं साधनमस्ति शिक्षा च साध्यमस्ति।

Stated as vocational education without vocational guidance each like trying to make an automobile crank shaft out of any of metal that come handy without determine whether suitable for a crank shaft without providing facilities for process of neccssary purpose. –George E. Mayers

**व्यावसायिकनिर्देशनस्य विशेषता–**

१. व्यावसायिकनिर्देशनस्य माध्यमेन मनुष्येषु स्पष्टबोधस्य विकासः कर्तुं शक्यते। अस्याधारेण मनुष्यस्य कृते एतस्य ज्ञानं भवति यत् तस्य वास्तविकं स्वरूपं किमस्ति।
२. व्यावसायिकनिर्देशनस्याधारेण कार्यस्य स्वरूपविषये तत्सम्बद्धव्यक्तीनाञ्च विषये ज्ञानं प्राप्यते।
३. व्यावसायिकनिर्देशनम् एका प्रक्रियाऽस्ति। विभिन्नोद्देश्यानि प्रवधिः साधनानि च मनसि निधाय प्रक्रियेयं सम्पन्ना क्रियते।
४. व्यावसायिकनिर्देशनस्य प्रक्रियाया आधारेण मनुष्याणां योग्यता–सफलता–रुचि–प्रेरणादीनाञ्च विषये ज्ञानं कर्तुं शक्यते।
५. व्यावसायिकनिर्देशनाय आवश्यकज्ञानम्, दक्षता, योग्यतादीनां सम्बन्धे सूचना एकत्रीकर्तुं शक्यते।

अनेन प्रकारेण व्यावसायिकनिर्देशने व्यक्तिव्यवसाययोः उभयोरेव समानरूपेण अध्ययनं मूल्याङ्कनञ्च क्रियते। व्यावसायिकसमस्यानां समाधानाय प्रदीयमाना एषा एका ईदृशी सहायता वर्तते या व्यावसायिकावसराणाङ्कृते वाञ्छितयोग्यतामवधार्य प्रदीयते। अस्याः प्रमुखोद्देश्यं व्यावसायिकसमायोजनस्य योग्यतायाः विकासकरणमस्ति।

**व्यावसायिकनिर्देशनस्योद्देश्यानि–**

व्यावसायिकनिर्देशनस्य प्रमुखोद्देश्यानि अधोलिखितानि सन्ति–

१. विद्यालयेषु व्यवसायेन सम्बद्धसूचनानां विश्लेषणस्य योग्यतायाः विकासकरणम्।
२. सत्यनिष्ठया क्रियमाणं कार्यं सर्वदा सर्वोत्तमं भवतीति भावनायाः छात्रेषु विकासकरणम्।
३. व्यक्तेः व्यवसायचयनानन्तरं अनुकूलपरिस्थितीनामुत्पादने तस्य सहायताकरणम्।
४. छात्राणां विभिन्नव्यावसायिकप्रशिक्षणसंस्थानेन साकं परिचयकारणम्।
५. दरिद्रविद्यार्थिनाङ्कृते धनमतिरिच्य विविधसहायतां प्रदाय तेषां व्यवसायसम्बद्धयोजनानां सफलीकरणम्।
६. छात्राणाङ्कृते भिन्न-भिन्न व्यवसायानां निरीक्षणाय सुविधाप्रदानम्
७. कस्यचित् व्यवसायस्य कृते के के गुणाः योग्यताश्च अपेक्षिताः सन्ति; छात्राणाङ्कृते अस्य ज्ञानप्रदानम्।
८. छात्राणाङ्कृते विभिन्नव्यवसायानां ज्ञानं कारयित्वा तेषां व्यवसायानां सामाजिक-वैयक्तिकसम्बन्धविषये ज्ञानप्रदानकरणम्।
९. छात्रेषु कार्यं प्रति एकस्यायाः आदर्शभावनायाः विकासकरणम्।
१०. छात्राणां रुचिषु व्यापकत्वमुत्पाद्य तेषाङ्कृते अवसरप्रदानम्।

**व्यवसायचयने विचारणीयबिन्दवः–**

१. व्यवसायस्य महत्त्वम्
२. कार्यस्य स्वभावः
३. कार्यस्य दशा
४. व्यवसायस्य कृते वाञ्छनीययोग्यता
५. उन्नतेः अवसराः
६. वेतनम्
७. व्यवसायस्येतिहासः
८. वाञ्छनीयप्रशिक्षणम्
९. कार्यकालस्य अवधिः
१०. व्यवसायस्य व्यवस्था
११. वाञ्छनीयानुभवः
१२. स्थानापन्नता
१३. अन्यकार्मिकाणामध्ययनम्

**शिक्षायाः व्यावसायीकरणम्–**

व्यावसायीकरणस्य तात्पर्यमस्ति यत् व्यावसायिकविषयाणां कृते विद्यालयानां तथा च महाविद्यालयानां पाठ्यक्रमे स्थानं भवेत् येन छात्राः स्वशिक्षां प्रपूर्य जीविकोपार्जनाय सक्षमाः भवितुं शक्नुयुः। शिक्षायाः व्यावसायीकरणेन तात्पर्यमस्ति यत् छात्रेषु आत्मनिर्भरत्वोत्पादनम्। अत्र बालकस्य समग्रव्यक्तित्वस्य विकासः क्रियते। छात्राणां प्रवणतायाः अभिरुचीनां च मापनं कृत्वा तदनुगुणं व्यावसायिकक्षमतानां विकासकरणम्।

माध्यमिकशिक्षायोगेन बहूद्देश्यविद्यालयानां संस्तुतिः कृता। अत्र अनेकव्यावसायिकविषयाणां

सामान्यविषयैः साकम् अध्ययनङ्क्रियते। शिक्षायाः व्यावसायीकरणं शैक्षिकपाठ्यक्रमाणाम् परम्परागतपाठ्यक्रमाणां कवासः औद्योगिकावश्यकतानाञ्च मध्ये सेतुः इव कार्यं करोति। वर्तमानस्य शैक्षिकपाठ्यक्रमाः अधिकसैद्धान्तिकाः सन्ति न तु वास्तविकावश्यकतानुगुणं कृतमस्ति। आवश्यकता अस्य अस्ति यत् शिक्षायाः स्वरूपं व्यवसायकेन्द्रितं स्यात्। शिक्षायाः व्यावहारिकाः। व्यावसायीकरणेन शिक्षायाः मूलसमस्या-अपव्यय-अवरोधनशैक्षिकाधारादीनां समाधानं क्रियते।

**शिक्षायाः व्यावसायीकरणस्यावश्यकता-**

१. शिक्षायाः व्यावसायीकरणं एकं सशक्तयन्त्रमस्ति।
२. अनेन छात्रेषु अभिप्रेरणायाः विकासः जायते। अयं अध्यापने व्यवसाये च सम्बन्धस्य प्रत्यक्षीकरणं करोति।
३. अस्य माध्यमेन पाठ्यक्रमाणां कैरियरशिक्षायाश्च समन्वयनं क्रियते।
४. अनेन माध्यमेन वैकल्पिकाध्ययन-आव्यूहाः अधिगमवातावरणञ्च उत्पाद्यन्ते यत् छात्राणाम् आवश्यकतानां पूर्तिं करोति।
५. शिक्षायाः व्यावसायीकरणेन कैरियरकौशल-कार्यमूल्य-अनुकूलनक्षमतानाञ्च विकासः क्रियते।
६. अनेन तादृशी शिक्षा दीयते येन छात्रः स्वजीवनकाले व्यवसायस्य शिक्षायां समावेशः कर्तुं शक्येत।
७. अनेन माध्यमेन व्यवसायस्य सम्बन्धे निर्णयः क्रियते।

**सन्दर्भग्रन्थाः-**

१. शर्मा आर.ए. एवं चतुर्वेदी शिखा, शैक्षिक एवं व्यावसायिक निर्देशन तथा परामर्श
२. अग्रवाल जे.सी. (१९८९), एजूकेशन वोकेशनल गाइडेन्स एण्ड काउन्सलिंग, देहली दुआवः हाउस।
३. दुबे रमाकान्त (१९८२), शैक्षिक एवं व्यवसायिक निर्देशन के मूल आधार, मेरठ
४. पाण्डेय के.पी. (१९८७), शैक्षिक तथा व्यावसायिक निर्देशन के आधार, अमिताश प्रकाशनम्, दिल्ली
५. वर्मा, रामफल सिंह (१९८९), शैक्षिक एवं व्यावसायिक निर्देशन तथा परामर्श, विनोद पुस्तक मन्दिर, आगरा
६. जायसवाल सीताराम (१९८७), शिक्षा में निर्देशन और परामर्श, विनोद पुस्तक मन्दिर, आगरा।
७. भार्गव महेश (१९८५), आधुनिक मनोविज्ञान परीक्षा एवं मापन, आगरा

शोधच्छात्रा
शिक्षाशास्त्रविभागः
रा.सं.सं., जयपुरपरिसरः, जयपुरम्

# संस्कृतशिक्षकः शिक्षणकौशलानि व्यवसायिकदक्षता च

प्रियंकाबाई मीना

**संस्कृतशिक्षकः-**

जॉन डी वी महोदयः शिक्षायाः प्रक्रियां त्रिमुखीं स्वीकरोति। अस्यां प्रक्रियायां शिक्षकः बिन्दुः शिक्षकः इत्यत्र नास्ति सन्देहः। प्राचीनकालात् अध्यावधि शिक्षकः शिक्षाव्यवस्थायाः महत्वपूर्णाम् असाधारणां च भूमिका निर्वहति इत्यत्र नास्ति संशयः। प्राचीनकाले शिक्षकनिमित्तं चतुर्णं पदानां व्यवहारः प्रमुखतया आसीत्। तद्यथा - कुलपतिः, गुरुः, आचार्यः उपाध्यायश्च।

**कुलपतिः-**

भारतवर्षस्य प्राचीनशिक्षापद्धतौ कुलपतिः इति पदस्य उल्लेखः बहुधा दृश्यते। शिक्षासंस्थायै आश्रमाः तपोवनानि च प्रसिद्धानि आसन्। नैके आश्रमाः शिक्षाकेन्द्ररूपेण प्रसिद्धाः अभवन्। आश्रमस्य अध्यक्षरुपेण कुलपतिः भवति स्म।

**गुरुः-**

प्राचीनकाले गुरुः शब्दः केवलं शिक्षकार्थ-बोधकः नासीत्। गुरुशब्दस्य व्याख्यानं बहुधा दृश्यते

तद्यथा-

१. गरति(सिंचति) कर्णयोः ज्ञानामृतम् इति गुरुः।

२. गिरति ज्ञानान्धकारम् इति गुरुः।

३. गृणाति धर्मादि रहस्यं इति गुरुः।

४. गारयते विज्ञापयति शास्त्ररहस्यम् इति गुरुः। इति च

गुरोः महत्वं प्राचीनभारते अद्भुतमासीत्। गुरुः लोके भगवत्स्वरूपः मन्यते स्म। अज्ञाननिवारकः गुरुरेव भगवत्प्राप्तौ एकः एव समर्थः स च गुरुः। आत्मज्ञानप्रदायकः गुरुः एव। गुरोः ज्ञानमूर्तित्वेन स्थानम् आसीत्। गुरुः अचलः विमलः भावातीतः त्रिगुणरहितश्च आसीत्। तद्यथा-

**''गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरूर्साक्षात परब्रह्म तस्मै श्रीगुरवे नमः।।**

प्राचीन भारतीय शिक्षापद्धतौ गुरोः अनिवार्यता प्रतिपादिता ज्ञानञ्च गुरुसन्निधौ एव भवितुमर्हति। नारदेन उव्व्यते-

**''पुस्तकप्रत्याधतं नाधीतं गुरुसन्निधौ।**
**भ्रजते न सभामध्ये जारगर्भः इवास्त्रियः**

गुरुः स्वशिष्यस्य उपनयनसंस्कारं विधाय स्वगर्भे धारयति स्म। अथर्ववेद अवलोक्यते-

"आचार्यः उपनयमानयः कृणुते ब्रह्मचारिणं गर्भम् अन्तः"

आचार्यः अपि प्रशासनिकं पदं सम्प्राप्य स्वकीयं अध्यापनं नैव त्यजति स्म। प्राचीनकाले कौटिल्यस्य एतादृशमेव स्थानमासीत्। **मुद्राराक्षसे कौटिल्यः मौर्यसाम्राज्यस्य प्रतिष्ठापकः आसीत्** अथ च चन्द्रगुप्तस्य महामंत्री। महामंत्रिपदं अलङ्कुर्वता चाणक्येन राजकीय वैभवानि नैव उपभोक्तानि। आचार्यः चाणक्यः निमित्तरुपेण छात्राणाम् अध्ययनम्करोत्

चाणक्यस्य विषये विशाखदत्तेन उच्वते यत्-

उपलशकलमेतद भेदकं गोमयानां वटुभिरुपहृतान बर्हिषा स्तोम एवः शरणमपि समिद्धिः शुष्यमाणाभिराभिर्विनमितपटलान्तं दृश्यते जीर्वाकुर्याम्।

**आचार्यः-**

शिक्षकस्य अर्थे आचार्यः उपाध्यायः इत्यनयोः शब्दयोः प्रयोगः अधिकः दृश्यते सम्भवः एतौ द्वावपि शब्दो भिन्नौ आस्ताम्।

उपाध्यायस्य अपेक्षया आचार्याय अधिकं सम्मानं प्रदीयते स्म। अपितु श्रेष्ठमाचरणं उपस्थापयति स्म। आचार्यात् शिष्यः धर्मस्य ज्ञानं प्राप्नोति। आपस्तम्बधर्मसूत्रे उच्यते–

"यस्माद् धर्ममाचिनोति सः आचार्यः।

आचार्यः एव शिष्यस्य उपनयनं करोति। स एव आचार्यः सरहस्यं संकल्पर्यञ्च उपदिशति। मनुस्मृतौ उल्लिख्यतै–

**"उपनीय तु यः शिष्यं वेदमध्यापयेद द्विजः।**
**संकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।।"**

**उपाध्यायः-**

एकदेशं तु वेदस्य वेदाङ्गान्यपि यः पुनः।
योः अध्यापयति वृत्यर्थमुपाध्यायः स उच्यते।

शिक्षायाः कस्यामपि योजनायां शिक्षकं केन्द्रीयस्थानम् अलङ्करोति। शिक्षकः शैक्षिक प्रक्रियायाः प्रमुखः संचालकः इति वक्तुं शक्यते। नेल्सन एल वौसिंग महाभागः शिक्षकस्य भूमिकां अभिव्यञ्जयन् कथ्यति। शिक्षकः प्रधानतया पञ्चसु क्षेत्रेषु स्वप्रभावं जनयति तद्यथा–

(i) ज्ञानम् (ii) कौशलानि
(iii) अभ्यासः (iv) अभिवृत्तयः (v) मूल्यानि

**शिक्षणकौशलानि–**

कमपि विषयं सुष्ठु बोधयितुं, छात्रामासक्तिं, चिन्तनशक्तिञ्च पूर्णं समयं संरक्षितुम् अध्यापकेन स्वायत्तीकर्तव्यानि कानिचित् शिक्षणकौशलानि अत्र विचार्यन्ते।

प्रश्नकौशलम्-

उद्दिष्टमुत्तरं प्राप्तुं प्रश्नानां स्वरूपं, स्वभावश्च युक्तं स्यात्। प्रश्नस्य कानिचित् लक्षणान्यत्र प्रदर्श्यन्ते।

(i) कन्निङ्घम् - ''प्रश्नः एकं शाब्दिकमाध्यमं यद्द्वारा व्यक्तिविशेषात् उत्तरम् आकाङ्क्ष्यते इति।

(ii) जंगीरा - मस्तिष्कं प्रबोधयितुं, चिन्तनशक्तिं जागरयितुम्, अवधानं रक्षितुञ्च उपयुक्तं शाब्दिकमाध्यममेव प्रश्नः इति।

(iii) डॉ. वी. मुरलीधर शर्माः- निर्दिष्टोद्देश्यमनुलक्ष्य व्यक्तिविशेषात् समाधान-निष्कासनाय उपयुक्तं शाब्दिकमाध्यम प्रश्नः इति। एवञ्च शिक्षणप्रक्रिया निरन्तरमग्रसारयितुं, छात्राणां चिन्तनशक्ति प्रेरयितुं शाब्दिकप्रक्रियां प्राप्तुञ्च शब्दात्मकः प्रेरको भवति प्रश्न इति निश्चेतुं शक्यते। सन्दर्भानुसारं कक्ष्यायां प्रश्नानां रचने, उचितरीत्या प्रयोग च अध्यापकः समर्थः स्यात्। एतादृशं सामर्थ्यमेव प्रश्नकौशलमित्युच्यते।

१. कक्ष्यायां सन्दर्भानुसारं समुचितप्रश्नानां प्रयोगाय अध्यापकस्य अपेक्षिताः योग्यताः उत्पाद्यन्ते यथा (१) पाठ्यविषयज्ञानम् (२) प्रश्नरचनासामर्थ्यम् (३) मूल्याङ्कनयोग्यता (४) आत्मविश्वासः

२. प्रश्नकौशलघटकाः (१) वेगः (२) कण्ठस्वरः (३) विरामः (४) वितरणम्

३. प्रश्नस्वरूपघटकाः (१) शुद्धता (२) सम्बद्धता (३) संक्षिप्तता (४) विशिष्टता

४. प्रश्नप्रकाराः- (१) स्मृतिप्रश्नाः (२) विचारोद्बोधकप्रश्नाः (३) शिक्षणप्रश्नाः (४) परीक्षणप्रश्नाः (५) पुनरावृत्तिप्रश्नाः

५. प्रश्नानां प्रयोजनानिः- (१) पूर्वज्ञानस्य परीक्षणम् (२) ज्ञातांशानां स्मारणम् (३) जिज्ञासायाः उद्बोधनम् (४) उपलब्धि परीक्षणम् (५) छात्राणां मानसिकशक्तीनां विकासः

## २. व्याख्यानकौशलम्

वि आङ् इत्युपसर्गद्वयपूर्वकात् 'चक्षिङ्' व्यक्तायां वाचि इति धातो ल्युट्प्रत्यये निष्पन्नोऽयं व्याख्यानशब्दः स्पष्टप्रतिपादननित्यर्थम् आख्याति पासी, जङ्गीरा च- विषयविशेषे व्यक्तेः पूर्वज्ञानं वर्धयितुं, व्यक्तिमवबोधयितु वा शिक्षकेण कथितानाम् अन्तरसम्बन्धकथनानां शास्त्राणां, काव्यानाञ्च व्याख्यानाय प्राचीनैरूपलक्षितं व्याख्यानस्य लक्षणं तावत्-

**''पदच्छेदः पदार्थोक्तिः विग्रहो, वाक्ययोजना।**
**आक्षेपाऽथ समाधानं व्याख्यानं पञ्चलक्षणम्।।''**

सन्धीनां विच्छेदेन पदानां स्पष्टप्रतिप्रत्तिः, पदार्थस्य स्पष्टीकरणम् समासादिवृत्तीनां विशेषार्थप्रतिपादनम्, पदार्थानां परस्परसम्बन्धेन सम्पूर्णस्य वाक्यार्थस्य बोधनम्, वाक्यार्थभूते विषये

संशयस्य, विरोधस्य, समस्यायाः वा उद्भवे तस्य समाधानं परिष्कारश्चेति व्याख्यानस्य स्वरूपं वर्णितमस्ति।

**३. दृष्टान्तकौशलम्-**

विषयबोधने मुख्यांशानां निरूपणाय दृष्टान्तानां प्रयोगः अध्यापकस्य पाण्डित्यं बोधनसामर्थ्यञ्च निरूपयति। अप्रसिद्धस्य, अज्ञातस्य, सूक्ष्मस्य वा विषयस्य, प्रसिद्धेन, सुपरिचितेन, स्थलेन उदाहरणेन स्पष्टीकरणं दृष्टान्तप्रयोग इति वक्तुं शक्यते। साहित्ये, विज्ञाने च शिक्षणीयाः विषयाः चित्राणां रचनेन सरलतया बोध्यन्ते। एतादृशं चित्रणं (चित्रव्याख्यानम्) आङ्गलभाषायां दृष्टान्तत्वेन (Illustration) व्यवह्रियते। कुशलः चित्रकारः कथायाः वर्णनस्य वा सर्वानशान् रेखाभिः, वर्णैश्च सुन्दरं चित्रयेत्, येन शब्दैः प्रतिपाद्यमानाः अर्थाः दृष्ट्या गृहीताः स्युः। एवं प्रतिभासम्पन्नः कविः हृदये स्फुरितान् भावान् रमणीयैः शब्दैः वर्णयति।

**४. श्यामपट्टकौशलम्-**

श्यामपट्टः अध्यापकस्य दक्षिणहस्तः भवति। सत्स्वपि बहुषु नूतनेषु दृश्यश्रव्योपकरणेषु सर्वत्र विद्यालयेषु, कार्यालयेषु च उपलभ्यमानम् एकमेव दृश्योपकरणं भवति श्यामफलकम्। गणितस्य, विज्ञानस्य, भाषाणाञ्च अध्यापने अनुपेक्षणीयमुपकरणं भवति श्यामफलकम्। छात्राणां पुरस्तात् अध्यापकेन श्यामफलके विषयस्य व्याख्यानाय लिख्यमानानि सुन्दराणि चित्राणि, मुख्यांशाश्च तस्य अध्यापनं गुणवत्तरं कुर्वन्ति। प्रायः श्यामफलके श्वेतसुधाखण्डेन लिख्यते। चित्रेषु त्रिभागानां प्रदर्शनाय, प्रधानांशानां प्रथक्करणाय विभिन्नवर्णानां प्रयोगः छात्राणामासक्तिं ग्रहणशक्तिश्च वर्द्धयति। वस्तुतः श्यामफलकमिति पदस्य स्थाने लेखनफलकमिति पदस्य प्रयोगः युक्तः स्यात्। यतो हि श्यामवर्णस्य स्थाने इदानीं पलशवर्षं, पाटलवर्णः घूसरवर्णं श्वेतवर्णं वा फलकं लेखनार्थमुपयुज्यते। आङ्गभाषायां (Black Board) इति पदस्य स्थाने अधुना(Chalk Board) इति पदं प्रयुज्यते।

**परिशीलित ग्रन्थसूचीः-**

१. उपाध्याय, डॉ. दुर्गावती, विगत (उन्नीसवीं) शताब्दी में संस्कृत-शिक्षा की स्थिति सम्पूर्णानन्द संस्कृत विश्वविद्यालय वाराणसी १९९१

२. ओड, प्रो. एल.के. शैक्षिक प्रशासन, राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर २००७

३. डॉ. च.ल.ना. शर्मा डॉ. फतेह सिंह संस्कृत शिक्षण की स्थिति - आदित्य प्रकाशन, जयपुर-२००८

शिक्षाचार्यच्छात्रा

शिक्षाशास्त्रविभागः, रा.सं.सं., जयपुरपरिसरः

# संस्कृतशिक्षा व्यावसायिकक्षमता च

डॉ. अरविन्द कुमार



आधुनिकयुगः वैश्वीकरणयुगः वर्तते अतः संस्कृतनवीनरूपे प्रस्तोतव्यम्। विभिन्नकालेषु संस्कृतशिक्षायां निहितं ज्ञानं-विज्ञानं, चिकित्साविज्ञानं च स्वाध्ययने शोधेषु पूर्णरुपेण स्थापितवन्तः। नैकेषु संस्थानेषु विद्यापीठेषु छात्राः संस्कृतं पठित्वा अध्यापकवृत्तिं उपरि एव केन्द्रिताः भवन्ति। वर्तमानकाले शास्त्रीयज्ञानं नवीनजानेन सह योजनीयम्। गतशताब्दीषु वेदपुराण-रामायण-दर्शनस्य वैज्ञानिक अनुशीलनं कृतं। परञ्च अद्य संस्कृतशिक्षायाः व्यावसायिकदृष्ट्या कथमुपयोगि स्यात् इत्यस्य स्थापनं अपेक्षितं।

अद्य युवानः व्यावसायिकपाठ्यक्रमं प्रति गन्तुम् इच्छन्ति। संस्कृतं केवलं भाषैव नास्ति अपि तु संस्कृते बृहद् विज्ञानमस्ति। अद्य जगति सर्वत्र सूचनातन्त्रस्य आविर्भावः जातः। संस्कृतच्छात्राणां कृते शासकीय सेवासु व्यवसायः विद्यमानाः सन्ति। पारम्परिक पाठ्यक्रमैः सह व्यावसायिकपरक पाठ्यक्रमाणामपि सञ्चालनं विश्वविद्यालयेषु क्रियते। पाण्डुलिपिविज्ञानं, ज्योतिषविज्ञानं, पौरौहित्य कर्मकाण्ड, नाट्यशास्त्रीय पाठ्यक्रमाणामध्ययनं कृत्वा छात्राः आर्थिक्दृष्ट्या आत्मनिर्भराः भवितुं शक्नुवन्ति। यतोहि वर्तमानकालिक विद्या नियुक्तये न तु विमुक्तये।

संस्कृतच्छात्राणां कृते नाट्यकलायां साहित्ये, आयुर्वेदे, सामुद्रिकशास्त्रे, शिल्पकलायां, वास्तुशास्त्रे, अर्थोपार्जनस्य महत्तः सीमानः सन्ति। पारम्परिक-पाठ्यक्रमेऽपि शोधस्य कृते एकस्य विषयस्य चयनं कृत्वा तत्र प्रावीण्यं प्राप्तुं शक्नोति। अद्य विश्वस्य नैकान् पाठ्यक्रमान् संस्कृतेन सह सयोज्य समन्वयात्मकं पाठ्यक्रमं सज्जीकृत्य व्यावसायिकता स्थापयितुं शक्नुमः।

संस्कृतशिक्षायां राजकीयसेवासु उच्चपदस्य सेवायामपि अवसरः वर्तते। आयुर्वेदविषयेऽपि पूर्वं संस्कृतशिक्षायामासीत्। परञ्च अद्य एषः विषयः विज्ञानविषयस्य छात्राणां कृते अस्ति। संस्कृतशिक्षायां आयुर्वेदविषयस्य समावेशः स्यात् येन संस्कृतच्छात्राणां कृते व्यवसायस्य सम्भावना भवेत्। यतोहि संस्कृतच्छात्राः चरकसंहिता, वाग्भट्टस्य अष्टांगहृदयम् इत्यादि ग्रन्थानामध्ययनं कृत्वा चिकित्साशास्त्रे व्यवसायं प्राप्तुं शक्नुवन्ति।

संस्कृतशिक्षायां अध्ययनरताः ये छात्राः सन्ति ते योगशास्त्रस्य अध्ययनं कृत्वा व्यवसायं प्राप्तं कर्तुं शक्नुवन्ति। अष्टांगयोगं स्वजीवनेऽपि धारयित्वा स्वस्य सर्वाङ्गीणविकासं कर्तुं शक्नुवन्ति। संस्कृतशिक्षकः सरलस्वभावः धारयति। सः व्यवसाये समायोजनं कर्तुं शक्नोति तेन छात्राः सारल्येन शिक्षणाधिगमप्रक्रियायां विषयमधिगन्तुं शक्नुवन्ति। संस्कृतशिक्षकस्य व्यक्तित्वं श्रेष्ठः भवति। तस्य व्यक्तित्वे सर्वेषां मनोवैज्ञानिकानां तत्वानां समावेशः भवति। संस्कृतशिक्षण संस्थानेषु निर्देशक

प्रकोष्ठस्य स्थापना स्यात्। तेन संस्कृतशिक्षायां व्यावसायस्य ज्ञानं भविष्यति। हिन्दीभाषायां गीत-रचना-आदिनां संस्कृतानुवादः क्रियेत्। दूरदर्शनमाध्यमेन कार्यक्रमाणां आयोजने संस्कृतगीत-गानं भवेत्। संस्कृतभाषायां दैनिककार्यक्रमाणाम् आयोजनं स्यात्। संस्कृतसंस्थानेषु संस्कृतसप्ताहस्य आयोजनं भवेत्।

अतः निष्कर्षरुपेण वक्तुं शक्नुमः यत् संस्कृतच्छात्राः सन्ति न केवलं कर्मकाण्डवृत्तौ आश्रिताः न च केवलं अध्यापकवृत्तेराश्रिता सन्ति अपितु तेषां कृते विभिन्नाः अवसराः।

**सन्दर्भग्रन्थाः-**

१. डॉ. शर्मा आर ए. डॉ. चतुर्वेदी, शैक्षिक एवं व्यावसायिक निर्देशन तथा परामर्शः
२. संस्कृतशिक्षणम् - रजनीकान्त शुक्ल २००८ राष्ट्रिय संस्कृत विद्यापीठ तिरुपति (आ.प्र.)
३. संस्कृतशिक्षणम् - प्रो. सन्तोष मित्तल
४. अन्तजलिमाध्यमेन

शोधच्छात्रः (शिक्षाशास्त्र-विभागः)
राष्ट्रिय-संस्कृत-संस्थानम जयपुर परिसरः

# शिक्षाशास्त्री पाठ्यक्रमे संस्कृतशिक्षा व्यावसायिकदक्षता च

नितेश भारद्वाज

सम् उपसर्गपूर्वक डुकृञ् करणे धातोः क्त प्रत्यये कृते संस्कृतशब्दः निष्पद्यते। शिक्षा इति शब्दः 'शिक्ष्' 'विद्योपादाने' इति धातोः निष्पन्नोऽस्ति। यस्य च अर्थः भवति 'शिक्षणम्' 'अध्ययनम्' वा। संस्कृतं न केवलं भारतस्य अपितु विश्वस्य प्राचीनतमा भाषा अस्ति। विश्वस्य पुरातनतमो ग्रन्थः ऋग्वेदः संस्कृत-भाषायां लिखितमस्ति। संस्कृतभाषा सर्वासां भाषाणां प्राचीनतमा भाषा अस्ति। प्राक्काले संस्कृत-भाषायाः व्यावहारिकप्रयोगं रामायणे महाभारते इत्यादिषु ग्रन्थेषु दृश्यते।

परञ्च आधुनिककाले यदि वयं पश्यामश्चेत् संस्कृतभाषायाः प्रयोगं बहुन्यूनं दृश्यते। तत्रकारणमस्ति आधुनिकाले जनानां रुचिः संस्कृतं प्रति नास्ति। प्राचीनकाले शिक्षायाः उद्देश्यं आसीत्-"या शिक्षा सा विमुक्तये" अर्थात् शिक्षा मोक्षप्राप्तेः प्रमुखं साधनमासीत्। किन्तु वर्तमानकाले शिक्षायाः उद्देश्यं वर्तते-'या शिक्षा सा नियुक्तये"- अर्थात् वर्तमान समये शिक्षा उद्योग प्राप्तिरेव प्रमुखं साधनं वर्तते।

वर्तमानकाले यदि कोऽपि छात्रः शिक्षां प्राप्नोति तर्हि सः व्यावसायिकपाठ्यक्रमस्य चयनं करोति। यतोहि तस्य समक्षे उद्योगसमस्या भवति। अस्माद् एव कारणात् संस्कृतविषयस्य चयनं वर्तमानकाले छात्राः न कुर्वन्ति। यतोहि-संस्कृत शिक्षायां व्यावसायिकपाठ्यक्रमस्य अभावः दृश्यते किन्तु अन्येषु क्षेत्रेषु बहव्यः पाठ्यक्रमाः संचालिताः सन्ति उद्योग प्राप्त्यर्थम्। छात्राणां रुचिः तत्रैव अस्ति। न तु संस्कृत शिक्षां प्रति। संस्कृत शिक्षां प्राप्य व्यवसायस्य अभावः एव दृश्यते। न्यूनः व्यवसायः सन्ति-तद्यथा-ज्योतिष, कर्मकाण्ड, योग, इत्यादयः। किन्तु शिक्षाशास्त्र क्षेत्रे यदि वयं पश्यामश्चेत् छात्राः शिक्षाशास्त्री कृत्वा उद्योग प्राप्त्यर्थं इतस्ततः भ्रमन्ति किन्तु सर्वेषां छात्राणां कृते उद्योगं न लभ्यते। तत्रकारणमस्ति गुणवत्तायाः अभावः। अतः अनेन कारणेन एव शिक्षाशास्त्र क्षेत्रे पञ्चदशाधिक द्विसहस्रतमे वर्षे एकवर्षीय शिक्षाशास्त्री पाठ्यक्रमस्य स्थाने द्विवर्षीय शिक्षाशास्त्री पाठ्यक्रमस्य आयोजनं कृतम्।

प्राचीनकाले विद्याध्ययनं ज्ञान प्राप्तये मुक्त्ये च क्रियते स्म। परञ्च आधुनिककाले विद्याध्ययनं केवलं उपाधि प्राप्तये। छात्राः उपाधिं तु प्राप्नुवन्ति अद्य परञ्च तेषां कृते ज्ञानं नास्ति। अतः व्यवसाये समस्या आगच्छति। योग्यतासम्पादनस्याभावः वर्तते छात्रेषु। योग्यता भवेत् चेत् व्यवसाये समस्या न आगच्छति। उच्चमाध्यमिकस्तर पर्यन्तं विद्यालयेषु संस्कृतमनिवार्य रुपेण भवेत्। संस्कृत शिक्षायां व्यावसायिक व्यवसायपरक पाठ्यक्रमाणां अभावः।

संस्कृतशिक्षायां व्यावसायिक पाठ्यक्रमाणां सर्जनं भवेत्। तेन व्यावसायिक पाठ्यक्रमाणां अभावः दूरी भविष्यति। संस्कृत शिक्षायां तादृशानां पाठ्यक्रमाणां समावेशः भवेत् येन संस्कृतं प्रति छात्राणां रुचिः उत्पद्येत्।

आयुर्वेदशिक्षायाः माध्यमः संस्कृतं भवेत्। व्यवसायिकपाठ्यक्रमेषु संस्कृतमयवातावरणं निर्मितव्यम्। संस्कृतशिक्षायां न्यून अवधौ पाठ्यक्रमाणणं आयोजनां भवेत्। संस्कृतछात्रेषु आत्मविश्वासस्य अभावः दृश्यते। अतः तेभ्यः प्रोत्साहनवर्धनकार्यक्रमाणाम् आयोजनं कर्तव्यम्।

यथा-वयं जानीमः "सा विद्या या नियुक्तये" इति सिद्धांतः वर्तमानकालिकः वर्तते। अतः छात्रेभ्यः कार्यस्थलस्य व्यवस्था क्रियेत्। संस्कृतक्षेत्रे समाचारपत्राणां प्रकाशनं भवेत्। संस्कृत सम्भाषणशिविरेषु जनसहभागिता वर्धेत्। विभिन्न संस्कृत-संस्थानेषु प्रतियोगितायाः सज्जा छात्रेभ्यः निशुल्करुपेण कारितव्या। संस्कृतशिक्षणसंस्थानेषु निर्देशक प्रकाष्ठस्य स्थापना स्यात्। तेन संस्कृतशिक्षायां व्यवसायस्य ज्ञानं भविष्यति। संस्कृतशिक्षां विज्ञानेन सह सम्बन्धः स्थापनीयः। संस्कृत-माध्यमेन विज्ञापन-प्रसारणं भवेत्। हिन्दी-भाषायां गीतरचना-आदिनां संस्कृतानुवादः क्रियेत्। दूरदर्शनमाध्यमेन कार्यक्रमाणां आयोजने संस्कृतगीतगानं भवेत्। संस्कृतसंस्थाने वाद-विवाद-लेखन-भाषण-शास्त्रस्पर्धा इत्यादीनां आयोजनं भवेत्। संस्कृतक्षेत्रे शासकीय महाविद्यालयेषु संस्थानेषु क्रियान्वयनाय समसामयिक स्थितिं ज्ञातुं संगठनस्य स्थापना कर्तव्या। संस्कृत-भाषायां दैनिककार्यक्रमाणां आयोजनं स्यात्। संस्कृतसंस्थानेषु संस्कृतसप्ताहस्य आयोजनं भवेत्।

**निष्कर्षः**:- संस्कृतशैक्षिकक्षेत्रे व्यावसायिकपाठ्यक्रमाणां सर्जनं कर्तव्यम्। येन छात्रेभ्यः व्यवसायप्राप्तये अवसराः भविष्यन्ति। संस्कृत शिक्षाऽपि व्यवसायमुद्दिश्य प्रदातव्याः।

**सन्दर्भग्रन्थसूची-**

१. संस्कृत शिक्षणम्- रजनीकांत शुक्ल-२००८-राष्टीय संस्कृत विद्यापीठ तिरुपति (आ.प्र.)
२. संस्कृत शिक्षणम् - सांवरमलभूषणा-स्वाति पब्लिकेशन चौडा रास्ता, जयपुर
३. संस्कृत शिक्षणम् - प्रो. संतोष मित्तल
४. शैक्षिक एवं व्यावसायिक निर्देशन- डॉ. शर्मा, आर.ए., डॉ. चतुर्वेदी शिखा च

शोधच्छात्रः (शिक्षाशास्त्रविभागः)
रा.सं.सं. जयपुर परिसरः(राज.)

# छात्राणां भाषाधिगमे संस्कृतशिक्षकस्य भाषादक्षता

कुलदीपपारीकः

जनभावप्रकाशीय, भाषासामर्थ्यदायिनम्।
**सर्वेश्वरं प्रभुं नित्यं, भूयो भूयो नमाम्यहम्॥**

पृथिव्यां बहवः जीवाः सन्ति। प्रत्येकं जीवानां मनसि विभिन्नाः भावाः भवन्ति। मनसि स्थितभावानां प्रकटनं शब्दानां माध्यमेन आभिव्यक्ती भवति। जीवानां शब्दाभिव्यक्तेः तारतम्यदृष्ट्या मानवः श्रेष्ठः मानवस्य श्रेष्टतायाः प्रधानकारणं भवति , तेषां भाषा। मानवाः स्पष्टतया भाषामाध्यमेन सम्यक्तया सूचयितुं शक्नोति। परन्तु मानवेतरजीवाः स्पष्टतया अभिव्यक्तीकर्तुम् अन्येषां कृते सूचयितुं न शक्नुवन्ति। ते विभिन्नशब्दाधारेण किमपि सूचयितुं प्रचेष्टां कुर्वन्ति। तद् शब्दाधरेण अन्ये जीवाः अनुमातुं शक्नुवन्ति, परन्तु ते शब्दोच्चारणेन किं सूचयन्ति तद् निर्दिष्टरूपेण वक्तुं न शक्नुवन्ति। परन्तु मानवाः भाषाधारेण तेषां भावाः स्पष्टतया अन्येषां कृते सूचयन्ति। मानवजीवनस्य अग्रगतेः मूलकारणम् भवति भाषा। भाषायाः योगदानं विना जीवोन्नतिः कदापि न सम्भवति।

**भाषा ( Language )**

भाष्यते अनया इति भाषा। परस्परभावविनिमयाय उपयुक्तं साधनं भवति भाषा। आङ्ग्लभाषायां भाषावाचकं "Language" इति पदम् "Lingua" इति शब्दादुद्भूतम्। ''सीट् वरियस्'' अनुसारं ध्वनिभिः मानवीयविचाराणां बौद्धिकाभिव्यक्तिरेव भाषा। संस्कृतव्याकरणानुसारेण भाषा शब्दो ''भाष व्यक्तायां वाचि'' इत्यस्माद्धातोः ''गुरोश्च हलः'' इति 'अ' प्रत्यये स्त्रियां टापि सति निष्पद्यते। ध्वनिरूपमेव भाषायाः वास्तविक रूपम्। लिखितरूपं तु ध्वनीनां यान्त्रिकविधिमात्रम्। ध्वनिः भाषायाः शरीरं चेत् विचारस्तदात्मेति कथ्यते, द्वाविमौ परस्पराश्रितौ। यथोक्तं कविकुलगुरु कालिदासेन -

**वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वती परमैश्वरौ॥**[१]

अतः रघुवंश महाकाव्यस्य मङ्गलाचरणे वागर्थयोः समन्वयः भाषात्वेन अङ्गीकृतः।

**भाषायाः परिभाषा** (Definition of the Language)

इदमन्धतमः **कृत्स्नं जायेत भूवनत्रयम्।**
**यदि शब्दाह्वयं** ज्योतिरासंसारं **न दीप्यते॥**[२]
**वाग्वै सम्राट् परं ब्रह्म**[3]
**ब्राह्मी तु भारती भाषा** गीर्वाग्वाणी **सरस्वती**[4]

**विचारः आत्मनः मूलभाषा भवति यदि सैव ध्वन्यात्मिका तदा भाषेति अभिधीयते।**[५]

**ध्वन्यात्मक शब्दानां द्वारा हृतभावानामेव विचाराणामभिव्यक्तिरेव भाषा।**[६]

एतैः निर्वचनैः परिभाषायाः स्वरूपमित्थम् अवबुध्यते यत् भाषा नाम मानवोच्चारणावयवैः उच्चारितानां यादृच्छिकवाचिक ध्वनिप्रतीकानां सा संख्यात्मिका व्यवस्था। यथा समाजिकः परस्परं विचारविनिमयं प्रकटयन्ति इति। दण्डिना काव्यादर्शे कथितम्

**यः शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते॥**[७]

**संस्कृतभाषा ( Sanskrit Language )**

सम्यक् कृतं संस्कृतम्। सम् उपसर्गपूर्वकं कृञ् धातोः क्त प्रत्यये कृते सति संस्कृत शब्दोऽयं निष्पन्नः। संस्कृतं नाम परिशुद्धं, व्याकरणदोषरहितं संस्कृतम्। महापुरुषैः शिष्टैः मानवशीलैः विपश्चिद्भिः व्यवहृता भाषा संस्कृतभाषा इत्युच्यते। एवं संस्कृतभाषायाः महत्त्वं स्वयं संस्कृतशब्दः एव व्यनक्ति, वेदानाम् उपनिषदां पुराणानां च भाषा संस्कृतभाषा एव। प्राकृतभाषावशेन संस्कृतभाषायाः मर्यादा कदाचित् क्षीणा जाता। अनन्तरं परिष्कृतम् इति कृत्वा संस्कृतस्य देवभाषात्वविषये विप्रतिपत्तिवतां वादं पुरस्कृत्य भर्तृहरिणा स्वश्लोके एवमुक्तम् –

**देवी वाग्व्यकीर्णैयमशक्तेरभिधातृभिः।**
**अनित्यदर्शिनां तस्मिन्वादे बुद्धि विपर्ययः॥**[८] **इति**

महाभारते एवं श्रूयते –

**अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः॥**[९]

एतद् अतिरिच्य संस्कृतभाषा विषये विभिन्नपण्डितानामभिप्रायाः यथा

राष्ट्रपिता महात्मागान्धिमहोदयानामाशयः– ''इयं भाषा असामान्यभाषा , सर्वभारतीयव्यवहाराणां नैपुण्यतायै संस्कृतभाषा आश्रयणीया इति एक विशिष्ट श्लोकं संस्कृतभाषा विषये –

**भारतेन समोदेशो ब्रह्माण्डे नास्ति कश्चन।**
**संस्कृतेन समाभाषा न भूतो न भविष्यति॥**

''**भाषासु मुख्या मधुरा रम्या गीर्वाणभारती**'' इत्यनेन सुभाषितेन ज्ञायते यत् संस्कृतभाषायाः महत्त्वं कीदृशमिति? इयं भारतीयानां प्रतिष्ठात्मिका, धननिधिः, कामधेनुः समस्तज्ञानाकरा, भारतीयस्यैक्यप्रदात्री, मोक्षप्रदात्री चास्ति। अनयैव भाषया भारतीयानां मुकुटायमानं संस्कृतिः ज्ञातुं शक्यते। संस्कृतभाषायाः महत्त्वं न केवलं भारतीयाः अपितु वैदेशिकाः अपि सश्रद्धया अङ्गीचक्रुः। अतः कविभिरुच्यते–

**मधुरां सरलां दिव्यां देववाणीं च भारतीम्।**
**वेदोपनिषदां भाषां वाङ्मयीं तो भारतीम्॥**
**गीर्वाणवाण्याः सकले सुकाव्यं विवक्षितं काव्यमिषेण हृद्यम्।**
**आखाद्य तत् संस्कृतं भक्तिः पूराः समेधयन्तां रुचिरां रुचिं स्वाम्॥**

संस्कृतभाषा सामान्यजीवनस्य अन्तर्वाहिनी। मानवमस्तिष्के यदा ज्ञानज्योतिरुदभवत् तदारभ्याद्ययावत् याः याः शिक्षाः, यानि यानि ज्ञानविज्ञानानि सन्ति ताः ताः शिक्षाः तानि तानि ज्ञानविज्ञानानि अस्यां भाषायां समुल्लसन्ति। विभिन्नकोणेषु संस्कृतभाषायाः महत्त्वं व्यक्तं भवति। यथा–

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**[10]

एतस्माद्देशात् पृथिव्याः सर्वेऽपि मानवाः शिक्षामगृह्णन्। सर्वगुणसमायुक्ताभाषेयं जगतः आलोकस्वरूपा। दण्डिनापि उक्तम्– **'संस्कृतं हि दैवीवाक् अन्वाख्याता महर्षिभिः'** इति। संसारस्य सर्वासां भाषाणां प्रत्यक्ष परोक्षं वा आश्रयदात्री संस्कृतभाषा मानवसभ्यतोदयकाले एव नित्यया अनया भाषया वेदानुसन्धानपूर्वकं ब्रह्म जिज्ञासापि सञ्जाता। यथोक्तं महाभारते–

**अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥**[११]

संस्कृतं सर्वासामपि भारतीय संस्कृतीनां सर्वेषां संस्काराणाञ्च सुमधुरसन्निधिः संस्कृतं विना संस्कृतेः पृथक् अवस्थानाभावात् अनयोरविनाभावः सम्बन्धः एतत् युगलं भारतस्य प्रतिष्ठात्वेन परिगृह्यते। तथा हि – भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा। सा च संस्कृतिः संस्कृतमेवाश्रयते।

तथा हि "**संस्कृतिः संस्कृताश्रिता**" इति। संस्कृतमेव भरतीयसंस्कृतेः मूलस्रोतः इत्याख्याति श्लोकः एषः–

**संस्कृतं संस्कृतेर्मूलं ज्ञानविज्ञानवारिधिः।**
**वेदतत्त्वार्थसंजुष्टं लोकालोककरं शिवम्॥** इति

आधुनिकैः वैज्ञानिकैरपि विषयोऽयं प्रमाणितः यत् – "**सङ्गणकेऽपि उपयोक्तुमर्हा सर्वोत्कृष्टा भाषा संस्कृतभाषा**" इति। एतस्मात् ज्ञायते यत् संस्कृतं न केवलं देवभाषा पण्डितानां भाषा। अपितु एषा परमवैज्ञानिकी भाषा इति। संस्कृतस्य साम्प्रतिकत्त्वं प्रतिपादयन् Dr. K.S.Kannan महोदयः इत्थमवोचत्– "**संस्कृतनिष्ठाः वैज्ञानिकाः विषयाः केवलं संग्रहालयस्थापनीयद्रव्याणीव सर्वथाकुतुकिजनतोषवहनमात्रमहिमानः इति न सर्वथा मन्तव्यम्। सारवत्तया तेषां भविष्यत्यपिकाले समस्यापरिहारोपयोगितायां नास्ति शङ्का**"[12] इति।

**अधिगमः ( Learning )**

सुशिक्षणेन प्रशिक्षणेन वा जीवस्याधिगमः सञ्जायते। अतः यदाऽधिगमो जायते तदा शिक्षणं सफलं मन्यते। अधिगमो नाम अनुभवेनाभ्यासेन प्रशिक्षणेन वा जीवव्यवहारे जायमानं शाश्वतिकं सापेक्षिकं परिवर्तनमेव। अतः शिक्षणस्योद्देश्यं भवति आधिगमप्राप्तिः। अधिगमः सर्वजीवसाधारणः धर्मः। अतः समाजे सर्वस्मिन् क्षेत्रे प्राप्तुं शक्यते। एवं प्रकारेण अस्य स्थानम् अतीव महत्त्वपूर्णं प्रतिभाति मानवजीवने। क्रियेयं सर्वेषु मानवेषु भवत्येव। परमस्याः सञ्चरण व्यवस्था महत्त्वपूर्णा भवेत्। यतः अस्याः सञ्चरणस्योचिता व्यवस्था यदि न भविष्यति तर्हि अधिगमो नैव भवति। अतः। शिक्षाशास्त्रिणः अस्याः प्रक्रियायाः सम्यक् सञ्चरणार्थं विविधान् शिक्षणविधीन् प्रत्यपादिषुः , तैः शिक्षणविधिभिः उत्तमशिक्षणं प्रदातुं शक्यते। उत्तम सम्प्रेषणञ्च सम्भवति। ततः अधिगमः निष्पद्यते। अतः वस्तुतः मानवः स्वजन्मजातप्रवृत्या वर्तमानवातावरणेन सह समायोजनं संस्थापयितुं। किमप्यध्ययनं करोति। स एव समायोजन प्रक्रिया तत्त्वं वा भवत्यधिगमः इति।

**भाषाधिगमः ( Language Learning )**

लोकेऽस्मिन् अगणनीयभाषा विलसति। तासां कासाञ्चन अपि भाषाणामधिगमे त्रयः घटकाः सन्ति। वक्ता, भाषा, श्रोता च। वक्ता तस्यां भाषायां निपुणः भवति अथवा भाषायाः स्वरूपं प्रयोगञ्च सम्यक् जानाति। वक्ता अयं मनसि निधाय तमर्थ बोधयितुं तन्निश्चितार्थबोधकशब्दं तदुच्चारणानि नियमगतियतिलयपुरस्सरमुच्चरति। उच्चारितध्वनिरूपाः वर्णाः क्रमेण श्रोतुः श्रवणविवरे प्रविशन्ति। श्रवणेन गृहीत क्रमबद्धाः वर्णाः पदरूपाः, वाक्यानि वा बुद्धौ वर्तमानान् स्फोटरूपशब्दान् जागरयन्ति। यद्यपि वर्णानाम् उच्चारणकाले एवं विद्यमानत्वात् क्षणिकत्वात् युगपत् उच्चारणासम्भवाच्च शाब्दबोधः वाक्यबोधो वा न स्यात् इति न। क्रमेणोच्चारितवर्णैः जनितसंस्कारेण अन्तिमवर्णोच्चारणसमकालमेव समग्रभूतः शाब्दबोधः भवति। अयं शब्दः बौद्धस्फुटमुद्बोधयति, तेन शब्दार्थबोधः भवति। त्वरितभाषाधिगमार्थं वक्ता श्रोता च भाषा भिज्ञौ स्याताम्। यदि श्रोता सर्वथा भाषया अपरिचितः तर्हि तस्य शब्दार्थबोधो झटिति न भवति। यथा शिशुः शनैः शनैः मातुः वर्ण परिचयं लभते पश्चात् पदपरिचयम् अनन्तरं वाक्यपरिचयं च प्राप्नोति। एवं क्रमेण कालान्तरेण भाषाधिगमो भवति। एतद् विहाय शिक्षाशास्त्रे भाषाशिक्षण विदैः चत्वारि कौशलानि श्रवण-भाषण-पठन-लेखन रूपाणि (L.S.R.W) क्रमेणैव भाषाशिक्षणे भाषाधिगमे एतेषां पौर्वापर्यमपि मुख्यमाध्यमत्वेन स्वीक्रियन्ते।

आदौ श्रवणम्। अस्मदीया परम्परा श्रुतिपरम्परा इति। ब्रह्मयाः देवनागर्याः अन्यस्याः कस्याश्चिदपि वा लिपेः कल्पनापि यदा नासीत् तदा ज्ञानं श्रवणमाध्यमेन वंशपरम्परया भवति स्म। भाषाधिगमे द्वितीयकौशलं भवति भाषणम्। भाषणं भाषायाः स्वाभाविक विभागः भवति। भाषणं "Speaking and Listening are interrelated Oral Qural Skills. That is the Commu-

nication process involves a speaker and listener." व्यावहारिकरूपेण भाषाधिगमे व्यक्तेः वाचनयोग्यता तथा वाचनार्थ ग्रहणमुपजीवति। "Reading should be started only when the child has been given a through practice in listening and speaking skill." स्वाभिलाषितस्य अभिप्रायस्य वा प्रकाशनाय लिपिमाश्रित्य क्रियमाणः अक्षरविन्यासः एव लेखनम्। लेखनं भाषाधिगम प्रक्रियायाम्। अन्तिमकौशलम् इति। परन्तु शैशवे शिशवः मातुः साक्षात् वाक्याधिगममेव प्राप्नुवन्ति इति भाषावैज्ञानिकाः आमनन्ति। अयं साहजिकः भाषाधिगमक्रमः।

**भाषाधिगमविकासस्य उपायाः**

अधिगमो नाम अभ्यासस्य अनुभवस्य वा व्यवहारे सम्भूतं सापेक्षं शाश्वतिकं परिवर्तनमेव अधिगमः भवति। अर्थात् शब्दान् यदि अभ्यासं करोति प्रायः मरणपर्यन्तं बुद्धौ तिष्ठेयुः तदर्थं शब्दाधिगमविकासस्योपायाः केचन भवन्ति। ते च यथा –

1. **चित्रपठनम्** – किमपि चित्रं प्रदर्श्य तत्सम्बन्धितबहून् प्रश्नान् पृच्छन् शिक्षकः छात्राणां शब्दस्य अभ्यासं कारयति चेत्, बालाः अपि चित्रं दृष्ट्वा परस्परं तद्विषये प्रश्नोत्तरं कर्तुमर्हन्ति।
2. **अभिनयः** – केचन शब्दाः वस्तुनिष्ठा भवन्ति तदानीं तादृशशब्दान् अभिनयसहितं पाठनीयं भवति। तस्य शब्दानुगुणं अभिनयं कृत्वा यदि पाठ्यते तर्हि अधिगमः जायते। तदनु भाषाकौशलविकासोऽपि जायते।
3. **कथाकथनम्** – भाषाशिक्षणे कथानां महत् स्थानमस्ति। श्रवणाभ्यासनिमित्तं शिक्षकः कथाः श्रावयेत्। कथाकथनप्रसङ्गे चित्रमपि दर्शयेत्। एवं चेत् शीघ्रातिशीघ्र शब्दाधिगमं प्राप्नुवन्ति।
4. **सान्दर्भिकथनम्** – शब्दाधिगमविकासाय सर्वोत्तमः उपायः भवति सान्दर्भिककथनम्। छात्रः यदा निरीक्षणं करोति तदानीं सान्दर्भिकभाषणे यत्र कठिनपदानि भवन्ति , तदा तत्र अभिनयसहितं शब्दकथनं भवेत्। सान्दर्भिकभाषणमपि स्पष्टं भवेत्।
5. **पदक्रीडाः** – शब्दाधिगमविकासाय पदक्रीडापद्दतिः एकः उत्तमोपायः भवति। कमपि अक्षरसमूहं दत्त्वा तत्र तदाधारेण पदनिर्माणक्रीडा कार्या। एवमेकेन एकः शब्दः उच्यते तदनु अन्येन अत्यक्षर्याधारेण शब्दः वक्तव्यः। एवमपि शब्दाधिगमः भवितुमर्हति।

एवं प्रकारेण दृश्यश्रव्योपकरणानामाधारेण एवं यादृच्छिकया वा शब्दाधिगमविकासाय अनेक उपायाः भवन्ति। तानुपयान् भाषाशिक्षकः नितराम अभ्यासबलेन छात्राणां भाषाधिगमसन्दर्भे प्रयोगदक्षः स्यात्। अनया दक्षतया अध्यापनव्यवसाये सः शिक्षकः सुप्रतिष्ठितः छात्रजनप्रेयान् भवति।

**संस्कृतशिक्षकस्य स्वरुपम्** –

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वर इति पूज्यो वर्तते। शास्त्रज्ञः गुरुः स्वयं शास्त्राध्येतृणां प्रेरकः स्यात्। तेषां अभिप्रेरणे स्वयं सर्जकः, रक्षकः, ज्ञानप्रदाता च स्यात्। भारतीयसंस्कृतौ गुरोः स्थानं

विशिष्टं वर्तते। गुरुशब्दस्य व्याख्या इत्थं प्रसिद्धा - गिरति अज्ञानान्धकारम् इति गुरुः। सः आचार्य-उपाध्याय-अध्यापकादि नामानि सम्बोध्यते।

शिक्षादार्शनिकेन जॉन लॉक महोदयेनापि उक्तम्- "यथा पादपस्य विकासः कृषिकार्येण भवति, तथैव मानवस्य विकासः शिक्षामाध्यमेन भवति।" अतएव सुशिक्षितश्रेष्ठशिक्षकैः छात्रेषु वाञ्छित व्यवहारगत परिवर्तनं भवति। तेन परिवारस्य, समाजस्य, राष्ट्रस्य च समुचित विकासोऽपि सम्भवः। शिक्षकाणां महत्त्वमयिप्रदर्शयन् कथयति हुमायूँ कबीरमहोदयः "शिक्षापद्धतेः कौशलं शिक्षकाणां। योग्यताया उपरि निर्भरमस्ति, सुशिक्षकाणामभावे सर्वोत्तमशिक्षणपद्धतेरपि साफल्यं नाधिगच्छति। सुशिक्षकाचेद दोषपूर्णाऽपि शिक्षापद्धतिः दोषरहितताममभिप्राप्नोति।"

समाजे शिक्षकाः बहवस्सन्ति परं तेषामपेक्षया संस्कृतशिक्षकाणां कृते दैवीगुणा अत्यावश्यकाः। संस्कृतशिक्षकत्वेन त एव शिक्षकाः अभिप्रेरितास्सन्ति ये सुसंस्कृता भवेयुः। येषां जीवनमूल्यानि उत्कृष्टतमानि, अनुकरणीयानि, समाजस्य कृते पथिप्रदर्शकानि च भवेयुः। समाजस्य व्यवस्थानुगुणं यदि पश्चामश्चेत् संस्कृतशिक्षकत्वेन त एव शिक्षकाः अभिप्रेरितास्सन्ति, ये व्यवसायिक शिक्षक-प्रशिक्षणं प्राप्य अधुना शिक्षणव्यवसायं स्वीकृत्य संस्कृतविषयाध्यापकत्वेन विभिन्नविद्यालयेषु कार्यरतास्सन्ति।

संस्कृतशिक्षके ते सर्वेऽपि शिक्षकसामान्यगुणास्तु अपेक्षितास्सन्ति यान् समाजः अपेक्षते। यथा- आकर्षकं व्यक्तित्वं, शिक्षकोचिता वेशभूषा , उत्तमस्वास्थ्यम्, मधुरभाषिता, कुशाग्रबुद्धिः, संवेगात्मकसंतोलनम्, सामाजिकव्यवहारकुशलता, उत्तमचरित्रम्, दृढसंकल्पः, नेतृत्वक्षमता, स्मेरमुखरता, मित्रता, सहानुभूतिपूर्वकव्यवहारश्चेति।

एतदतिरिक्तं संस्कृतशिक्षके अधोऽङ्किताः विशिष्टदक्षता अपेक्षिताः सन्ति-

- शुद्धोच्चारणम्
- शुद्धः सुन्दरश्च लेखः
- कुशलमौखिकाभिव्यक्तिः
- संस्कृतभाषायां रूचिः
- वैज्ञानिकदृष्टिकोणम्
- नीरक्षीरविवेकी
- प्रशिक्षणप्राप्तः अनुभवी च
- अन्यविषयाणां ज्ञानम्
- सर्जनात्मकता
- कुशलोऽभिनेता

आदर्शशिक्षकस्य स्वरुपस्य विषये मालविकाग्निमित्रे कविकुलगुरुकालिदासेनापि भणितम्-

**शिलष्टाक्रिया कस्यचिदात्मसंस्था, संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु च शिक्षकाणां, धुरी प्रतिष्ठापयितव्य एव॥ मा०अ० १/१६**

अतः छात्राणां भाषाधिगमविकासः एव भाषाशिक्षकस्य प्रधानः व्यवसायः। अस्मिन् व्यवसाये शिक्षकस्य भाषाक्षमता मुख्या। तत्रापि छात्रजनचिताकर्षणपरं सम्प्रेषणं मुख्यम्।

**सन्दर्भः ग्रन्थसूची–**

1. दण्डी, काव्यदर्शः।
2. पतञ्जलिः, वाक्यपदीयम्।
3. मिश्रः लोकमान्य, पुरातनी शिक्षा।
4. कुमारः कृष्ण, प्राचीन भारत की शिक्षा प्रणाली।
5. मित्तलः संतोष, संस्कृतशिक्षणम्।
6. उपाध्यायः बलदेव, संस्कृत साहित्य का इतिहास।
7. द्विवेदी कपिल, भाषाविज्ञान एवं भाषाशास्त्र।
8. द्विवेदी कपिल, वैदिक साहित्य एवं संस्कृतिः।
9. www.google.com
10. Wikipidia

**सन्दर्भः–**

1. कालिदासः, रघुवंशम् १.१
2. दण्डी, काव्यादर्शः
3. बृहदारण्यकोपनिषद्
4. अमरसिंहः
5. Plato, Philosopher
6. Rae Gun, Philosopher
7. दण्डी, काव्यादर्शः
8. भर्तृहरिः
9. महाभारतम्, शान्तिपर्वः 231/59
10. कृष्ण कुमार शर्मा, प्राचीन भारत की शिक्षण प्रणाली।
11. महाभारतम्, शान्तिपर्वः
12. Dr.K.S.Kannan
13. संतोष मित्तल, संस्कृतशिक्षणम्

**शोधच्छात्रः**
राष्ट्रियसंस्कृतसंस्थानम्,
जयपुरपरिसरः, जयपुरम्।

# शिक्षकाणां व्यावसायिकदक्षतायाः संवर्धने खण्डचित्रबन्धानां भूमिका

अमृताकौर

अद्य भव्यभारतेऽस्मिन् राष्ट्ररक्षणार्थं यावन्तः सैनिकाः सर्वकारेण नियुक्ताः सन्ति ततोप्यधिकसंख्याकाः शिक्षकाः छात्ररक्षार्थं तेनैव सर्वकारेण नियुक्ताः सन्ति। सत्स्वपि बहुषु शिक्षकेषु गुणवत्ता अद्यापि गगनकुसुमायते। शिक्षाक्षेत्रे गुणवत्तायाः ह्रासे अनल्पानि कारणानि सन्तीति अनेन सिद्धम्। शिक्षकाणां व्यावसायिकदक्षतायां परिदृश्यमानः ह्रास अपि अत्र प्रधानं कारणं वर्तते। शिक्षाक्षेत्रस्य समुद्धाराय कोटिशः रुप्यकाणि प्रतिवर्षं सर्वकारः व्ययीकरोति, परन्तु निर्दिष्टं फलं निर्दिष्टः विकासो वा अद्यावधि नैव जातः इत्येतत् कठोरं सत्यमेव। अतः शिक्षाप्रदातृणां शिक्षकाणां व्यावसायिकदक्षतायाः उपरि सन्देहः नूनं समुत्पद्यते।

सामान्यतः शिक्षकाः शिक्षणाय पौराणिकपरम्परामेवानुसरन्ति। पाठ्यपुस्तकमेव शिक्षणस्य अद्वितीयं साधनमिति ते चिन्तयति। यथा वा वयं शिक्षिताः तथैव अस्माकमपि छात्राः शिक्षणीया इति तेषामभिमतम्। परन्तु "पुराणमित्येव न साधु सर्वम्" इतीदं कालिदासीयं वाक्यम् संस्मर्तव्यम्। देशकालपरिस्थित्यनुरूपं समसामयिक शिक्षणमेव आधुनिकयुगे निवसद्भिः शिक्षकैः देयम्। आधुनिकबालानाम् आकाङ्क्षाः समानाः एकरूपाः वा न भवन्तीत्यतः बालान् शिक्षयितुं सर्वेभ्यः नियुक्तेभ्यः सुस्थिरपदभूषितेभ्यश्च शिक्षकेभ्यः सेवाकालिकं प्रशिक्षणमवश्यं देयम्। तत्र च नवाचाराणां प्रशिक्षणमपि अवश्यमेव स्यात्।

पाठ्यपुस्तककेन्द्रितशिक्षणस्य यावन्तः गुणाः सन्ति तावन्तः एव दोषा अपि सन्ति। सर्वदा पुस्तकस्था विद्या जीवनोपयोगिनी समाजोपयोगिनी च भवितुं नार्हति। अतः पाठ्यपुस्तकस्य स्थानापन्नामपि संसाधनानां विषये ध्यानं देयमेव अन्यथा शिक्षणं नीरसं शुष्कमिव भासेत। किञ्च छात्रा अपि परम्परागतशिक्षणेन एकरूपशिक्षणेन वा अवश्यं विमुखाः जायन्ते।

शिक्षणं चित्ताकर्षकं सम्पादयितुं खण्डचित्रबन्धाः पदबन्धाः कूटबन्धाश्च नूनमुपकुर्वन्ति। एतेषां माध्यमेन शिक्षणमपि सरलं सरसञ्च भविष्यति। किञ्च एतादृशेषु सन्दर्भेषु छात्राः आत्मबलेन अधिगच्छन्ति। अधिगतविचाराः चिरकालं चित्ते अवतिष्ठन्ते। खण्डचित्रबन्धानां परिपूर्त्यवसरे समस्यासमाधानविधिः, गवेषणाविधिः इत्यादयः नव्याः विधयः प्रयुज्यन्ते बालैः। शिक्षकस्यापेक्षया बालानामेव कार्यमत्र अधिकमित्यतः एतादृशशिक्षणस्य फलान्यपि अनन्तानि लभन्ते ॥

1760 तमे वर्षे यूरोपदेशस्य निवासी ज़ॉन स्पिल्सबरिमहोदयः यः मानचित्रनिर्माता आसीत्

सः सर्वप्रथमं चित्रखण्डबन्धस्य (Jigsaw) निर्माणम् अकरोत्। चित्रखण्डबन्धस्य (Jigsaw) निर्माणं एकं सामान्यचित्रं लघु-लघुखण्डे विभाज्य क्रियते। एकस्मिन् विशिष्टचित्रे एकैकं खण्डं योजयित्वा चित्रखण्डबन्धं निर्मीयते।





अस्य चित्रखण्डबन्धस्य लघु-लघुखण्डाः यथा शाखाचित्रखण्डाः (Loops), योजकखण्डाः (Sockets), योज्यखण्डाः (Knobs) छिद्रखण्डाः (Hole), रिक्तखण्डाः (Tabs), चिह्नखण्डाः (Slots), कुञ्चिकाखण्डः (Keys) तालखण्डाः (Locks) इत्यादयः।

अतः जिग्स इत्यस्य अर्थः खण्डशः विभक्तचित्रं मन्यते। 1963 तमे वर्षे युनाइटेड किंगडमदेशस्य राष्ट्रिय-आत्मकेन्द्रित-संस्था स्वप्रतीकचिह्नत्वेन चित्रखण्डबन्धस्य प्रयोगमकरोत्। चित्रखण्डबन्धस्य बहवः भेदाः सन्ति अत्र केचन प्रमुखाः भेदास्सन्ति यथा-

- द्वि-आयामीचित्रखण्डबन्धः (Flat 2 Dimensional Jigsaw Puzzles)
- कठिनचित्रखण्डबन्धः (Difficult Jigsaw Puzzles)
- शैक्षिकचित्रखण्डबन्धः (Educational Jigsaw Puzzles)
- त्रि-आयामीचित्रखण्डबन्धः (3×D Puzzles)
- रहस्यात्मकचित्रखण्डबन्धः (Murder Mystery Puzzles)
- विपरितक्रमचित्रखण्डबन्धः(Wasgij Jigsaw Puzzles)
- काष्ठनिर्मितचित्रखण्डबन्धः (Wooden Jigsaw Puzzles)
- बृहत्खण्डचित्रखण्डबन्धः (Large Piece Jigsaw Puzzles)

खण्डशः विभक्तानां चित्राणां बन्धः समूहो वा खण्डचित्रबन्ध इत्युच्यते। अस्मिन् बन्धे निर्दिष्टः विषयः ज्ञानांशो वा खण्डशः विभक्तः सन् छात्रान् अधिगमार्थं प्रचोदयति। एतेषां निर्माणे प्रयोगे च शिक्षकस्य प्राथमिकज्ञानम् अनिवार्यम्। कुशलेन प्रशिक्षितेन व्यावसायिकक्षेत्रे च कृतपरिश्रमेणैव शिक्षकेणैव एतादृशस्य चित्रखण्डबन्धस्य निर्माणं शक्यते नान्यैः।

खण्डचित्रबन्धस्य अनुप्रयोगार्थं कौशलत्रयमनिवार्यम्। शारीरिककौशलम्, संज्ञानात्मककौशलम्, सांवेगिककौशलमिति कौशलत्रयं वर्तते। क्रमशः यथा-

शारीरिककौशलम् (Physical Skils)- खण्डशः विभक्तानां चित्राणां ग्रहणम्, परीक्षणम्, संयोजनम् इत्यादिकं चातुर्यमूलं वर्तते। एतादृशबन्धस्य प्रयोगेण छात्राणां शारीरिककौशलं समभिवर्धते।

संज्ञानात्मककौशलम् (Cognitive Skill)- विकीर्णानां चित्राकारकाणां ज्ञानखण्डानां योजनेन छात्राणां संज्ञानात्मककौशलस्य विकासः भविष्यति। चित्रखण्डबन्धः समस्यासमाधानपरः वर्तते।

सांवेगिककौशलम् (Emotional Skill)- शिक्षणं कौतुकपूर्णं रुचियुक्तञ्च भविष्यति चित्रखण्डबन्धस्य परिपूरणावसरे सावधानाः तत्पराः छात्राः एव चित्रखण्डबन्धं पूरयितुं शक्नुवन्ति। चित्रखण्डबन्धस्य पूर्णात्परं छात्रेभ्यः प्रतिपुष्टौ पारितोषिकं धनात्मकपुनर्बलनञ्च लभ्यते। अतः ते सन्तुष्टाः सन्तः आत्मानं धन्यं मन्वते। एवं शारीरिकसंज्ञानात्मकश्चेति पक्षत्रयस्य युगपदेव यथा अत्र अवसरः लभ्यते न तथा कक्ष्याशिक्षणे पाठ्यपुस्तककेन्द्रितशिक्षणे च। अतः शिक्षकाः स्वीये व्यावसायिकक्षेत्रे नवाचारानयनार्थम् एतादृशान् प्रयासान् कुर्युः। केवलं प्रवचनेन व्याख्यनेन कण्ठशोषणं भविष्यति। नान्यत् किमपि प्रयोजनं तत्र सिध्यति। शिक्षणं बहुमुखं स्यात् न एकमुखम्। अतः शिक्षकाः नव्यानुपक्रममनुसरन्तः स्वीये व्यावसायिकक्षेत्रे साफल्यं प्राप्नुयुः।

अद्यत्वे कृत्वा अधिगमः (Learning by doing), अनुभवेन अधिगमः (Learning by Experience) , क्रीडया अधिगमः Learning by Playing, प्रयोगं कृत्वा अधिगमः Learning by Experiment, निरीक्षणेन अधिगमः Learning by Observation इत्यादयः विचाराः प्राथम्यमर्हन्ति। इत्थं खण्डचित्रबन्धानां प्रयोगेण एतत्सर्वं भवितुमर्हति। किञ्च शिक्षकाणां व्यावसायिकदक्षता एतादृशैः प्रयासैः नूनमभिवर्धतेतमामिति शिवम्।

**परिशीलितान्तर्जालपुटानि**


- httpsÑ//www.jigsaw.org/ www.adlit.org/strategies/wwx|v/
- httpsÑ//www.nwmissouri.edu/education/peu/pdf/studentteach/mopta/TaskxDefinitio n.pdf
- www.teachhub.com/jigsaw-method-teaching-strategy
- www.readingrockets.org/strategies/jigsaw\
- httpsÑ//itali.ug.edu.au/files/x®||/Resources-teaching-methods-jigsawtechnique.pdf
- www.theteachertoolkit.com/index.php/tool/iigsaw



शोधच्छात्रा शिक्षाशास्त्रविभाग

राष्ट्रियसंस्कृतसंस्थानम्

जयपुरपरिसरः जयपुरम्

# ज्योतिर्विदः संस्कृतशिक्षकः कुण्डली निर्माणदक्षता च

रामेश्वरः

प्राचीनभारतीयसनातनपरमपरायां गुरुकुलपद्धत्या न मात्राध्ययनाध्यापनं भवति स्म अपितु गुरुकुलेषु व्यक्तित्वनिर्माणशैल्या चारव्यवहारश्च सर्वाङ्गीणविकासायापि तत्र प्रयासाः भवन्ति स्म अतः मात्र ग्रन्थस्यस्याध्ययनमेव शिक्षा न भवति शिक्षासंग्रहे कथितं यत्

[1]शिक्षयति या सा शिक्षा शक्तुं शक्तो भवितुमिच्छा शिक्षा इति द्वे व्युत्पती शिक्षाशब्दस्य प्रदर्शिते।

कस्यापि ग्रन्थस्याध्ययनात्पूर्वं व्याकरणशास्त्राध्ययनं मूलरूपं भवति अतः कस्यापि ग्रन्थस्यान्यशास्त्रेषु च गतिर्मूलं व्याकरणं यथोक्तं सिद्धान्तशिरोमणौ भास्कराचार्येण

**[2]यो वेद वेदवदनं सदनं हि सम्यग्ब्राह्मयाः सवेदमपि वेद किमन्यशास्त्रम्।**
**यस्मादतः प्रथममेतदधीत्य धीमान् शास्त्रान्तरस्य भवति श्रवणेऽधिकारी।।**

पुनश्च व्याकरणाध्ययनान्तरं षड्वेदाङ्गानांमध्ययनेन व्यक्तेः सर्वविधगुणानां पोषणं भवति स्म, अद्यत्वेऽपि यस्य पार्श्वे प्रायः सर्वेषां प्रश्नानामुत्तरं स्यात् सः सर्वशास्त्रविशारदः निष्णातश्च ज्ञायते गुणोऽयं सर्वांङ्गीणविकासस्य परिणामो भवत्येव यथोक्तं पाणिनीयशिक्षायाम्

**[3]छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते**
**ज्योतिषामयनं चक्षुः निरुक्तं क्षोत्रमुच्यते**
**शिक्षा तु घ्राणं वेदस्य मुखं व्याकरणं स्मृतम्**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते**

श्लोकेऽस्मिन् वेदाङ्गानामध्ययनस्य महात्म्यं

**वणितं महर्षि पाणिनिना**

अतः संस्कृतशिक्षकस्य कृते एतदावश्यकमस्ति यत् प्रायः सर्वेषां शास्त्राणां परिचयः मौलिकं ज्ञानं च तस्य मनसि बुद्धौ वा भवेत् तेन योग्यताविकासः सततं भवति

**स्वविषयस्य ज्ञानंः**- किमप्यध्ययनाय मुख्यतः अध्येतुः सुदृढःस्वास्थ्यः तस्यान्तरिकीं श्रद्धां पुस्तकं लेखनोपकरणं च अनुकूलपरिवेशमापेक्षते अतः श्रीमद्भगवद्गीतायामपि वणितं यत्

**[4]श्रद्धावान् लभते ज्ञानं तत्पर संयतेन्द्रियः**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति**

पुनश्च भिन्न-भिन्नशास्त्रेषवध्ययनेन कश्चिद् विषयः तादृशोऽपि भवति यस्मिन् रुचे अधिकता भवति पुनश्च गतिश्च मतिश्चाधिक्येन भवति अन्यशास्त्राणामपेक्षया तस्मिन्नैव विषये

परिश्रममधिकमपेक्षते यतो हि तस्य विषयस्य कण्ठस्थीकरणं पुनश्चाद्योपान्तं तस्याध्ययनं तेनैव स्व विषये योग्यतांदक्षता च भवति।

आधुनिककाले भिन्न भिन्न संस्थानेषु विश्वविद्यालयेषु च पाठ्यक्रमानुसारं कक्षासु यद्किमपि पठनपाठनं भवति तदानुसारं कक्षायां शिक्षक आगच्छति पाठयति चानेन छात्रेभ्यः विषयविशेषस्य सामान्यज्ञानं भवति प्रत्येकस्य छात्रस्य कृते विषयविशेषस्य ज्ञानं कक्षायां तु प्राथमिकतया सामान्येन ग्रहणीयं भवति तेन ज्ञानेन छात्राणां विषये प्रवेशः भवति।

**स्वविषये वैशिष्ट्यम्**- सामान्य ज्ञानान्तरं यदि कश्चिद् छात्रः प्राप्तस्य ज्ञानस्य वृद्धि निमित्तं प्रयासः करोत्यथवा स्वविषये वैशिष्ट्यं वाञ्छति तदा समयानुकूले सति तस्य विषयस्याचार्यस्य पार्श्वे गत्वा स्व विषयस्यप्रश्नसूत्री तत्र स्थापनीयां भवत्युत्तरं प्राप्य पुनः विशेषज्ञै परामर्शैः स अनुभवेनापि बहुकिमप्याचरति पठति च द्वयोः विधयोः मौलिकमन्तरं भवति यत् पाठ्यक्रमानुसारं सामान्यज्ञानं निमित्तं माचार्य आगच्छति पाठयति च कक्षायां परञ्च च स्वविषये वैशिष्ट्यं निमित्तं छात्रः गच्छत्याचार्यस्य पार्श्वे पठति च

**स्वविषये दक्षता कथं भवेत्**- प्रश्नोऽयं मनोवैज्ञानिकमूलविषयेषु कश्चिदेकः स्वविषये दक्षता निमित्तं तत्र शास्त्रे रूचिः निश्चितरूपेण मूलरुपा भवति। स्व विषयस्या अध्ययनमेव तु आवश्यकमेव परञ्च किमपि विशेषः कर्तुं स्वव्यक्तित्वनिर्माणस्यावश्यकता भवति तत्र स्वदिनचर्यायांमथवा जीवनचर्यायां परिवर्तनमावश्यकं भवति पुनश्च वयं सर्वे संस्कृतजगतः छात्राः अतः शास्त्रीया उपचाराः प्राथमिकतया करणीयाः यथा ब्रह्ममुहूर्ते जागरणं योगव्यायामप्राणायामध्यानत्राटकीत्यादिभिः विधिभिः स्वजीवने सकासरात्मकं परिवर्तनं भविष्यन्ति निश्चयेन एव।

**कुण्डलीनिर्माणदक्षता व्यवसाय च**- यतो हि अहं ज्योतिष विषयस्य छात्रोऽस्मि अतः कुण्डली निर्माणे का का योग्यता आपेक्षिता वर्तते तद्विषये किञ्चिद् चिन्तनं कृतम् गणकैर ङ्कविधायां कौशलं मूलं रुपं यतोह्यङ्केषु विभिन्नाः गतयः भवन्ति। यथा योगः वियोगश्च, गुणनं विभाजनंचान्याः इतोऽपि भवन्ति परञ्च कुण्डली निर्माणे सर्वप्रथमं इष्टकालं कथमानयनं क्रीयते स्तरोऽयं प्राथमिको वर्तते तदनन्तरं 'लग्नस्पष्टं कृत्वा सूर्यादिनवग्रहाणां स्पष्टीकरणं करणीयं भवत्यस्मिन् कार्ये गणितस्य प्रपञ्च साधयितुं भवति महान् क्लेशः परञ्च सतताभ्यासेनानन्तरं सरलतां भवति पुनश्च विषयोऽयं व्यवसायिक दृष्ट्याऽपि महत्वपूर्णोऽस्ति प्रायः सर्वे ज्योतिषज्ञाः कुण्डली निमार्णे न सक्षमाः भवन्ति योग्यज्योतिषाचार्यः गणकः वा एव कुण्डली निर्माणे समर्थो भवति।

अद्यत्वेऽपि प्रायः केञ्चन् ज्योतिषाचार्याः स्वतन्त्र रुपेण निजिकार्यालयेषु स्व स्व ज्योतिषकर्मणि संलग्नाः पुनः धनोपार्जनाय समाजकल्याणाय च प्रयासाः कुर्वन्ति एतदतिरिक्तं गतमासे एव त्रयोदश (१३।०२।२०१९) दिनाङ्के राजस्थानपत्रिका समाचारपत्रे कश्चिद् समाचारः आसीत् यत् राजस्थान

सर्वकारेण प्रयासः क्रियते यत् प्रत्येक सर्वकारी-चिकित्सालयेषु ज्योतिषाचार्या अपि भविष्यन्ति चिकित्सालयेषु प्रसूती कक्षेषु यावनां शिशूतां जन्मः भविष्यन्ति तेषां सर्वेषां शिशूनां जन्मकुण्डलीनिर्माणं चिकित्सालये एव भविष्यति अर्थात् ज्योतिषाचार्याणां कृते तत्रापिऽस्ति व्यवसायिकोवसरः। इति।

**संदर्भः –**


१. शिक्षासंग्रहः (आचार्य श्री रामप्रसाद त्रिपाठी सम्पू. विश्व.वि.) पृष्ठ-२

२. सिद्धान्तशिरोमणि, गो.प्र.श्लो.८

३. पाणिनीय शिक्षा खण्ड ८ श्लो.४०

४. श्रीमद्भगवद्गीता अध्याय ४, श्लो. ३९

५. भारतीय कुण्डली विज्ञान, कुण्डली प्रकरणम्



शोधच्छात्रः

ज्योतिषविभागः,

जयपुरपरिसरः, जयपुरम्

# संस्कृतशिक्षकः कक्षाप्रबन्धनञ्च

सुमन

**संस्कृतशिक्षकः**

समाजे अद्यापि संस्कृतशिक्षकस्य प्रतिष्ठा अक्षुण्णा अस्ति। समाजं प्रति संस्कृतशिक्षकस्य दायित्वं महत्वपूर्णमस्ति। अद्यापि उत्तमशिक्षकः सर्वेषु ईश्वरसमं भव इत्युक्त्वा समाजे आचार्यस्य गौरवपूर्णं स्थानं सूचयति। शतपथब्राह्मणे-'मातृवान् पितृवान् आचार्यवान्पुरुषो वेद इत्युक्तम्।

प्राचीनकाले गुरुः यथा वदति स्म तथैव आचरति स्म। तस्य त्यागपूर्णेन आदर्शपूर्णेन च जीवनेन सर्वे प्रभाविताः आसन्। तस्य जीवनम् अनुकरणयोग्यमासीत्। अत एव समाजे सः प्रतिष्ठातिशयस्य अधिकारी आसीत्।

बन्धुविहीनानां गुरु एव बन्धुः। अन्धानां यथार्थज्ञान-प्रदर्शकः गुरुः एव। ये न्यायमार्गे प्रचलन्ति तेषां माता, पिता, गुरुः एव। यथा-

**''गुरुर्बन्धुरबन्धूनां गुरुश्चक्षुरचक्षुषाम्।
गुरुः पिता च माता च सर्वेषां न्यायवर्तिनाम्।।''**

**''त्वमेव माता च पिता त्वमेव,
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव।
त्वमेव सर्वं मम देव देव।।''**

**संस्कृत-शिक्षकस्य गुणाः-**

(१) संस्कृतभाषायां दक्षता
(२) संस्कृतसाहित्यस्य ज्ञानम्
(३) सांस्कृतिकचेतना
(४) व्याकरणनियमानां ज्ञानम्
(५) कुशलसम्प्रेषकः
(६) कुशलः अभिप्रेरकः
(७) नूतनविधीनां ज्ञानम्
(८) वैज्ञानिकदृष्टिः
(९) कुशलाभिनेता
(१०) सर्जनात्मकता
(११) संस्कृतस्य प्रचारप्रसारेऽभिरुचिः।

**संस्कृताध्यापकस्य योग्यता-**

(१) भाषाप्रयोगनिपुणता
(२) शास्त्रीयविमर्शविचक्षणता
(३) रसास्वादनशक्तिसम्पन्नता

**विश्वविद्यालयानुदानायोगः शिक्षकस्य नव लक्षणानि** प्रत्यपादयत्-

(१) शुचिः - बाह्यशुचिः अन्तश्शुचिः

(२) वाचस्वी-वाचस्वी अध्यापकानाम् अयं गुणः अत्युच्चगुणः वर्तते। स्वाभिप्रायप्रकटने समर्थः भवेत्।

(३) वर्चस्वी- वर्चस्वी आकर्षणशक्तिः भवति यया छात्रान् अध्यापकः स्वगुणैः प्रभावयति प्रेरयति च।

(४) धृतिमान्- अध्यापकस्य मानसिकधैर्यम् अत्यन्तम् आवश्यकम्।

(५) स्मृतिवान्- स्मरणशक्तिमान्

(६) कृतिकः:- इति अभिप्रायः सम्यक् लेखनसामर्थ्यम् उपयोगानुसारं लेखनम्। अयं गुणः श्यामफलकलेखन निर्वहणम् इत्युच्यते।

(७) नम्रता - विनयस्वभावः-

**"विद्या ददाति विनयं विनयाद् याति पात्रताम्।**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मः ततस्सुखम्।।"**

(८) उत्साही - अध्यापकः सर्वदा सक्रियः भवेत्।

(९) जिज्ञासु - यावज्जीवितमधीते विप्रः।

**संस्कृतशिक्षकस्य कर्त्तव्यानि-**

(१) संस्कृतशिक्षकः संस्कृतभाषायाः ज्ञाता भवेत्।

(२) संस्कृतशिक्षकः संस्कृतसाहित्यस्य ज्ञाता भवेत्।

(३) संस्कृतशिक्षकः संस्कृतभाषाशिक्षणस्य नवीनतमविधीनां ज्ञाता भवेत्।

(४) संस्कृतशिक्षकः संस्कृतसाहित्यं प्रति अभिप्रेरको भवेत्।

(५) संस्कृतशिक्षकः पाठ्यक्रमस्य समुचितविभाजको भवेत्।

(६) संस्कृतशिक्षकः व्याकरणस्य ज्ञाता भवेत्।

**शिक्षकस्य सामान्यगुणाः-**

(क) आकर्षकव्यक्तित्वम्

(ख) शिक्षकोचिता वेशभूषा

(ग) उत्तमस्वास्थ्यम्

(घ) कुशाग्रबुद्धिः

(ङ) संस्कृतभाषां प्रति रुचिः

(च) प्रशिक्षणप्राप्तः अनुभवी च

(छ) सर्जनात्मकः

## कक्षाप्रबन्धनञ्च

कक्षाप्रबन्धनं कक्षाप्रबन्धनं मुख्यतः ताभिः व्यवस्थाभिः सम्बद्धं भवति याः निर्धारितोद्देश्यानां प्राप्तौ साहाय्यं कुर्वन्ति। अस्यान्तर्गततया भौतिकानां मानवीय-तत्वानाञ्च साहय्यप्राप्त्यर्थं व्यवस्था क्रियते। यदि कस्यचन एकस्य विद्यालयस्य संस्थापनं क्रियते तर्हि स्थानं, वातावरणं, जलं, भवनम्, काष्ठोपकरणानि, शैक्षिकसज्जाकरणं शिक्षकाणां इतरकर्मराणाञ्च प्रबन्धनमावश्यकं वर्तते। तथा अभीष्टसाहाय्यप्राप्तये एतादृशतत्त्वानां सुव्यवस्था-आवश्यकी वर्तते यथा-शिक्षायै चरित्र-निर्माणस्य-उद्देश्यम्वाप्तुं विद्यालये यपाठ्यसहगामिक्रियाणां, नैतिकवातावरणस्य, सामाजिकक्रियाणाञ्च सङ्घटनमेव कर्त्तव्यं भवति येन बालकानां चारित्रिकविकासो सम्यग्दिशायां स्यात्।

**कक्षाप्रबन्धनस्योद्देश्यानि-**

शिक्षा मानवस्यान्तर्निहितशक्तीनां विकासं करोति। शिक्षया एव बालकस्य मूलप्रवृत्तीनामुपयोगः रुचीनां प्रकाशनञ्च क्रियते। बालकस्य कृते शैक्षिकं वातावरणं विद्यालयेष्वेव भवितुमर्हति। अतः विद्यालयानां स्थापनस्य महदुद्देश्यं बालकानां सर्वाङ्गिकविकासो वर्तते।

**कक्षाप्रबन्धनस्य सिद्धान्ताः-**

(१) बालकेन्द्रितम्

(२) समाजकेन्द्रितम्

(३) लोकतन्त्रीयसिद्धान्तः

(४) उपलब्धसाधनानाम-अधिकाधिक-उपयोगस्य सिद्धान्तः

(५) नमनीयत्वस्य सिद्धान्तः।

शिक्षाचार्यच्छात्राः

# पञ्चतन्त्रस्थशैक्षिकतत्त्वानाम् अनुप्रयोगे संस्कृतशिक्षकस्य कौशलम्

स्नेहलता

सर्वैरपि प्राच्यपाश्चात्त्यविद्वद्भिः 'विश्वस्य आदिमः ग्रन्थः ऋग्वेदः' इति मुक्तकण्ठेन उच्यते। अनेन च इदमेव सिद्ध्यति यत् समग्रविश्वस्य ज्ञानधारायाः पुरोधाराः भारतीयाः महर्षय एव आसन्। अत एवोच्यते मनुनापि–

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनाम्।**
**स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**[1] इति।

साम्प्रतिकयुगे हि भारतीयज्ञानपरम्परायाः प्रसारस्य क्रमः विखण्डितः दृश्यते अत एव विश्वे समुत्पन्नानां सर्वासामपि समस्यानां प्रमुख कारणम् 'उत्तमशिक्षायाः उत्तमशिक्षकानाञ्च अभावः' इति समग्रमपि विश्वं चिन्ताकुलतया वदति। अतः उत्तमोत्तमशिक्षणव्यवस्थां व्यवस्थापयितुम् अपि सुमहान् प्रयासः विधीयमानः दृश्यते। तथापि चरित्रवतः आदर्शभूतस्य विविधकौशलसम्पन्नानां शिक्षकाणां निर्माणे साफल्यं न दृश्यते। त्यागशीलानाम् उत्तमोत्तमशिक्षकानां शिक्षणव्यवस्थायाः ज्ञानस्य च प्रसारकारणादेव खलु भारतं विश्वगुरुरूपेण आमनन्ति सर्वे। अतः सम्प्रत्यपि सा आशापूर्णदृष्टिः भारते आपतिता दृश्यते। भारतीयाश्च बहवो हि आध्यात्मिकगुरवः समग्रे विश्वे ख्यातनामानः जाताः वर्तन्ते। किञ्च भारतीयज्ञानपरम्परायाः प्रसारः पुनरेकवारं जायमानः दृश्यते।

भारतीयज्ञानपरम्परायाम् अनुपमः ग्रन्थः वर्तते पञ्चतन्त्रम्। यद्धि संस्कृतभाषायां रचितेषु कथाग्रन्थेषु अपि अद्वितीयं स्थानं भजते। अस्य ग्रन्थस्य प्रचारः न केवलं भारते वर्तते अपितु वैदेशिकैरपि अस्य महन्महत्त्वम् अङ्गीकृतमस्ति। नैकेषु क्षेत्रेषु नैकविधप्रकारेण च वयं पञ्चतन्त्रस्य महत्त्वं द्रष्टुं शक्नुमः। अस्य च लोकप्रियता न केवलं प्राचीनता-सरलता-उपदेशकुशलता-मनोरञ्जकतादिभिः नैकैः कारणैः वर्तते, अपि तु शिक्षा, शिक्षकगुणाः, छात्रकर्तव्यानि, पाठ्यक्रमः इत्यादिविषयाणां विस्तरेण अत्र विवेचनमस्ति। तद्यथा–

का नाम शिक्षा किमर्थञ्च सा दातव्या इति विष्णुशर्मणा सिंहवृषशृगालककथायां दमनक करकटकयोः वार्तालापसन्दर्भे सुनिरूपितं पञ्चतन्त्रे। तद्यथा–

**यज्जीव्यते क्षणमपि प्रथितं मनुष्यै विज्ञानशौर्याविभवार्यगुणैः समेतम्।**
**तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः काकोपि जीवति चिराय बलिञ्च भुङ्क्ते॥**

केवलमुदरपूर्त्यर्थं ये जीवन्ति तेषां जीवनं व्यर्थमेव। किन्तु यस्य जीवनेन समाजस्य हितं स्यात्

तस्य एव मनुजस्य जीवनं सार्थकं भवति। इमे च गुणाः शिक्षया एव समुद्भवन्ति। तस्मात् शिक्षायाः विशिष्टां परिभाषां न्यरूपयत् विष्णुशर्मा पञ्चतन्त्रे।

वंशानुक्रमविषयकमनोवैज्ञानिकसिद्धान्तविषये बहुधा चर्चा शिक्षाजगति भवति। जन्मना कश्चन बालकः गुणी न भवति अपितु वातावरणप्रभावेण क्रमशः आसादितगुणैरेव सः विख्यातः भवति इति वदति शिक्षामनोविज्ञानाङ्गभूतः व्यवहारवादः। अमुं सिद्धान्तं श्लोकमाध्यमेन पुराकाले एव पञ्चतन्त्रे प्रकृतेः विविधोदाहरणपुरस्सरम् अवादीत् विष्णुशर्मा-

**कौशोऽयं कृमिजं सुवर्णमुपलाद् दुर्वाऽपि गोरोमतः**
**पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात्।**
**काष्ठादग्निरहेः फणादपि मणिगोर्पित्ततो रोचना**
**प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना॥**[2]

यथा - कीटैः पट्टवस्त्रस्य, उपलाद् च सुवर्णस्य, गोरोमतः दूर्वायाः, पङ्कजात् कमलस्य, समुद्रात् चन्द्रस्य, गोमयात् नीलकमलस्य, काष्ठाद् अग्नेः, सर्पफणाच्च मणेः उद्भवनं भवति तथैव स्वगुणानां विकासेन एव जने विद्यमानाः उत्तमाः गुणाः प्रकाशिताः भवन्ति न तु जन्मनः एव इमे गुणाः समुत्पद्यन्ते॥

**विद्यालयप्रशासनम् -**

अद्यत्वे नीतिनिर्धारकाः नेतारोऽपि बहुधा पुराकालिकराजवत् दुर्जनैरावृताः दृश्यन्ते। तस्मात् स्वकार्यसाधनार्थं विद्यालयप्रशासकः सावधानं प्रयतेत। उच्यते च पञ्चतन्त्रेऽपि-

**दुराराध्या हि राजानः पर्वता इव सर्वदा।**
**व्यालकीर्णाः सुविषमा कठिनाः दुष्टसेविताः॥**[3]

यथा विविधविषधरैर्युक्तः विषमैश्च सिंह-व्याघ्रादिपशुभिः व्यापृतः पर्वतः कष्टेन गम्यः भवति तद्वदेव राजानाः (नेतारः, सर्वकारीयाः अधिकारिणश्च) शठव्यक्तिभिः, कूटभाषिभिः दुष्टैश्च जनैः आवृतः कष्टेन एवम् आराध्यः भवति। तस्मात् शिक्षणप्रक्रियां सुसञ्चालयितुं स्वविद्यालयस्य आवश्यकतापूर्त्यर्थम् इमान् विषयान् मनसि निधायैव स्वकार्यं साधयेयुः प्रशासकाः।

**गुरुशिष्यसम्बन्धः-**

गुरुशिष्यसम्बन्धानां दृढताकारणाद् शिक्षणाधिगमप्रकिया तु सुसफला भवत्येव, छात्राः अपि शिक्षकेभ्यः विविधान् उत्तमोत्तमगुणान् गृहीत्वा स्वजीवनम् आदर्शमयं कर्तुं शक्नुवन्ति। तदर्थं शिक्षकः छात्रस्य शरीरेङ्गितान् अवलोक्य छात्रसमस्याश्च अवगत्य तत्सर्वं समीकर्तुं यतेत। उक्तञ्च -

**उदीरितोऽर्थः पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः।**
**अनुक्तमप्यूहति पण्डितो जनः परेगितज्ञानफला हि बुद्धयः॥ 1.44**

**आकारैरिगितैर्गत्या चेष्ट्या भाषणेन च।**

**नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः॥ 1.45**

अत्रायं शैक्षिकनिहितार्थः यत् यथा पशवः अश्वाः गजाश्चापि स्वामिनः इङ्गितमात्रम् अवगच्छन्ति, बुद्धिमान् जनस्तु अन्येषां सङ्केतमात्रमपि सम्यगवगच्छति। शिक्षकः मनोवैज्ञानिकगुणोपेतस्सन् छात्रस्य स्थितिं दृष्ट्वैव तद्विषयकसमस्याः अवगत्य तत्क्लेशनिवारणार्थं प्रयतते चेत् गुरुशिष्यसम्बन्धः दृढः तिष्ठति छात्रविकासश्चापि सम्भवति।

**वीरत्वादिगुणयुक्तः शिक्षकः**

शिक्षकः धैर्यवान् वीरश्च स्यात्। "शस्त्रे शास्त्रे च कौशलम्" इत्याभाणकस्य सार्थकता यथा छात्रे तथैव आदौ शिक्षके दृश्यते। मनस्थैर्ययुक्तश्शिक्षकः कदापि विपत्तिकालेऽपि क्लेशं नावाप्नोति। इदमेवोच्यते विष्णुशर्मणापि -

**यस्य न विपदि विषादः सम्पदि हर्षो रणे न भीरुत्वम्।**

**तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्॥**[4]

**भये वा यदि वा हर्षे सम्प्राप्ते यो विमर्शयेत्।**

**कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात्॥**[5]

अत्रायं भावार्थं यत् विपत्तिकाले यस्य विषादः, सम्पत्तिप्राप्तौ च महान् हर्षोऽपि न स्यात् रणे भीरुता च न भवति चेत् तादृशः विशिष्टजनः भुवनत्रयतिलकभूतः भवति। एवमेव शिक्षकः भीतिकाले सुखकाले चापि प्रत्येकमपि कार्यं विचिन्त्य विदधाति चेत् कदापि दुःखं सः नानुभवति। बहुधा शिक्षकाणां गृहक्लेशादिकारणात् कक्षायामपि मनश्चिन्तायाः प्रभावः दृश्यते।

**शान्तादिगुणयुक्तश्छात्रः**

किशोरावस्थायां शान्तादिगुणयुक्तः छात्रः एकाग्रस्सन् अध्याप्यमानविषयं सुष्ठु अवगन्तुं पारयति। अतः छात्रदशायामेव शान्त-धैर्यादिगुणाः सम्पादनीयाः इत्युच्यते पञ्चतन्त्रेऽपि -

**"पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः।**

**धातुषु क्षीयमाणेषु शमः कस्य न जायते॥**

**आदौ चित्ते ततः काये सतां सम्पद्यते जरा।**

**असतां तु पुनः काये नैव चित्ते कदाचन॥"**

अत्रायं शैक्षिकनिहितार्थः यत् सामान्यतः यः जनः किशोरावस्थायां युवावस्थायाञ्च यादृशः भवति सः आजीवनं तादृश एव तिष्ठति। यथा युवावस्थायां शान्तः जन एव वस्तुतः शान्त इत्युच्यते, वृद्धावस्थायान्तु शरीरशक्तिहीनताकारणात् तेन शान्तेन भाव्यमेव। एवमेव चित्ते एव प्रथमतया ज्येष्ठगुणाः आयान्ति ततः परमेव शरीरे। एतानि सर्वाणि लक्षणानि इदमेव द्योतयन्ति यत् छात्रः छात्रत्वकाले सम्यगधीत्य योग्यतां ज्ञानं विविधगुणान् च सम्पादयेत्।

**शिक्षणविधयः** -

समग्रमपि पञ्चतन्त्रं कथाकथनविधिना एव निरूपितं वर्तते। प्रतितन्त्रमपि विशिष्टकथोपकथनद्वारा विविधविषयाः सारल्येन विष्णुशर्मणा निरूप्यन्ते। तद्यथा–

**"अव्यापारेषु व्यापार यो नरः कर्तुमिच्छति।**
**स एव निधनं याति कीलोत्पाटीव वानरः॥"**[7] इति

अत्र करटकः निष्कारणं वृथाकार्यं कुर्वतां गतिविषये कीलोत्पाटिवानरस्य कथया स्वविषयं बोधयति। वस्तुतः कथामाध्यमेन गूढातिगूढोऽपि विषयः सरलतया छात्रव्यवहारे आनेतुं शक्यते, येन शिक्षणाधिगमप्रक्रिया अपि सुदृढा भवति, छात्राश्च सानन्दं शिक्षा प्राप्य लोकव्यवहारं ज्ञातुं शक्नुवन्ति इति। एवमेव स्वयं विनाशकारकाः वयमिति विषयस्य उपस्थापनार्थं विशिष्टकथाद्वारा विषयं बोधयति दमनकः मित्रभेदे। तद्यथा -

**जम्बूको हुडुयुद्धेन वयं चाषाढभूतिना।**
**दूतिका तन्तुवायेन त्रयो दोषाः स्वयङ्कृताः।**[8]

अत्रास्मिन् प्रसङ्गे जम्बूक-आषाढभूति-दूतिकानां विनाशकारणं ते स्वयमेवेति बोधनार्थं दमनकः इमां कथां श्रावयति। अनया उत्कृष्टकथया शिक्षणे विषयावबोधार्थं कथाकथनस्य महत्ता द्योतिता भवति।

वस्तुतः पञ्चतन्त्रस्य रचनायाः मूलमुद्देश्यम् अमरशक्तेः मूर्खपुत्राणां शिक्षणमासीत्। विष्णुशर्मणा पाठितकथारीत्या ते समेऽपि राजकुमाराः षन्मासाभ्यन्तरे एव विद्वांसः जाताः इति स्पष्टतयैव अस्माभिः ज्ञायते। विष्णुशर्मणा यत्कथामाध्यमेन ते राजपुत्राः अध्यापिताः ताः एव कथाः पञ्चतन्त्रग्रन्थे निबद्धाः सन्ति। साम्प्रतमपि ये अस्य ग्रन्थस्याध्ययनम् अध्यापनं च कुर्वन्ति ते सदा दुःखरहितं जीवनं जीवन्ति। तस्मादेव अस्य ग्रन्थस्य लोकप्रियता अधुना यावदपि विद्यते। यथा कथामुखस्यान्ते अस्य ग्रन्थस्य फलमप्युक्तमस्ति। तद्यथा -

**अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च॥**
**न पराभवमाप्नोति शक्रादपि कदाचन॥** कथामुखम् 10

पञ्चतन्त्रस्य कथाः सरलाः शिक्षाप्रदाश्च सन्ति। अधिकाधिकशिक्षाः अत्र पशुपक्षिणां कथामाध्यमेन प्रदत्ताः सन्ति, तेन युवानः शिशवश्च अत्यन्तं प्रीत्या आह्लादेन च पठन्ति। एकैकस्यापि कथायाः शिक्षा अतीवोत्तमा प्रदत्ता वर्तते। छात्राणां किं कर्तव्यम्, कस्मिन् विश्वासः कर्तव्यः, शिक्षकस्य उत्तमोत्तमप्रशासकस्य च के गुणाः वर्तन्ते, कानि च तेषां दायित्वानि, जीवनं कथं जीवनीयमित्यादीनां सर्वेषामपि तत्त्वानां प्रतिपादनं विष्णुशर्मणा अत्यन्तं सुष्टुरूपेण कृतं वर्तते पञ्चतन्त्रे। कदापि जीवने समागतायां समस्यायामपि धैर्यं न त्याज्यमित्येतादृशैः उपदेशैः पञ्चतन्त्रस्य लोकप्रियता महती वर्तते। यथोच्यते -

**त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचित्स्थितिमाप्नुयात्सः।**
**जाते समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्जुमेव॥1.346**

एतादृशैः सुभाषितैः सर्वेऽपि जनाः प्रेरिताः भवन्ति। उत्तमोत्तमसुहृदां स्वीकरणार्थं विशिष्टोपदेशकारणादपि ग्रन्थस्यास्य लोकप्रियता वर्तते। लोकाचारः कथं ज्ञेयः लौकिकव्यवहारश्च कथं कर्तव्यः इत्यपि विष्णुशर्मणा उत्तमोत्तमरीत्या प्रतिपादितमस्ति। गृहे समागतानामतिथीनां सत्कारक्रममपि सुष्टु बोधयति पञ्चतन्त्रम्। लोके बहुधा जनैः अविचार्य कार्याणि क्रियन्ते पश्चाच्च तस्य विषये दुःखं प्राप्यते अतः तादृशेऽपि प्रसङ्ग कथामाध्यमेन प्रेरयति पञ्चतन्त्रम्।

एकः शिक्षकः पञ्चतन्त्रमध्यापयित्वा समग्रामपि शिक्षां छात्राय प्रदातुमर्हति। यतः अत्र समग्रशिक्षणतन्त्रस्य तत्त्वानि समुपलभ्यन्ते। विष्णुशर्मवत् कथाकथनविधिना समग्रमपि शिक्षाशास्त्रं समाजशास्त्रं राजनीतिशास्त्रं च बोधयितुं शक्नोति शिक्षकः। अध्ययनात् पलायनं कुर्वतां राजकुमाराणां बोधनार्थम् अद्वितीया कथाशैली अत्राश्रिता विष्णुशर्मणा। या शैली वस्तुतः समग्रेणापि शैक्षिकजगता अवश्यमनुकरणीया एव। यद्यपि कथाकथनशैल्याः अद्भुतं निदर्शनं इदमेव पञ्चतन्त्रम् इति समग्रे विश्वेऽपि ख्यातमस्ति तथापि अत्र कथानां सूक्ष्मरूपेण अध्ययनं कुर्मश्चेत् प्रतिश्लोकं प्रतिकथानकं च तादृशाः अंशा दृग्गोचराः भवन्ति येषां शिक्षाजगति प्रयोगेन महत्परिवर्तनम् आनेतुं शक्येत। किञ्च शिक्षायाः वास्तविक लक्ष्यमपि सिद्धं भवेत्।

**संदर्भः–**


१. मनुस्मृतिः २/२०
२. पञ्चतन्त्रम्, 1.103
३. पञ्चतन्त्रम्, 1.68
४. पञ्चतन्त्रम्, 1.114
५. पञ्चतन्त्रम्, 1.119
६. पञ्चतन्त्रम्, 1.176, 177
७. पञ्चतन्त्रम्, 1.21
८. पञ्चतन्त्रम्, 1.173



(अनुसन्धात्री)
शिक्षाविभागः, जयपुरपरिसरः

# संस्कृतशिक्षकस्य शिक्षणकौशलेषु प्रश्नकरणप्रेरकवैविध्यकौशलयोः वैशिष्ट्यम्

सतीशकुमारशर्मा

**उपोद्घातः –**

शिक्षया शिक्षणेन वा छात्रस्य सर्वविधविकासो जायते। यच्च शिक्षणं विद्यालये दीयते। विद्यालयीयशिक्षणं शिक्षकः एव प्रयच्छति। सः भाविनागरिकान् निर्माति। यदि शिक्षकः कौशलवान् न भवति तर्हि छात्राणां विकासोऽपि न सम्भवति। छात्राय मानसिक-शारीरिक-सांस्कृतिकादि-विकासः शिक्षकमवलम्ब्य तिष्ठति। कुशलशिक्षकः छात्राणां स्थिति, रुचि, स्तरम्, आवश्यकताञ्च अवलोक्य स्वकौशलं प्रयुङ्क्ते। एतादृशकौशलेन छात्रेषु स्फूर्तिः वर्धते। एवञ्च ते पाठोन्मुखिनः भवन्ति। लोके प्रभाव्यध्यापकः सः एव भवति यः विषयज्ञानेन साकं सम्प्रेषणकौशलज्ञोऽपि स्यात्। यथा-

**शिलष्टाक्रिया कस्यचिदात्मसंस्था**
**सङ्क्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां**
**धुरि प्रतिष्ठापयितव्य एव॥** (मालविकाग्निमित्रम् -१/१६)

**प्रश्नकरणकौशलम्। प्रश्नकरणकौशलस्य समग्रस्वरूपम् -**

**परिभाषा, अर्थश्च -**

'प्रच्छ'धातोः भावे नङ् प्रत्यये प्रश्नः इति रूपं सिध्यति। 'अविज्ञातप्रवचनं प्रश्नः' इत्यभिधीयते। 'कथनाय प्रेरणे' इत्यमरः। मस्तिष्कं प्रबोधयितुं, चिन्तनशक्तिं जागरयितुम्, अवधानं रक्षितुञ्च उपयुक्तं शाब्दिकमाध्यममेव प्रश्नः' इति गम्भीरं प्रश्नं पर्यभाषत।

It keep six honest serving man
They taught me all I know
There names are What and Why and When
And How and Where and Who (Rubyard Kipling)

अर्थात् - शिक्षणे वयं षडत्ययान् प्राप्तवन्तः। एभिरेव शिक्षणसदृशान्तःक्रिया साधुरूपेण प्रचलति। तानि सन्ति - किम्, कथम्, कदा, किमर्थम्, कुत्र, कः/का इति।

वस्तुतः एतैः शब्दैः एव कथं न केवलं शिक्षणे एव, अपि तु सर्वत्र जीवने व्यवहारे च सर्वं ज्ञातुं प्रभवामः।

**प्रश्नकरणार्थमपेक्षितयोग्यताः -**

१. पाठ्यविषये सम्पूर्णाधिकारः

२. प्रश्नरचनापाटवम्

३. आत्मविश्वासः

**प्रश्नप्रयोजनानि -**

१. छात्रपूर्वज्ञानोपलब्धिपरीक्षणम् - अधिकाध्ययनाय प्रेरणा च

२. अध्यापनसाफल्यस्य मूल्याङ्कनम्, छात्रेषु मूल्याङ्कनाभ्यासानां निर्माणञ्च

३. अभिरुचिनिर्माणम्, विचारोद्बोधनञ्च

४. पाठ्यांशस्य पुनरालोचनम्

५. बौद्धिकशक्तीनां विकासः

**प्रश्नकरणकौशलप्रक्रिया -**

प्रश्नकरणकौशले संरचना, प्रयोगश्चेति प्रक्रियाद्वयमास्ते। प्रश्नसंरचना-प्रयोगावत्र प्रस्तूयेते।

**१. संरचना -**

प्रक्रियेयं प्रश्ननिर्माणसम्बद्धा। अस्यां चत्वारो घटकास्सन्ति। घटकाश्च एवं सन्ति - १. व्याकरणदृष्ट्या शुद्धता, २. सम्बद्धता, ३. स्वरूपसंक्षिप्तता ४. विशिष्टता चेति।

**१. व्याकरणदृष्ट्या शुद्धता** - प्रश्नः व्याकरणदृष्ट्या शुद्धो भवेत्। अशुद्धप्रश्नः छात्रेषु सन्देहमुत्पादयति। फलतः प्रश्नार्थमनवगच्छन्तस्ते तदर्थावबोधार्थमेव अधिकसमयं स्वीकुर्युः।

**२. सम्बद्धता** - प्रश्नाः पाठ्यविषयेण शिक्षणोद्देश्यैश्च सम्बद्धाः भवेयुः। यस्मिन् प्रश्न अज्ञातपदानि अपरिचितपरिभाषाश्च न भवन्ति सोऽपि प्रश्नः सम्बद्धः इत्युच्यते। यद्यध्यापकः विषयसङ्गतान् प्रश्नान् पृच्छेत्तर्हि बालाः सद्यः तं प्रश्नं समादध्युः। असम्बद्धप्रश्नेन कालस्य अपव्ययो भवति, छात्रावधानभङ्गोऽपि जायते ॥

**३. स्वरूपसंक्षिप्तता** - बालकानामवधानविस्तारो न्यूनो भवति। अतः प्रश्ने अत्यन्तावश्यानि पदान्येव स्युः येन बालः शीघ्रं तमवगन्तुं शक्नुयात्, तदुत्तरचिन्तनावसरे सम्पूर्णप्रश्नं स्मर्तुं च प्रभवेत्। केचन शिक्षकाः प्रश्नस्य आद्यन्तयोः अनावश्यकशब्दान् अनपेक्षितवाक्यानि वा योजयन्ति। यथा -

अ. अस्यां कक्ष्यायां कः वक्तुं शक्नोति यत् रघुवंशं केन रचितमिति ?

आ. ये एतत्प्रश्नस्य उत्तरं दातुं शक्नुवन्ति ते स्वहस्तानुत्थापयन्तु

इ. अस्तु इदानीं वदन्तु.........

**४. विशिष्टता** - एकेनैव समाधानेन युक्तः प्रश्नः विशिष्टः इति वक्तुं शक्यते। यस्योतरं विपुलमनिश्चेतञ्च सः प्रश्नः एतद्भिन्नः। यथा- महाभारतविषये भवान् किं जानाति? एतत्प्रश्नस्य महाभारतकथा, तद्वर्णनशैली, तत्पात्रचित्राणामित्यादिभिस्सम्बद्धानि बहूत्युत्तराणि भवितुमर्हन्ति।

एतादृशप्रश्नस्य केनोत्तरेण भाव्यमित्यजानन् छात्रः तदुत्तरनिश्चयये एवाऽसमर्थो जायेत। अतस्सः उत्तरनिश्चयार्थं तच्चिन्तनार्थञ्च बहुकालमपेक्षेत। एवमेतादृशप्रसङ्गेषु कालस्त अपव्ययो जायते। एवम्भूतैः प्रश्नैः प्रश्नकरणे प्रवाहपूर्णताऽपि नश्यति।

**२. प्रयोगः**

प्रश्नकरणकौशलप्रसङ्गेऽस्मिन् प्रयुक्तं प्रयोगपदं प्रश्नकरणपद्धतिं परिचाययति। प्रयोगस्य १. वेगः, २. कण्ठस्वरः, ३. विरामः, ४. वितरणम् इति चत्वारो घटकास्सन्ति।

**१. वेगः** – प्रश्नकरणे वेगः तत्रोपयुक्तसमयं सूचयति। शिक्षकः नातिवेगं नातिशनैश्च प्रश्नान् पृच्छेत्। शनैश्शनैः पृष्टाः प्रश्नाः प्रश्नकरणे प्रवाहपूर्णतां नाशयन्ति। तेन कालापव्ययोऽपि भवति।अत्यन्तवेगेन समुचितविरममदत्वा पृष्टप्रश्नाः उत्तरदाने क्लेशकराः। अतिवेगेन पृष्टप्रश्नं प्रायश्छात्राः कठिनमिति चिन्तयन्ति। ईदृशप्रश्नावबोधेऽपि तैः बहुकालोऽपेक्ष्यते। फलतः प्रश्नकरणे प्रवाहपूर्णता नश्यति। अतः प्रश्नकरणवेगः सर्वदा छात्रावबोधक्षमतानुरूपः उत्तरदानाय अपेक्षितचिन्तनस्तरस्य अनुकूलश्च भवेत्। सरलः अधिकचिन्तनमन्तरा केवलं स्मृत्वा उत्तरयोग्यः प्रश्नः वेगेन प्रष्टव्यः। विभिन्नविचारसंश्लिष्टं चिन्तनापेक्षमुत्तरं यस्य प्रश्नस्य सः प्रश्नः सामान्यवेगेन प्रष्टव्यः। छात्रयोग्यतास्तरं विषयक्लिष्टतां चावगम्य शिक्षकैः प्रश्नकरणवेगो निश्चेयः।

**२. कण्ठस्वरः** – प्रश्नकरणे कण्ठस्वरः प्रश्नश्रवणयोग्यतां प्रश्नकरणपद्धतिञ्च ध्वनयति। कक्ष्यायां स्थिताः सर्वेऽपि छात्राः प्रश्नः कः? किं तस्य समाधानं, किंस्तरीयं चिन्तनं तत्समाधानाय अपेक्षितमिति यथा अनुमानं कुर्युः तथा तादृशकण्ठस्वरेण प्रश्नाः प्रष्टव्याः। प्रश्नकरणे कण्ठस्वरपरिवर्तनमत्यावश्यकम्। प्रश्न केषाञ्चित् पदानां गम्भीरस्वरेणोच्चारणं प्रश्नस्य विशिष्टोद्देश्यं तदुत्तराय अपेक्षितं चिन्तनस्तरञ्च सूचयति। विशिष्य प्रश्नसूचकशब्दोच्चारणे कृतेन स्वराघातेन प्रश्नार्थं सुलभतया ग्रहीतुं शक्यः। अनावश्यकतया असमुचितरीत्या च स्वरं परिवर्त्य पृष्टप्रश्नाः छात्रेषु अध्ययनस्तरचिन्तनशक्त्योः विकासे अनुपयुक्ताः भवन्ति।

**३. विरामः** – प्रश्नकरणानन्तरं तदुत्तरचिन्तनाय शिक्षकेण धृतस्य मौनस्य कानिचित् क्षणानि विरामः इति वक्तुं शक्यते। विरामोऽयं प्रश्नस्य उचितोत्तरदानाय अपेक्षितसमयं कल्पयति। एषः छात्राणां चिन्तनस्तरं तत्प्रकारञ्च निर्णतुं चिन्तनशक्तिं प्रेरयितुञ्चावश्यकः। सम्यक् विमृश्य देयं दीर्घञ्च समाधानं निष्कासयितुं दीर्घविराम, लघूत्तरं निष्कासयितुं लघुविरामश्च देयः।

शिक्षकाः प्रायः छात्रचिन्तनशक्तेः प्रेरणायै अत्यावश्यकविरामस्य तत्प्रकाराणाञ्च प्रयोगविषये न श्रद्दधति। एतदत्रावधेयं यत् विरामस्य लाघवदैर्घ्यं प्रश्नसंरचनां तत्स्तरं चाधारीकृत्य भवेताम्। सामान्यान् निम्नस्तरीयान् च प्रश्नानुत्तरयितुं लघुविरामः, क्लिष्टप्रश्नानुत्तरयितुं दीर्घविरामश्च देयः।

**४. वितरणम्** – प्रश्नः सम्पूर्णकक्ष्यामुद्दिश्य प्रष्टव्यः न तु छात्रविशेषमुद्देश्य। छात्रविशेषमुद्देश्य प्रश्नकरणेन पृष्टछात्रः एव उत्तरयेदिति विचिन्त्य अन्यछात्राः प्रश्नोत्तरं न चिन्तयेयुः। सम्पूर्णकक्ष्यामुद्देश्य

प्रश्नकरणेन नैके लाभास्सन्ति। सर्वाऽपि कक्ष्या सावधाना जायते। प्रत्येकोऽपि बालकः, शिक्षकः आत्मानमुत्तरदानाय उत्थापयेदिति विचिन्त्य उत्तरचिन्तने मग्नो जायते। एवः छात्रास्सर्वेऽपि प्रत्येकप्रश्नस्य उत्तरं चिन्तयन्तः तत्कथनजन्य-साफल्यानुभूतिं प्रानुवन्तः शिक्षणे अभिरुचि धारयेयुः। छात्रविशेषेण उत्तरे दीयमाने सति अन्यछात्राः तदुत्तरं विमर्शनात्मकदृष्ट्या विश्लेषयन्ति।

**प्रेरकवैविध्यकौशलम्**

कक्ष्याध्यापने छात्रानधानतैकता प्रमुखसमस्या। छात्रानवधानतायामनेककारणानि भवन्ति।

शिक्षणे वैविध्यकल्पनं छात्राध्यानाकर्षणे तद्रक्षणे च बहूपकरोति। वैविध्यञ्च प्रेरकपरिवर्तनेन सम्भवति। प्रेरकपरिवर्तनं ध्यानाकर्षकमिति विदितचरमेव। गतिशीलं वस्तुस्थिरापेक्षया शीघ्र ध्यानमाकर्षति। गतिः स्वयमेव परिवर्तनकारणम्। विक्रेतारः स्ववस्तु- विज्ञापकं पट्टे गतिशीलतया विद्युता प्रकाशयन्ति। अत्र निदानं जनावधानाकर्षणमेव। इत्थं प्रेरकपरिवर्तनं ध्यानाकर्षकमिति फलितम्।

**शिक्षणकौशलार्थः**

पूर्वोक्तरीत्या कक्ष्याशिक्षणे छात्रावधानप्राप्त्यै तत् स्थिरीकरणाय च प्रयोज्यानां शिक्षणव्यवहाराणां समूहस्य नाम प्रेरकवैविध्यप्रस्तुतिकौशलमिति।

**कौशलघटकाः**

कौशलघटकाः एवं सन्ति -

१. कण्ठस्वरपरिवर्तनम्

२. केन्द्रीकरणम्

३. चेष्टाः

४. पारम्परिक-क्रियाशैलीपरिवर्तनम्

५. मौनम्

६. श्रव्य-दृश्यमाध्यमपरिवर्तनम्

७. छात्राणां शारीरिकभागग्रहणम् इति।

इमे घटकाः क्रमशोऽत्र विविच्यन्ते।

**१. कण्ठस्वरपरिवर्तनम् -**

कक्ष्यायां शिक्षकस्य शिक्षणव्यवहारः अधिकतया शाब्दिको भवति। अतः शिक्षकस्य कण्ठस्वरः कक्ष्याशिक्षणे प्रमुखस्थानमावहति। बहुकालं यावत् समानवेगस्वराभ्यां कृतं पाठनं नीरसं भवति।

अतः अध्ययनाभिमुखं छात्रध्यानाकर्षणाय तत्स्थिरीकरणाय च शिक्षकः सदैव प्रयतेत। कुशलाध्यापकः स्वीयकण्ठस्वरस्य औचित्यपूर्णैः विभिन्नपरिवर्तनैः छात्रध्यानमाकर्षति।

सरलांशानां पाठने स्वरे वेगः उपयुक्तो भवति। अत्र मन्दता पाठने नीरसतामानयति।

दुरवबोधांशाः शनैः पाठनीयाः। महत्त्वपूर्णांशव्याख्याने स्वरे उच्चवेगस्स्यात्। हठात् वेगं न्यूनीकृत्य शनैः पाठनेन छात्राः पाठ्यांशानां प्रामुख्यमवगच्छन्ति। उत्साहजनकाः उत्तेजकराः सुखावहाः अंशाः उच्चैः स्वरेण यदि पाठ्येरन् तर्हि ते प्रभावकराः भवन्ति।

**२. केन्द्रीकरणम् -**

**अ. शाब्दिककेन्द्रीकरणम् -**

मौखिकरूपेण क्रियमाणं केन्द्रीकरणं शाब्दिककेन्द्रीकरणमित्युच्यते। इदं नीचैर्दत्तकथनैः क्रियते।

i. अत्र पश्यन्तु।

ii. विषयोऽयमतिमहत्त्वपूर्णः, अतः सावधानं श्रोतव्यः।

iii. एषु सर्वेऽप्यंशेष्वयं प्रमुखः।

iv. अत्र विशेषध्यानं कुर्वन्तु।

**आ. चेष्टात्मककेन्द्रीकरणम् -**

पाठ्यमानांशानाम् अभिमुखं छात्रावधानाकर्षणार्थं शिक्षकेण यदा चेष्टाहावभावादयः उपयुज्यन्ते तदैतत् चेष्टात्मककेन्द्रीकरणमित्युच्यते। उदाहरणम् -

i. शिक्षकः किमपि शिक्षणोपकरणं प्रदर्य तत्र विशिष्टं स्थानं पूरयति।

ii. श्यामपट्टे रेखाङ्कितचित्रं लिखितविषयं वा सावधानं द्रष्टुं सूचीदण्डेन सूचयति, तत्स्थाने ताडयति वा।

**इ. शाब्दिकचेष्टात्मक (मिश्रित) केन्द्रीकरणम् -**

आकार-परिमाणादीनां ज्ञापनाय, भावप्रकटनाय शिक्षकेण यद शाब्दिककथनचेष्टाहावभावाः समकालमेव प्रयुज्यन्ते तदैतत् शाब्दिकचेष्टात्मककेन्द्रीकरणमिति कथ्यते। उदा - शिक्षकः मानचित्रादिषु प्रान्तांशादीन् प्रदर्शयन् 'अत्र सावधानं पश्यन्तु' इति निर्दिशति।

**३. चेष्टाः -**

शिक्षणे वैविध्यमानेतुं तद्वारा छात्रावधानमवाप्तुं चेष्टाः अत्यन्तोपयुक्ताः भवन्ति। मुखभावभङ्ग्यः, भ्रूभङ्गशिरो, नेत्र-हस्तचालनानि उपयुक्तचेष्टासु प्रधानाः॥

**४. अन्तःक्रिया-शैलीपरिवर्तनम् -**

शिक्षणमेका पारस्परिक क्रिया। कक्ष्यायां छात्राध्यापकयोर्मध्ये संज्ञापनं प्रश्नोत्तरमाध्यमेन नैरन्तर्येण भवति। इदमेव संज्ञापनं पारस्परिकक्रियेत्युच्यते। क्रियेयं शाब्दिकाशाब्दिकभेदेन द्विधा। शिक्षकेण छात्रैर्वा चेष्टाभिः क्रियमाणं संज्ञापनमशाब्दिकमिति सम्भाषणादिमौखिकरूपेण क्रियमाणं शाब्दिकमिति च अभिदीयते।

इत्थं कक्ष्यायां पारस्परिकक्रियायां तिस्रः शैल्यो भवितुमर्हन्ति।

i. छात्रशिक्षकयोर्मध्ये पारस्परिकक्रिया

ii. शिक्षकछात्रविशेषयोर्मध्ये

iii. छात्राणां मध्ये

एतासु शैलीषु एकस्याः एव शैल्याः दीर्घकालानुवर्तनं शिक्षणे नीरसतामुत्पादयति। तद्वारा छात्रेषु शिक्षणवैमुख्यम् अनवधानता च जायते। छात्रावधानताप्राप्त्यै तद्रक्षणाय च शिक्षकः पारस्परिकक्रियाशैलीषु वैविध्यमानयेत्।

**५. मौनम् -**

मौनमप्येतत्कौशलघटकेष्वन्यतमो घटकः। भाषण, व्याख्यानादि-मध्ये विरामः निश्शब्दता वा अत्र मौनत्वेनात्र गृह्यते। मुख्यांशकथनात्पूर्वं धृतं मौनं तदंशं प्रति छात्रध्यानमाकर्षति, तन्महत्वञ्च ज्ञापयति। प्रायः क्षणत्रयं यावत् धृतं मौनं प्रभावकारि भवति।

**६. श्रव्य - दृश्यमाध्यमानां परिवर्तनम् -**

कक्ष्याशिक्षणे शिक्षकः पाठ्यविषयज्ञानं छात्रेषु सङ्क्रमयितुं श्रव्य-दृश्यमाध्यमे उपयुक्ते। चित्र मानचित्र-श्यामपट्टलेखनादि-शिक्षणोपकरणोपयोगरूपपक्षः दृश्यमाध्यमेन चात्र गृह्यते। ज्ञानसङ्क्रमणार्थम् एकस्यैव माध्यमस्य दीर्घकालप्रयोगः छात्रध्यानमपकर्षति। अतः छात्रावधानमाकर्षणाय तत्स्थापनाय च शिक्षकः आत्मनोपयुज्यमानमाध्यमयोः वैविध्यमानयेत्। श्रव्य दृश्यमाध्यमयोः द्वयोः युक्तियुक्तेन परिवर्तनेन छात्रावधानसम्पादनं तद्रक्षणञ्च सुकरं भवति।

**७. छात्राणां शारीरिकभागग्रहणम् -**

छात्राः तेषु पाठेषु अधिकाभिरुचिं प्रदर्शयन्ति येषु तेषां शारीरिकभागग्रहणाय अवसराः लभ्यन्ते। शारीरिकभागग्रहणेन न केवलं पाठ्यविषयकाभिरुचिर्जागर्ति प्रत्युतशारीरिकी विश्रान्तिरपि जायते। शारीरिकरूपेण भागग्रहणञ्च श्यामपट्टलेखन-अभिनयादिभिः भवितुमर्हति।

**सन्दर्भग्रन्थसूची-**

१. शर्मा च.ल.न. सिंह फतह - संस्कृतशिक्षणम् नवीनप्रविधयश्च, भारतमुद्रा प्रकाशनम्, त्रिसुर, केरला

२. मित्तल संतोष - संस्कृत शिक्षणम्, नवचेतना प्रकाशनम्, जयपुर

३. मिश्ररमाकान्त-शैक्षिक प्रविधिः

४. शास्त्री कलानाथ - आधुनिक संस्कृत की गद्यविधाएँ, राष्ट्रिय संस्कृत साहित्य केन्द्र, जयपुरम्।

5. विश्वासः - कौशलबोधिनी, संस्कृतभारती, नवदेहली।

शोधच्छात्रः

जयपुरपरिसरः, जयपुरम्

# संस्कृतशिक्षणोद्देश्यानि : एकं चिन्तनम्

डॉ. प्रतिमा शर्मा

**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।**
**एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्॥** [१]

प्राप्तव्यार्थे उद्देश्यशब्दस्य प्रयोगः क्रियते। शब्दोऽयम् उत् उपसर्गात् तुदादिगणस्य दिश–अतिसर्जने इति धातोः ण्यत्–प्रत्यये निष्पद्यते। अतिसर्जनं नाम त्यागः दानं च इति। पारम्परिकरूपेण पश्यामश्चेत् शिक्षायाः उद्देश्यं बन्धनेभ्यः मुक्तिः एवेति, यतो हि जीवनस्य लक्ष्यं केवलं कैवल्यमेव स्वीकृतम्। यथा–

**तत्कर्म यन्न बन्धाय, सा विद्या या विमुक्तये।**
**आयासायपरं कर्म, विद्यान्या शिल्पनैपुणम्॥** [२]

पारम्परिकरूपेण पश्यामश्चेत् शिक्षायाः उद्देश्यं बन्धनेभ्यः मुक्तिः एव मता, यतो हि जीवनस्य लक्ष्यमपि केवलं कैवल्यपदप्राप्तिः एव स्वीकृतम्। यथोक्तम् –

**जीवः शिवः शिवो जीवः स जीवः केवलः शिवः।**
**पाशबद्धः स्मृतो जीवः पाशमुक्तः सदाशिवः॥** [३]

एवं हि जीवतत्त्वात् शिवतत्त्वं प्रति गमनमेव सर्वविधज्ञानस्य उद्देश्यं लक्ष्यं वा वक्तुं शक्यते। उक्तं हि यथा -

**दुर्जनः सज्जनो भूयात्, सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यः मुक्तश्चान्यान् विमोचयेत्॥**

अर्थात् यः दुर्जनः अस्ति, सः सज्जनः भवेत्। यः सज्जनः अस्ति सः शान्तः भवेत्। यः शान्तः अस्ति सः बन्धनेभ्यः मुक्तः भवेत्। यः मुक्तः अस्ति, सः अन्यान् बन्धेभ्यः विमोचयेत्। एवं हि ज्ञायते यत् परम्परागतरूपेण मुक्तिमात्रमेव सीमितं जीवनलक्ष्यं नास्ति, अपितु अन्येषाम् अज्ञानात् मुक्त्यर्थं यत्नकरणमपि मुमुक्षूणां कर्तव्ये एव कथितम्। स्वयं ज्ञानं प्राप्य अन्येभ्यः दातुं बहुत्र उक्तमस्ति, यथा हि–

**अधीतिबोधाचरणप्रचारणैः, दशाश्चतस्रः प्रणयन्नुपाधिभिः।**

अर्थात् आदौ ज्ञानस्य अध्ययनं करणीयम्, ततः अधीतस्य ज्ञानस्य विशेषार्थस्य बोधः करणीयः। ततः परम् अवबुद्धस्य ज्ञानस्य आचरणं करणीयम्। अन्ते च आचरितस्य ज्ञानस्य प्रचारः करणीयः।

ज्ञानं तावत् जीवनलक्ष्यं भवतु। तत् लक्ष्यं प्राप्तुं तात्कालिकानि उद्देश्यानि निर्मीयन्ते। सामान्यतः लक्ष्यम् उद्देश्यञ्च इत्यनयोः प्रयोगः एकस्मिन्नेव अर्थे क्रियते, किन्तु एतयोः महान् भेदः अस्ति। यथा यदि कश्चित् जीवने शिक्षकरूपेण आत्मानं कल्पयति, तर्हि तेन क्रमशः दशमी, द्वादशी, स्नातकोपाधिपरीक्षा, शिक्षाशास्त्रोपाधिपरीक्षा इत्येवंक्रमेण कार्याणि कर्त्तव्यानि। उदाहरणेऽस्मिन् एतासां परीक्षाम् उद्देश्यरूपेण

चिन्तनं भवितुमर्हति। प्राप्ते उद्देश्ये अन्यस्य उद्देश्यस्य प्राप्तिः क्रियते। एवं हि लक्ष्यस्य प्राप्तिः उद्देश्यानां प्राप्तौ आश्रिता भवति।

एवं हि स्पष्टं यत् उद्देश्यानां प्राप्तिं विना लक्ष्यस्य प्राप्तिः भवितुं नार्हति। आधुनिकयुगे अधिगमस्य उद्देश्यानि निर्धारयितुं प्रथमतः अमेरिकादेशे सुनियोजितरूपेण प्रयासः जातः। एतदर्थं शिकागो विश्वविद्यालयस्य आचार्यः बेंजामिन सेमुअल ब्लूम-महोदयस्य अध्यक्षतायाम् एका समितिः रचिता। १९५६ तमे वर्षे समित्याः प्रतिवेदने अधिगमस्य उद्देश्यानाम् एकं वर्गीकरणं प्रस्तुतम्। वर्गीकरणमेतत् **अधिगमस्य ब्लूम-वर्गीकरणम्** (Bloom's Taxonomy of Learning Domains) इति नाम्नैव प्रसिद्धमभवत्। अस्मिन् वर्गीकरणे शैक्षिकोद्देश्यानि त्रिधा विभक्तानि, यथा हि –

१. ज्ञानात्मकोद्देश्यानि (Cognitive) –मानसिककौशलानि प्राप्तुम्।
२. भावात्मकोद्देश्यानि (Affective) –भावनात्मककौशलानि प्राप्तुम्।
३. मनःप्रेरणात्मकानि (Psychomotor) –शारीरिककौशलानि प्राप्तुम्।

आभारतं संस्कृतशिक्षायाः सर्वेक्षणं कृत्वा प्रथमसंस्कृताऽऽयोगेन स्वप्रतिवेदनस्य संस्कृतशिक्षा इति शीर्षकाङ्किते पञ्चमे अध्याये ३४ तमे परिच्छेदे (पृ.सं. १०७) कथितं यत् संस्कृतशिक्षायाः द्वे प्रणाल्यौ (Two Systems of Sanskrit Education) वर्तेते। प्रथमप्रणाल्यां पाठशालाः सन्ति, यत्र न्यूनाधिकरूपेण प्राचीनकालिकरीत्या परम्परागतविधिभिः संस्कृतं पाठ्यते। द्वितीयप्रणाल्यां पाश्चात्त्यशिक्षाप्रणालीमनुसरन्तः विश्वविद्यालयाः महाविद्यालयाश्च सन्ति, यत्र संस्कृतं विशेषविषयरूपेण आधुनिकपद्धत्या पाठ्यते। अग्रिमे ३५ तमे परिच्छेदे (पृ.सं. १०८) कथितं यत् उभयोः अपि शिक्षाप्रणाल्योः गुणाः दोषाश्च सन्ति। परम्परागतशिक्षाप्रणाल्याः त्रयः गुणाः उक्ताः –

१. उत्तमतया संस्कृतनिष्ठज्ञानस्य अधिग्रहणं भवति।
२. सामाजिकदायित्वनिर्वहनाय सज्जीकरणम्।
३. चारित्र्यनिर्माणम्

स्पष्टतः परम्परागतपद्धतिः संस्कृतशास्त्रेषु निहितज्ञानस्य गहनं समग्रञ्च अध्ययनं कृत्वा ज्ञानस्य कण्ठस्थीकरणस्य विशेषताम् आवहति। ततः अग्रे ३८ तमे परिच्छेदे उक्तं यत् परिवर्तनशीले युगे पारम्परिकपद्धत्याः गुरुकुलसदृशं शैक्षिकपार्थक्यं पुरस्सरं कठिनजीवनचर्या सर्वेषां कृते सरलं न प्रतीयते, अतः कालक्रमेण पाठशालापद्धतौ आकर्षणे शैथिल्यं दृश्यते।

ततः ४१ तमे परिच्छेदे (पृ.सं. ११०) कथितं यत् पाठशालापद्धतेः विकल्परूपेण आधुनिकपद्धतेः विकासः जातः, किन्तु तस्याः अपि गुणदोषाः सन्ति। अभिनवविचाराणां समयोजनदृष्ट्या आधुनिकपद्धतिः अनुकूलतरा वर्तते। आधुनिकपद्धतौ पठितवतां दृष्टिः अन्तःशास्त्रीयाध्ययनकारणात् शैक्षिनुसन्धाने व्यापिका भवति। आधुनिकशिक्षाधारायां संस्कृतं सामान्यशिक्षायाः अङ्गरूपेण भवति। अत्र संस्कृतं पठित्वा अध्येतारः संस्कृते निहितं ज्ञान-विज्ञानं विश्वस्मै ज्ञापयितुं प्रभवन्ति। किन्तु अस्याः पद्धत्याः अपि केचन लोपाः सन्ति।

अत्र परम्परागतशिक्षणपद्धतिवत् गुरुशिष्यसम्बन्धः प्रगाढः न भवति। आधुनिकशिक्षापद्धतिः यन्त्रवत् निष्प्राणा भवति, येन केवलं यन्त्राणां निर्माणमेव क्रियते। मानवीयमूल्यानाम् अभ्यासाय अत्र महान् अवसरः न भवति। सहयोगस्य स्थाने अत्र स्पर्धायाः प्राचुर्यं दृश्यते। आधुनिकशिक्षापद्धतिमाश्रित्य अध्येतारः आत्मनः सांस्कृतिकनिधौ श्रद्धाप्रदर्शने सङ्कोचमनुभवन्ति।

आयोगस्य प्रतिवेदनस्य ५९ तमे परिच्छेदे (पृ.सं. ११७) कथितं यत् उभयोः प्रणाल्योः गुणानां कारणतः उभरयोरेव स्थानं शिक्षातन्त्रे भवेत्। अपि च कक्षास्तरानुसारेण प्रथमा (Lower Secondary), मध्यमा (Higher Secondary), शास्त्री (B.A.) और आचार्य (M.A.) इत्येतेषां पाठ्यक्रमाणाम् अध्ययनस्तरदृष्ट्या मानकतादृष्ट्या एकरूपता भवेदिति। यदि एवं प्रकारेण उद्देश्यानि मनसि निधाय संस्कृतस्य पुस्तकानि रचितानि स्युः, शिक्षकाश्च यदि एतादृशानि उद्देश्यानि निर्धार्य शैक्षिकोपलब्धये व्यावसायिकमूल्यानि समाधृत्य यत्नं विदध्युस्तर्हि अवश्यमेव संस्कृतशिक्षणे गुणवत्ता सम्पत्स्यते इति शम्।

**सन्दर्भाः**

१. कुमारिलभट्टकृतं श्लोकवार्तिकम्, ५/१५/५५
२. कुलार्णवतन्त्रम्, १/११३
३. कुलार्णवतन्त्रम्, ९/४१
४. नैषधीयचरितम्, ४

प्रधानाचार्या,
राजकीयादर्श-उच्चमाध्यमिकविद्यालयः,
दूदका, घाटोल, बांसवाडा

